# ॥ शतपथब्राह्मणम् ॥

। शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् ।

## श्रीमत्सायणाचार्यकृत-'वेदार्थप्रकाश'-नामभाष्येण सहितम् ।



वङ्गदेशीयासियाटिकसमितेरनुमत्या व्ययेन च,

सामश्रमीतिप्रथितनामाचार्य्यसत्यव्रतशर्म्मणा

यथामति संशोध्य सटीक्य च सम्पादितम् ।

॥ ५ भा० । ५ का० ॥

( पञ्चमकाण्डात्मकः पञ्चमो भागः )

कलिकाता-राजन्वत्याम् ,

१८६४-संवत्सरायां सत्ययन्त्रेण यन्त्रतो मुद्रितम् ।

# ॥ अथ सम्पादकोक्तिः ॥

---

अथ यद्यपि तृतीयकाण्डानन्तरं क्रमप्राप्तं चतुर्थकाण्डसम्पादन मेव युक्तम्, परं चतुर्थकाण्डीयसायणकृतभाष्यस्यैक मपि विशुद्धादर्शपुस्तक मद्य यावन्नास्मद्धस्तगत मित्यनन्यगत्या क्रम मुल्लङ्घ्यापि पञ्चम मेव काण्डं समपादि।

तस्यैतत्पञ्चमकाण्डस्य पाठान्तरादिसम्पादनार्थं सङ्गृहीताना मादर्शपुस्तकाना मेवं नामधेयानि कल्पितानि—

क = १७९० सं०-लिखितं २८-पत्रात्मकं (क० सं० का०) पूर्णम्।

ख = १७४७ सं०-लि० ११९-पत्रात्मकं (क० सं० का० ) पूर्णम्।

ग = डा०-वेबर-सम्पादितम् ( ई० १८४८-मुद्रितं ) पूर्णम्।

घ = आजमेर-प्रकाशितम् (सं० १९५८ मुद्रितम् ) पूर्णम्।

ङ = ४१-पृष्ठात्मकम् आस्यायितिकसमितिपुस्तकं पूर्णम्।

च = १२१-पत्रात्मकम् आस्यायितिकीय मपरम् पूर्णम्।

छ = तत्रस्थ मेव ग०-ह०-पुस्तकम् ६७-पत्रात्मकं पूर्णम्।

ज = डा०-वेबरेण यथावृत्त्यात्वित्स सम्पादितम् (ई० १८४८-मु०)।

एष्वष्टस्वादर्शपुस्तकेषु प्रथमचतुष्कं मूलस्यापरचतुष्कं भाष्यस्येति॥

एतदेव काण्डं सव इत्यभिधीयते। सवशब्दार्थस्त्विह मूले एवैवं सूचितः—"सोऽस्मै सव मनुमन्यते तेनानुमतः सूयते"-इति २ प्र० २ ब्रा० ११ क०। "'सः' आवेदितो ज्ञापितः प्रजापतिः 'अस्मै' सुन्वते 'सवम्' अभिषेकम् अनुमन्यते, 'तेन' प्रजापतिना 'अनुमतः' अनुज्ञातः 'सूयते' अभिषिच्यते"-इति

तत्र सा० भा० (२५३ पृ०)। "सूयते ईश्वरत्वेनाभिषिच्यते एभिरिति सवाः एकाहविशेषाः"–इति तै० ब्रा० २. ७. १. १ भाष्ये च सायणः। "वरुणसवो राजसूयम्, अग्निसवश्चित्यः"–इत्यस्य (तै० सं ५. ६. २. १.) व्याख्यानावसरे च स्पष्ट मिद मुक्तं तेन— "सूयते अभिषिच्यते यजमानः अत्र इत्यभिषेकयुक्तो यज्ञः सवः" –इति। तैत्तिरीयब्राह्मणे द्वितीयकाण्डस्य षष्ठे प्रपाठके सौत्रामणीं उक्त्वा, सप्तमस्य प्रथमेऽनुवाके बृहस्पतिसवः, द्वितीये वैश्यसवः, तृतीये ब्राह्मणसवः, चतुर्थे सोमसवः, पञ्चमे पृथिसवः, षष्ठे गोसवः, सप्तमे ओदनसवो विहित इति दिक्॥

इह हि काण्डे प्रधानतो यागद्वयं विहितम्,— वाजपेयो राजसूयश्चेति। तत्र वाजपेयः प्रकृतिः, राजसूयस्तद्विकृतिः। सौत्रामणी-नाम-यागस्तु राजसूयाङ्गतया, प्राधान्येन पृथगनुष्ठेय-तया चेति द्विविध आम्नात इति सङ्क्षेपः। सौत्रामण्याः स्वातन्त्र्य माह च मीमांसान्यायमालायाम् (४. ३. १८)—

"अग्निं चित्वा यजेत् सौत्रामण्यङ्गेष्टिरत्र वा।
अग्निकाले स्वकाले वा स्यादाद्योऽन्याङ्गसङ्गतः॥
निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः।
स्वकाले चोदकप्राप्ते मदनुष्ठान माश्रितम्॥"–इति।

"*अग्निं चित्वा सौत्रामण्या यजेत*"–इत्येव (तै० सं० ५. ६, ३. १०.) तदधिकरणस्य विषयवाक्य मिति॥

वाणीकोटा-राजधानी। सं० १९५४। श० १८००। } श्रीसत्यव्रतशर्म्मा। (भट्टाचार्यः, सामश्रमी, आचार्य्यश्च)

# शतपथब्राह्मण-पञ्चमकाण्डस्य

## सूचीपत्राणि।

॥ अथ प्रपाठकसूची ॥



॥ अथाध्यायसूची ॥

## ॥ अथ ब्राह्मणसूची ॥

## ॥ अथ कण्डिकासूची ॥

## ॥ अथ समालोच्यवचनसूची ॥

"भवान् निवपति०—० सेव्यसेव्याश्च मां दीव्यश्च मिति" ४.१.२३.

"महावाणस्य च गर्हेभ्यो गोविकर्त्तस्य च गवेधुका. सम्भृत्य"२.५.१०.

"अग्निरेकाक्षरेण प्राण मुदजयत्" २. २. २०,

"अग्निर्वै दाता पौष्णाः पशवः" २. ४. ६.

"अग्निर्वै दाता वर्चः सोमः". २. ४. १०.

"अग्निर्वै दाता वैष्णवा. पुरुषाः" २. ४. २.

"अग्निर्वै देवाना मनीकं सेनाया वै सेनानी" २. ५. १.

"अग्नेर्वै धूमो जायते , धूमादभ्रम् , अभ्राद् वृष्टि. ।
अग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति" ३. २. १७.

"अग्निर्वै यज्ञस्यावरार्ध्योविष्णुः परार्ध्यस्तत्सर्वा एवैतद्देवताः" १.२.६.

"अग्ने रेतो हिरण्यम्" २. २. ६ ; ४. ३. ८.

"अजर्षभस्याजिन मुपस्तृणाति, तदुपरिष्टाद्रुक्मं निदधाति ,
तमभ्यवरोहतीमा वेव" १. ६. २१.

"अतिरिक्त आग्नीध्रीय: ; गार्हपत्ये हवींषि श्रपयन्ति, आहवनीये
जुह्वति" ३. ४. १०.

"अथास्य दधि विनाट आसिच्य रथं युक्तावध्न देदीयितवा आह
तद् यत् स्वय मुदितं नवनीतं तदाज्यं भवति" २. ६. ६.

"अथैनं वासांसि परिधापति०—० ताप्यं परिधापयति, ०—०
अधीवासं प्रतिमुञ्चति , उष्णीषं संहृत्य पुरस्तादवगूहति ,
०—० समन्तं वा इदं नाभिः पर्येति" ६. २. २०—२४.

"अन्तो वै प्रजापति." १. ३. १३.

"अन्नं ऊर्गुदुम्बर." ३. १. २.

"अन्न वै पशव." १. ६. १६.

"अन्न वै प्रजापति." १. ३. ७.

"अन्न वै वाज." १. ४. ३ , ४ , ६.

"अन्नपेयं नामैतद् यद् वाजपेयम्" १. ४. ११ , ५. २५ ३०.

"अपरिमितं वा अनिरुक्तम् ४. १. १२.

"अथामासैवैं देवा दिक्षु नाष्ट्रा रक्षांस्यपाघ्नत" २. ३. १४.

"अप्स्वन्तरमृत मप्सु भेषजम्" १. ४. ६.

"अभीशवो वै रश्मय" ३. ५. १८.

"अमृतं ह्यायुर्हिरण्यम्" १. ५. २८, ६. २०.

"अमृत मायुर्हिरण्यम्" ३. २. १५, ३. ११, १४.

"अयं वै प्राणो योऽयं पवते, यो वै प्राणः स आयु, सोऽयं एक इवैव पवते, सोऽयं पुरुषेऽन्त प्रविष्टो दशधा विहित." २. ३. १०.

"अर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम" १ ५. ७.

"अर्धो ह वा एष आत्मनो यज्जाया" १. ६. १०.

"अवरं हि राज्यं परं साम्राज्यम्" १. १. १२.

"अस्मा आनन्दो आहरन्ति, सैषा खादिरी विश्वरूपा भवति, येयं सर्वेषां भूतानाम्" ४ १ १.

"अस्मै अश्वान् प्राणावकाशयति ०—० अग्निरेष हि सर्वासया-मभि भवति" ४. १. ६.

"आसन्द्या उपानहा उपमुच्यते" ४. ५. ७.

"इद मध्ये सर्वं साम,— यद्वा यज्ञरूपि यत्सामानि ०—० यजुर्भिर्वाचोऽयग्भिरथ सामभिरेवं त्रय्या एतद् प्रायश्चित् ०—० यतेन सर्वेण वेदेन पुनर्यज्ञ आरभते" ४. ७. १—१०

"इन्द्रो वै यजमान" १. २. २ ; ५. ४ [ ३. ४. ६.

"इमे वै लोका विष्णोर्विक्रमण विष्णोर्विक्रान्तं विष्णोः क्रान्तम्

"इय वै पृथिव्यदिति" १. ४. ४ ; ३. ३. १७.

"इयं वै पृथिव्यदिति, सेयं देवानां पत्नी" २. ५. ४.

"एकादश पदानि सम्पादयति" २. ५. १२. [ १.६.२४.

"एता (एना) हि संवत्सरमृ विजायमाना द्वौ लोमिति जनयन्ति"

"द्वे वै श्रामस्य रूपे शुक्लञ्चैव कृष्णञ्च" १. २. ८; २. ४. ८.

"धनुरधितनोति॰—॰ बाहू विमार्ष्टि ॰—॰ अथास्मै त्रिस्र इषूः प्रयच्छति" ३. २. २७—२८.

"धावस्याजि माद्यन्ति दुन्दुभीनभि साम गायति" १. ५. १७.

"नमो मात्रे पृथिव्यै" १. ६. १८.

"न वा एष स्त्री न पुमान् यत् क्लीबः पुरुषः" १.२.१४; १.३.९.

"न वै ब्रह्मा प्रचरति, न स्तुते, न शंसति, अथ स यशः; न वै हिरण्येन किञ्चन कुर्वन्ति, अथ तद् यशः; तस्मात् त्रीणि शतमानानि ब्रह्मणे ददाति" ४. ७. १६.

"न वै मित्रः कञ्चन हिनस्ति, न मित्रं कश्चन हिनस्ति" २.६.७.

"न वै वाचात् किञ्चनाग्नीयोऽस्ति, न मनसः किञ्चनाग्नीयोऽस्ति, तस्मादाह वाचो वा मनो वेति" १. ४. ८.

"न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम्" १. ६. १८, १९; [१.५.२०, २१.

"नैतदग्नौ न हिरण्यं यथोक्तायनम्" ३. ३. २

"नैतदग्नौ न हिरण्यं यत् सीसम्" १. २. १४.

"नैते क्रिमयो नाक्रिमयो यद् दन्दशूकाः" ३. २. २.

"नैव सोमो न सुरा यत् परिस्रुत्" १. २. १४.

"न्येव वर्तेते केशान् न वपते, तस्यैव व्रतचर्या भवति यावज्जीवम्" ४. ५. ६.

"पराभवस्तन्मुखं वदतिमाल" १. १. १.

"पुरुषो वै प्रजापतेर्नेदिष्ठम्" १. १. ८.

"पूर्वेद्युः परिस्रुतं सन्दधाति; अश्विभ्यां पयश्च, सरस्वत्यै इन्द्राय सुत्राम्णे पयसेति, ॰—॰ कुवलसक्तून् कर्कन्धुसक्तून् बदरसक्तून् इत्यावपति, एतद्वै ततः समभवत्" ४.६.२०—२२.

"पूषा वै देवानां भागदुघः" २, ५. ९.

"पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे" ३. २. ४.

"प्रजननं प्रजापतिः" १. २. ९.

"प्रजापतिर्वा अनिरुक्तः" ३. २. ११.

"प्रतीचीनफलो वा अपामार्गः" २. ३. २०.

"प्रष्टिवाहनो ऽश्वरथो दक्षिणा, त्रयोऽश्वा द्वौ सव्यष्टृसारथी" २, ३, ९.

"प्रहेयो वै पाप्माहतः , पाप्मानं वै प्रहित एति" २. ५. ११.

"प्लाशुकानां , आशूनां , श्यामाकं , नैवारं , शायमानां गावे-
धुकं , नाम्बानां , यवमयम्" ३. ७. २—९.

"बृहस्पतिर्वै देवानां पुरोहितः" २. ५. २.

"बृहस्पतिसवो वा एष यद् वाजपेयम्" १. ६. १९.

"ब्रह्म वै पलाशः" ३. ३. १८.

"ब्रह्म हि ब्राह्मणः" १. ५. २, ४, ८, ११.

"ब्रह्म हि मित्रः, ब्रह्म हि यज्ञः, ब्रह्म हि बृहस्पतिः" २. ६. ४.

"माता धेनुः, मातेव वा इयं मनुष्यान् बिभर्ति" ३. ५. ४.

"यं न्येवैतयर्चा अभिपद्येदेतेन यजुषैतेन साम्ना तं न्येवागदं कुर्यात्,
किमु ये त्रयेण मेदेन" ४. ७. १५.

"यस्मै विशो राजा भवति , एष वोऽमी राजा ; सोमोऽस्माकं
ब्राह्मणानां राजेति ०—० तदस्मा इदं सर्वं आद्यं करोति
०—० ब्राह्मणोऽनाद्यः" ३. ४. ३.

"यावद्वै प्राणेष्वापो भवन्ति , तावद् वाचा वदति" ३. २. १६.

"या वा अपुत्रा पत्नी सा परिवृक्ती" २. ५. १२.

"योजनशो हि विमाना अध्वानं धावन्ति" १. ५. १७.

"यो वा अनूयाजः सोऽस्तं वयसि" २. ६. ३.

"यो वै रुद्र सोऽग्निः" २. ३. १३.

"यो वै वरुण सोऽग्नि" २. ३. १३.

"राज्ञ एव राजसूयम्" १. १. १२.

"रुक्म ( रुच्यमानमुकुट ) शतविदृषो वा भवति, नवविदृषो वा •—• त मुपरिष्टाच्छीर्ष्णो निदधाति" ३. ३. ११, १४.

"वज्रो वा आज्यम्" २ ३. ७.

"वज्रो वै विकङ्कत" २. ३. १८.

"वरुणसवो वा एष यद्राजसूयम्" ३. ४ २, २१. [२.६.६.

"वरुण्यं वा एतद् यन्मथितम्, यदेतन्मस्तु यत् स्वय मुदितम्"

"वरुण्या वा एषा या परञ्जला

यदेषा मैत्री या स्वयमशीर्णा" ३. ६. ५.

"वरुणो वा एष योऽग्निना शृत.,

यदीय मैत्रो य ऊष्मणा शृत." २. ६. ८.

"वाराह्या उपानहा उपमुञ्चते। पशवो ह वै देवा हुतकुश्चं प्रवेशयांचक्रुस्ततो वराह सम्बभूव, तस्माद् वराहो मेदुरः एताहि सम्भूतस्तस्माद् वराहे गाव सञ्जानते,— स्व मेवैतद्रस मभिसञ्जानते' ३ ४ १८.

"विशो वै मरुत, वैश्यो वा ग्रामणी." २. ३ ६.

"वीर्यं वा आप" ३. १. १.

"वीर्यं वा एतदपां रस" ३. २. १०.

"शार्दूलचर्मणो जघनार्धे सोम निहित भवति" ३. ३. ८.

"श्येताक्षि ह्यग्निनावभिर्मन्दा सारस्वती भवति •—• दुर्वेदा एव सदसा पशवे., यदेव सस्तान् न विन्देदप्यजानेवालमेरन्, ते हि सुवपतरा भवन्ति" ४. ६ १.

"सत्यं वै श्रीर्ज्योतिः सोमः, अनृतं पाप्मा तमः सुरा" १. १. २८.

"सप्तदश दुन्दुभीननुवेद्यन्तं सम्भिघ्नन्ति" १. ५. ६.

"सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विषयितो वा भवति" १.६.५.

"सप्तदश सुराग्रहान् गृह्णाति" १. २. १२.

"सप्तदश सोमग्रहान् गृह्णाति" १. २. १०.

"सप्तदशान्नानि सम्भरन्ति" २. १. ३.

"सप्त वै मारुतो गणः" ३. ५. १७.

"सयोनी वा अश्विनौ, सयोनी सव्यष्टृसारथी ; समानं हि रथ मधितिष्ठतः" २. ५. ८.

"सर्वं वा इदं प्रजापतिर्यदिमे लोका यदिदं किञ्च" १. ३. ११.

"स वा एष (वाजपेयः) ब्राह्मणस्यैव यज्ञः १. १. ११.

"सविता वै देवानां प्रसविता, प्रसविता वै क्षत्ता" २. ५. ७.

"सवो वै सूतः, सवो वै देवानां वरुणः" २. ५. ९.

"सव्यायुग्यं युनक्ति, दक्षिणाप्रष्टिं युनक्ति, सव्याप्रष्टिं वाचे मानुषे ●—● ते वा एत एव त्रयो युक्ता भवन्ति" १. ४. ८.

"स हि पौष्णो यच्छ्यामः" २. ४. ८.

"स हि वैष्णवो यद् वामनः" २. ४. ४.

"'सारस्वतीः', 'ऊर्मी' *, 'स्यन्दमानाः', 'प्रवहती.', 'समुद्रियाः', 'निवेष्याः', 'स्थावरा.' 'आतपवर्ष्याः', 'वैशन्तीः', 'कूप्याः', 'प्रुष्वाः', 'मधव्याः', 'गोउल्व्याः', 'पयस्याः', 'विरभृतः', 'मरीचीः'— "ता वा एताः सप्तदशापः" ३. १. ३—२२. †

"सासौ द्यौः सैषा 'शुभा' नाम" ३. २. २९.

---

* प्रवाहप्रत्यग्भेदेन समुद्रोर्मयो द्विविधा भवन्ति ।

† एतद् द्रष्टव्य २३३ पृ० पादटीप्पणी संशोध्या ।

'क्षीमं मृदु स्नतजं०—० हिरण्मयं (सर्णवस्त्रार्थं) सम कियथ नाईति ०—० नाष्ट्रा रक्षांसि (रोगादि) चनोऽपहन्ति" १.१.१०.

"सेयं पृथिवी सेषा 'इडा' नाम" १ २, २८

"सोमो वै प्रजापति १.१ ७

'स्वर्भानुर्ह वा आसुर सूर्यं तमसा विव्याध, स तमसा विद्धो न व्यरोचत' २ ६ २.

---

## ॥ अथ विषयसूची ॥

---

( १ प्र० १ ब्रा० )

अथ वाजपेयविधानप्रस्ताव, वाजपेये ब्राह्मणस्याधिकारविधि मुक्त्वा बृहस्पतिवृत्तान्त प्रदर्श्य क्षत्रियस्यापि त समर्थयितु मिन्द्रवृत्तान्ताख्यानम्, वाजपेयस्य साम्राज्यफलप्रदर्शनम्, तत्र भाविग्रहोर्मिथ्यादिकचेति।

( १ प्र० २ ब्रा० )

वाजपेयपशुविशेषाणा विधानम्, प्राकृतसोमक्रयविधि मनूद्य परिस्नुत्क्रयविधानम्, ग्रहद्वयोर्वीर्यावस्थानप्रतिपादन समूद्य परिस्नुत्प्रपादने विशेषविधि, ग्रहपञ्चकप्रसङ्गात् सुराग्रहाणा मधुग्रहस्य च माध्यन्दिने सवने ग्रहणविधिश्चेति।

( १ प्र० ३ आ० )

वाजपेयस्य अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थात्वगुणसद्भावेन तत्र तेषाम् अग्निष्टोमादिगतानां सवनीयपशूनां विशेषतो विधानम्, पञ्चशारदानाञ्च विधानम्, सप्तदशानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्योगस्य च प्राकृतपशुवपाहविर्भिः सह विधास्यमाने होमकाले विचारः, आग्रयणानन्तरकर्तव्ये ग्रहेऽपि विशेषविधिश्चेति ।

( १ प्र० ४ आ० )

ततो माध्यन्दिनसवनकर्तव्येषु प्रधानतो यजमानाभिषेकस्य आजिधावनस्य विधिः, तत्र रथे चाश्वत्रयाणां योजनम्, तन्मन्त्राणां तात्पर्यव्याख्यानानि च, ततश्चतुरश्वरथस्याध्वर्यवे दानविधि, अथ नैवारचरुविधिः, वाजानां तदाघ्रापणविध्यादिकञ्चेति ।

( १ प्र० ५ आ० )

अथाजिधावनप्रशंसा, ब्रह्मणो रथचक्रे गानम्, ब्रह्मणो रथावरोहणम्, यजमानभेदे मन्त्रभेदः, ततो दुन्दुभ्युपावहरणम्, क्षत्रियस्य यजमानस्य अग्रदर्शितपथाधिकरणञ्च, ततोऽश्वैर्युक्ते रथेऽधिरूढे यजमानस्य सपत्नीकारोहणम्, ततोऽध्वर्य्वादिकर्तव्यताविधानादिकम्, ततो हवनानुमन्त्रणयोर्व्यवस्थया विधानम्, तन्मन्त्रविधिव्याख्यानादिकञ्च, ततः सुराग्रहाणां मधुग्रहस्य चात्र माध्यन्दिने सवने विनियोगप्रकारः, प्रतिप्रस्थातृगृहीतसुराग्रहाणां नेष्टृकर्तृकप्रचारविध्यादिकञ्चेति ।

( १ प्र० ६ आ० )

अथ यजमानस्य यूपारोहणम् । तत्र पूर्वं वाजहोमानां विधानम्, यूपस्थानस्य गोधूमपिष्टमयत्वविधानम्, पञ्चाशदश्वपाशक

परिधापनम्, यूपे निश्रेण्यारोपणम्, यूपारोहणकाले जाया-मन्त्रणम्, तत्रयोर्यजमानदम्पत्योः सर्वदिगीक्षणम्, भूम्यवेक्षणञ्च, बस्ताजिने तयोर्यूपादवतरणम्, बास्ताजिनायामासन्द्या उपवेशनादिकञ्चेति ॥

---

( २ प्र० १ ब्रा० )

वाजप्रसवीयहोमकालादिविधानम्, आवेदनविधिः, उज्जिति-होमादिविधिः, तत्र, शिष्टकर्मानुसन्धानादिकञ्चेति ।

( २ प्र० २ ब्रा० )

अथ राज्ञो राजसूयविधिः । तत्र पवित्रेष्टिरेवारम्भणीयेष्टिः । तदुत्तरदिनेऽनुमतियागश्च, तदुत्तरदिने आग्नावैष्णवयागश्च, तदुत्तरदिने आग्नीषोमीयश्च, तदुत्तरदिने ऐन्द्राग्नश्च, तदुत्तर-दिने आग्रयणस्य विधिदक्षिणादीनि विहितानि । उक्तयागपञ्च-कादनन्तरं चातुर्मास्यविधानञ्चात्र मिति ।

( २ प्र० ३ब्रा० )

तत्र चातुर्मास्येषु वैश्वदेवाख्यं प्रथमं पर्व, वरुणप्रघासाख्यं द्वितीयं पर्व, साकमेधाख्यं तृतीयं पर्व, शुनासीर्याख्यं चतुर्थं पर्व, तेषां विधानादि । ततः पञ्चवातीयहोमविधानम्, तद्दक्षिणा-विधानञ्च । आरोग्यकामस्यापि पञ्चवातीयहोमविधानम् । तत्र इन्द्रतुरीययागविधानम्, तद्दक्षिणाविधानञ्च । ततोऽपामार्गहोम-विधानम्, ततोऽस्मुकादान मनूद्य मन्त्रविधानम्, तन्मन्त्रव्याख्या-नादिकञ्च । ततः स्रुववेषणादिविधानञ्चेति ।

( २ प्र० ४ ब्रा० )

अथ तत्रैव मित्रयुक्तेष्टिविधानम् । तत्र वैश्वानरयागः प्रथमः, लिङ्गविस्कन्नयागो द्वितीयः, सौम्ययागस्तृतीयः । एषां मितिकर्तव्यता-मन्त्रादि दक्षिणा विधानानि । ततो द्विहविष्कयागविधि, तत्र वैश्वानरयागः प्रथमः, वारुणयागो द्वितीयः । अनयोरितिकर्तव्यता मन्त्रादि दक्षिणाविधानानि चेति ।

( २ प्र० ५ ब्रा० )

अथ रत्नहविरिष्टिः । रत्नहवि प्रयोगः । स च सेनानीगृहे प्रथमः, पुरोहितगृहे द्वितीय, यजमानगृहे तृतीय, महिष्या गृहे चतुर्थ, सूतस्य गृहे पञ्चम, ग्रामणीगृहे षष्ठः, क्षत्तृगृहे सप्तम, सङ्गृहीतृगृहे अष्टम, भागदुघस्य गृहे नवमः, पुनरक्षवापगृहे दशम, सूतगृहे एकादश, परिवृत्तीगृहे द्वादश, तद्रत्नहविरिष्ट्यन्ते किञ्चित् कर्त्तव्यविशेषविधानञ्चेति ।

( २ प्र० ६ ब्रा० )

अथ सौमारौद्रयागविधि । तत्र चरुपाकः, पाव्यकरणादिकञ्चेति ।

( २ प्र० ७ ब्रा० )

अथ पवित्राख्ययागादनन्तरकर्तव्यस्य राजसूयीयद्वितीय यागस्याभिषेचनीयाख्यस्य प्रयोगे देवसुवा हविषां विधानम् । तत्रादौ माविकस्य विधानम्, तत्र क्रमादाग्नेयस्य, सौम्यस्य, ऐन्द्रस्य, रौद्रस्य, मैत्रस्य, वारुणस्येति । ततो देवसूनामभिर्मन्त्रणादिकञ्चेति ॥

( ३ प्र० १ ब्रा० )

अथ सप्तदशानां अपां सम्भरणविधानम्। तत्र प्रथमं तत्त्वात-निरूपणम्। अथ प्रथमं सारस्वतीनां अपां सम्भरणप्रकारादिकम्; ततः प्रागूर्मीणाम्, प्रत्यगूर्मीणाम्, प्रतिलोमस्यन्दमानानाम्, अपयतीनाम् (स्वप्रवाहात्), परिवाहिणीनाम्, समुद्रशन्तीनां समुद्रियाणाम्, आवर्तोदकानां सूर्यत्वचसाम्, आतपवर्ष्याणाम्, सरस्यानाम्, कूप्यानाम्, नीहाराख्यानाम्, मधुरूपाणाम्, गोरुल्ब्यानाम्, पयोरूपाणाम्, घृतात्मिकानाम्, मरीचीनामपां मिति।

( ३ प्र० २ ब्रा० )

अथाभिषेकः। तत्र तन्त्रविधिः, पार्थहोमविधिः, अभिषेकपात्राणां विधानम्, पवित्रद्वयकरणोत्पवनादिकञ्च। ततो यजमानस्य तार्प्यपाण्ड्वाधीवासोष्णीषपरिधानम्। अथैव दीक्षितवसनस्यावभृथे परित्यागविधिः, धनुर्बाणग्रहणम्, आविन्मन्त्रवाचनञ्चेति।

( १ प्र० १ ब्रा० )

वैयघ्रचर्मोदायमदन्दगूकानामन्तरालवर्तिलोकप्रापणम्, ततः सुक्षतस्याप्य सर्वदिगाक्रमणविधिः, अधस्तादुपरिष्टाच्च रुक्मनिधानम्, समन्वकनाहृदयस्पर्शश्चेति।

( १ प्र० २ ब्रा० )

अभिषेकप्रकारोपदेशः, मंत्रवैः सिक्तस्य पात्राणामभिषेकपात्रस्य तस्यैव राज्ञः प्रियतमाय पुत्राय प्रदानविधिश्च। तत्सारपुत्रकर्तृको गार्हपत्येऽग्नौ होमविशेषः, पात्राणामपामग्नीध्रीये होमश्चेति।

( ३ प्र० ५ ब्रा० )

रथोपावहरणम् । तत्र प्रथमं तावत् आहवनीयस्योत्तरप्रदेशे गतानां तदधिकानां वा गवां स्थापनम्, ततः समन्त्रकरथोपावहरणविधिः, यजमानस्य रथारोहणम्, स्थापितासु गोषु रथस्थापनम्, तद्दक्षिणतोऽश्वानां स्थापनम्; ततो रथविमोचनीयहोमविधिः, वराहचर्मनिर्मितोपानहिमोचनम्, ततो रथादवरोहणविधिः, एतत्प्रसङ्गतो हंसमन्त्रस्य व्याख्यावैविध्यप्रदर्शनम्, यजमानयोरासञ्जनम्, औदुम्बर्यां उपगूहनादिकम्, पयस्यायां बार्हस्पत्यचरुश्चेति ॥

---

( ४ प्र० १ ब्रा० )

अथ पयस्यायाः प्रचारः । आसन्द्या अधीवासास्तरणम्, उन्नत-स्थालीपवेशनम्, यजमानहस्ते पञ्चाक्षावापः, तत्पृष्ठे दण्डै-राघातः, यजमानस्य बरणार्थनादिकम्, सुत्वते स्फ्य-प्रदानञ्च । द्यूतस्थाननिरूपणम्, अधिदेवने हिरण्यनिधानपूर्व्वकहोमविधिः, गवोऽभिवापः, गोहननम्, द्यूतकर्म्मणो दक्षिणादानम्, पय-स्यायाः स्विष्टकृदिडादिविधिश्चेति ।

( ४ प्र० २ ब्रा० )

अथ दशसंसृपाहविर्विधानम्, दशपेयविधानम्, द्वादश-पुण्डरीकस्रक्प्रतिमोकः, ततो द्वादशपेयस्य दीक्षाविधिश्च । आग्नेयादिहविर्निर्वापः, उपसदर्थं हविस्त्रयकरणम्, तत्र विचारश्च ; उपसद्यागविधिः । गर्भिणीनां द्वादशगवां प्रदाने

दानम्, हिरण्यस्रक् रुक्म प्राकाशद्वयाश्वरथर्षभ वासोद्वयानडुद् दानविधिश्चेति ।

( ४ अ० ३ ब्रा० )

अथ पञ्चबिलचरुयागविधिः । तदीयलिङ्गविशेषेभ्यो हिरण्यादि-दक्षिणादानविधिः, एतस्य हविःपञ्चकस्य फलान्तराय राज-सूयाद् बहिः प्रयोगविधानञ्चेति ।

( ४ अ० ४ ब्रा० )

अथ ऋत्विजां मधुग्रहविधा द्वादशानां विधानम्, द्वादश-मधुग्रहविकारत्वेन ऋतुप्रयोगस्य दार्व्यायनम्, ततस्तत्र पशुद्वय विधिः, तत्कर्मणो दक्षिणाविधानञ्चेति ।

( ४ अ० ५ ब्रा० )

अथ केशवपनीयातिरात्रस्य वैशेषिका धर्माः । तत्र सामगीयमासेषु स्तोत्रेषु चोदकेन प्राप्तस्तवनादिषु त्रिवृदादिस्तोम प्राप्तौ तत्पर्यादिषु विशेषविधिः प्रथमः । ततः केशवपन केशनिवर्त्तनयोः क्रमाद्विशेषविधाने । ततः स्वपानहोपसुचन विधानादिकञ्चेति ।

( ४ अ० ६ ब्रा० )

अथ सौत्रामणीयागविधिः । तत्र पशुत्रयविधिः । ततः इन्द्रस्य नासादिभ्यः सोमद्रवणात् सिंहादीनामुत्पत्तिः, श्यामादिभ्यस्तद्‌द्रवणात् सुरोत्पत्तिः, निष्ठीवनश्वयाथ सराघस्यामानां कुवलकर्कन्धु बदराणामुत्पत्तिरिति कथा । सौत्रामणीनामनिर्वचनम् । सोम पक्तोदनचूर्णपाचनेन परिस्रुत्सन्धानविधिः, परिस्रुत्प्रावनम्, तस्याम् पूतायां परिस्रुति कुवलकर्कन्धुबदरसक्तुत्रयप्रक्षेपेण सुराकारपाद नञ्च । ततस्तद्‌ग्रहत्रयप्रक्षेपम्, सद्भावनञ्च । तत्र परिस्रुतस्त्रैव

मासिच्य सक्तवच्छिद्रं कुम्भं शिक्ये कृत्वा दक्षिणस्याग्नेरुपरि धारयन् ततः स्रवन्त्या धारया सोमवताम् बर्हिषदाम् अग्निष्वात्तानाञ्च पितॄणां सुपस्थानादिकम् , सौत्रामणीदक्षिणाविधानञ्चेति ।

( ४ प्र० ७ आ० )

अथ राजसूयाख्ये कर्मण्यामेधानवीष्टेः प्रयोगः । तत्र सद्विधानार्थाख्यायिका , तन्नामनिर्वचनम् , तद्धविर्निरूपणम् , तद्विधानम् , तद्दक्षिणाविधि , तत्फलस्तुतिः , तत्फलसंवादाख्यानम् , वेदत्रयरूपत्वेनया वैधातव्या अभिचारपरिहारश्चेत्याख्यानम् । ततो महावे व्रीहीणि यतमानानि , होमे तिस्रः सवत्साः पयस्विनीगौः , अध्वर्यवे व्रीहीणि वासांसि , अग्नीधे एका गाव्श्चेति तयोदृष्टदक्षिणाद्व्याख्या विधानम् ; तदेतत्त्रयोदशसाम्येनास्य यज्ञस्य सम्भृतकालसंवत्सररूपत्वमिति प्रशंसा चेति क्रमः ॥

---

## ॥ अथ कर्मसूची ॥

## ॥ अथर्षिनामादिसूची ॥



* इह सूत्रे ( ३ २ ४ ) पृथी वैन्यः। एवम् आप० श्रौ० २० १९६ ५ ऋ० सं० १० १४८ ५ तै० ब्रा० १ ७ ७ १ पृथिवैन्य ऋ० सं० १ ११२ १९ इत्यपि। अथवानुक्रमण्यां पृथुर्वैन्यः १० म० १४८ सू० द्रष्टव्य मिति।

॥ इति ॥

## ॥ अथर्षिनामादिसूची ॥



* इह सूत्रे ( ३ ९. ४ ) पृथी वैन्यः। एवम् अथ० सं० २०. १४६. ५; ऋ० सं० १०. १४८ ५। तै० ब्रा० १. ७. ७. ३ पृथिर्वैन्यः, ऋ० सं० १. ११२. १२ अप्यपि। ऋग्यनुक्रमण्यान्तु पृथुर्वैन्यः १० म० १४८ सू० द्रष्टव्य मिति।

॥ इति ॥

| कर्म. | प्र० खा० क० | कर्म. | प्र० खा० क० |
|---|---|---|---|
| सुराग्रहधारणम् … | १ २ १८ | सौत्रामणीदक्षिणा … | ४ ६ १४ |
| सुराग्रहाणां व्यवहारः | १ ५ १८ | सौत्रामणीयागः … | ४ ६ १ |
| सुराग्रहातिहरणम् | १ २ १७ | सौमारौद्रयागः … | २ ६ १ |
| सोमग्रहधारणम् … | १ २ १८ | स्कन्नहवनम् … … | ४ १ १५ |
| सोमग्रहातिहरणम् … | १ ८ १७ | स्विष्टकृद्यागः … … | २ १ १८ |
| सोमदीक्षा … … | ४ २ ५ | हवनं महामन्त्राणां वा … | १ ५ १८ |
| सोमसुराग्रहयोरासादनम् | १ २ १५ | हिरण्यवपनम् … | २ २ १५ |

## ॥ ऋषिनामादिसूची ॥

| नाम. | प्र० खा० वा० | नाम. | प्र० खा० क० |
|---|---|---|---|
| आश्वलायनः … | ५. ३. १४ | एषी * … … | २. २. ४. |
| आत्रेयः … … | ४ ५. १४ | भरद्वाजः … … | ५. ५. १४. |
| गौपालिः … … | १. १. ५. ७ | याज्ञवल्क्यः … … | ५. ४. १४. |
| भागवृत्तिः … | १. १. ५. ७ | वैन्यः … … … | ३. २. ४. |

* एष मुष्टि ( २ २ ४ ) एषी वैन्यः। एवम् आप० श्रौ० २०. १२१. ५; ऋ० सं० १०. १४८. ५। तै० ब्रा० १. ७ ७. १ पृथिवैन्यः, ऋ० सं० १. ११२. १२ पृथ्यपि। आप्सनुक्रमण्याम् पृथुर्वैन्यः १० म० १४८ सू० द्रष्टव्यमिति ॥

॥ इति ॥

---

## ॥ ऋषिनामादिसूची ॥



* इह सूत्रे (२. २ ४.) पृथी वैन्यः। एवम् अथ० सं० २०. ११६. ५; ऋ० सं० १०. १४८. ५। तै० ब्रा० १. ७. ७. ४ पृथिर्वैन्यः, ऋ० सं० १. ११२. १२ पृथवि। सर्वानुक्रमणिकायां पृथुर्वैन्यः १० म० १४८ सू० द्रष्टव्यमिति।

॥ इति ॥

अथ * देवाः । अन्यो ऽन्यस्मिन्नेव जुह्वतश्चेरु-स्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषा मास यज्ञो हि देवाना मन्नम् ॥ २ ॥

ते होचुः । कस्य न इदं भविष्यतीति ते मम † ममेत्येव न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचु-राजि मेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजि माजन्त ॥ ३ ॥

स बृहस्पतिः । सवितार मेव प्रसवायो-पाधावत् सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इद मुज्जयानीति तदस्मै सविता प्रस-विता प्रासुवत्तत् सवितृप्रसूत उदजयत् स इदᳲ सर्व्व मभवत् स इदᳲ सर्व्व मुदजयत्प्रजापतिᳲ ह्युद-जयत् सर्व्व मु ह्येवेद प्रजापतिस्तेनेष्टैता ‡ सेवोर्ध्वां दिश मुदक्रामत्तस्माद्यश्च वेद यश्च § नैपोर्ध्वा बृह-स्पतेर्दिगित्येवाहुः ॥ ४ ॥

तद्धे ह स्म पुरा व्वाजपेयेन यजन्ते । एताᳲ

* 'अथ'—इति क।
† नास्त्येतत् पदं ख पुस्तके।
‡ 'नेष्टेता'—इति ख, 'नेष्टैवैता'—इति घ।
§ 'यश्च'—इति ग, घ।

ह सर्वोर्ध्वां दिश मुत्क्रामन्ति तत औपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततो ऽर्व्वाचीनं प्रत्यवरोहन्ति ॥ ५ ॥

तेनेन्द्रो ऽयजत। स इदए सर्व्व मभवत् स इदए सर्व्व मुदजयत् प्रजापतिए ह्युदजयत् सर्व्वं मु ह्येवेदं प्रजापति स्तेनेष्ट्वा * सर्वोर्ध्वां दिश मुदक्रामत् ॥ ६ ॥

तद्धो ह स्म पुरा वाजपेयेन यजन्ते। एताए ह सर्वोर्ध्वां दिश मुत्क्रामन्ति तत औपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततो ऽर्व्वाचीनं प्रत्यवरोहन्ति ॥ ७ ॥

स यो वाजपेयेन यजते। स इदए सर्व्वं भवति स इदए सर्व्व मुज्जयति प्रजापतिए ह्युज्जयति सर्व्वं मु ह्येवेदं प्रजापतिः ॥ ८ ॥

तदाहुः। न वाजपेयेन यजेत सर्व्वं वा ऽएष इद मुज्जयति यो वाजपेयेन यजते प्रजापतिए ह्युज्जयति सर्व्वं मु ह्येवेदं † प्रजापतिः स इह न

---

* स्तेनेष्ट्वा — इति ख, 'स्तेनेष्ट्वैता — इति घ।

† ह्येवरं — इति ग घ।

जुहोत्या प्रसुत्याया एतद्धास्यैतत् कर्मारब्धं भवति प्रसन्न एतं यज्ञं भवति ॥ १६ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् [१.१.] ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
काश्चित् संस्थाः समुदितास्तुर्येऽग्निष्टोमपूर्विकाः ।
काण्डे तु पञ्चमे वाजपेयः प्रस्तूयते ततः ॥ ३ ॥
राजसूयः सम्प्रपन्नो* मन्त्राम्नानक्रमेण तु ।
प्रस्तुतानुपदिष्टत्वादङ्गजातस्य नो वचः ॥ ४ ॥
वैशेषिकाणि वक्ष्यन्ते यज्ञद्वयगता गुणाः ।
व्याख्यायते तत्र पूर्वं ब्राह्मणं तद्विधायकम् ॥ ५ ॥

तत्र वाजपेयं† विधातुं प्रस्तौति—"देवाश्च वा असुराश्चेति ।

---

* सम्प्रपन्न—इति क ख सम्पन्न ङ । 'सम्पन्न(ञ)—इति च ।

† तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमे प्रपाठके सप्तमादिषु षट्सु अनुवाकेषु वाजपेयमन्त्रा आम्नाताः, तैत्तिरीयब्राह्मणे द्वितीयकाण्डे(?) तृतीये प्रपाठके द्वितीयादिष्वष्टस्वनुवाकेषु वाजपेयब्राह्मणव्याख्यानम् । तत्र, 'य एवं विद्वान् वाजपेयेन यजते गच्छति स्वाराज्यम्, अग्रं समानानां पर्येति तिष्ठन्तेऽस्मै ज्यैष्ठ्याय'—इति वाजपेयविधिः । 'स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः'—इति अधिकारिविधिर्विधिः । 'स वा एष वाजपेयः ... वाजपेयेन वै देवा ऐच्छन्' —इति नामनिर्वचनम् । तदिदं सर्वं तै० ब्रा० १ । ३ । २ द्रष्टव्यम् ।

'प्राजापत्याः' प्रजापतिना सृष्टाः 'उभये' द्विविधाः 'देवाश्च असुराश्च' 'पस्पृधिरे' स्पर्धाञ्चक्रुः । 'ततोऽसुराः' स्वतोऽन्यः प्रभुर्नास्तीति 'अतिमानेन' (अभिमानेन *) मूर्च्छितेन दर्पेण 'कस्मिन्नु' खलु होमाधिकरणे 'वयं' 'जुहवाम' होमं कुर्याम 'इति' धिक्कृत्य स्वकीयेषु आस्येषु होमं चक्रुः । 'ते' असुराः अत्यन्तगर्वेण पराजिताः । 'तस्मात्' अद्यापि कश्चिदपि नातिमानं कुर्यात् ; 'अतिमानः' अभिमानं 'यत्', तत् 'पराभवस्य' प्रापकमिति ॥ १ ॥

देवानां तद्विपर्ययं दर्शयति— अथ देवा इति । 'देवाः' तु 'अन्योऽन्यस्मिन्' जुहुवुः ; इन्द्रः अग्नौ, अग्निः इन्द्रे, इत्यादिक्रमेणेत्यर्थः । 'तेभ्यः' देवेभ्यः, अन्योऽन्यस्मिन् देवतात्वेन होमकरणात् प्रीतः † 'प्रजापतिः', 'आत्मानं' शरीरं दत्तवान् । "यज्ञो हैषामिति । 'हि' यस्मात् 'देवानाम् अयं यज्ञः', अतोऽन्योऽन्यस्मिन् हविःप्रदानेनात्मसमर्पणात् प्रजापतिशरीरं यज्ञ एव तेषां आसीदित्यर्थः । यज्ञशब्देन वाजपेय उच्यते, प्रकरणबलात् । तथाच तैत्तिरीयके— "एष वाव यज्ञो यद् वाजपेयः"—इति ‡ ॥२॥

तत्र वाजपेये सर्वदेवानां पुरस्तात् वाजपेयस्यानुष्ठानेन बृहस्पतेरेव श्रैष्ठ्यं वक्तुं तदभिधानं दर्शयति— "ते होचुरिति । 'ते' देवाः आगच्छन्तं यज्ञं दृष्ट्वा 'नः' अस्माकं मध्ये 'इदम्' इति सामान्येन निर्देशः, अयं वाजपेय यज्ञः 'कस्य भविष्यति ?' 'इति' 'ऊचुः' । ततः 'ते' सर्वेऽपि ममैवायं यज्ञो ममैवायं यज्ञ इति § विवदमानाः 'न सम्पादयाञ्चक्रुः' अस्यैवायं यज्ञ इति न निश्चित-

* नास्त्येतत् पदं क-पुस्तके ।    † 'प्रतीतः'—इति ग ।

‡ तै॰ ब्रा॰ १.३.२.५ ।    § एवं द्विरुक्तिर्नास्ति च पुस्तकाद्यन्यत्र ।

णाङ्क मिद ब्राह्मण मित्याह— "तद् ये ह स्मेति। यथरा-र्थस्तु— 'तत्' तस्माद् बृहस्पतिनानुष्ठितत्वाद् 'ये' 'पुरा' पूर्वं 'वाजपेयेन यजन्ते', ते सर्वे ऊर्ध्वं गच्छन्ति, 'तत' ऊर्ध्वदिश सकाशात् 'आनस्तुतेयेन' आनस्तुतेः पुत्रेण 'चौपाविना' एतन्नाम्ना 'एव' एकेन राजर्षिणा 'मध्यवरूढ' मध्यवरोह कृत। भावे निष्ठा। "इतयाभिष्य"—इति * अनस्तुतेठक् प्रत्यय। 'तत' आरभ्य इदानीं मनुष्याणामपि 'यथायोगम्' यथासुखं 'मध्यवरो हन्ति' इति ॥ ५ ॥

एव वाजपेये ब्राह्मणस्याधिकारविधि सूचेतु बृहस्पति वृत्तान्त प्रदर्श्य क्षत्रियस्यापि त समर्थयितु मिन्द्रवृत्तान्त दर्शयति—' तेनेन्द्रोऽयजतेति। निगदव्याख्यातोऽर्थ । यस्मिन् पर्याये ऽपि 'तद्धे ह स्म'—इति वाक्यसन्दर्भं पूर्ववद् व्याख्येय ॥ ६, ७ ॥

इत्थ माख्यायिकया वाजपेये ब्राह्मणराजन्यावधिकारिणौ प्रदर्श्य, इदानीं स वाजपेय विधत्ते— 'स यो वाजपेयेन यजेत इत्यादिना † ॥ ८ ॥

सर्वजयेन विराडात्मकप्रजापतिजयस्यानुचितत्वात् तत्साधनभूतो वाजपेयो न कर्तव्य इति पूर्वपक्ष मुद्भावयति— "तदा हुर्न वाजपेयेनेत्यादि ‡। "इह न किञ्चनेति। सर्वात्मकप्रजापतिजयेन 'इह लोके 'न किञ्चन' परिशिष्टम्, तस्मात् 'तस्य' यजमानस्य 'प्रजा' 'पापीयसी' पतितयेव दारिद्र्यवती 'भवितो'

---

* पा० सू० ६ १ १२२।

† उभयत शुक्लपक्षौ बृहस्पतिसवेन यजते ज्योतिष्टोमेन वा —इत्यादि कात्यायनीयश्रौतम् निरीक्षणीय ( १४ १ २—८ सू० )।

‡ ब्राह्मणो वाजपेयेन —इति का० श्रौ० सू० १५ १ १

भवितुं मीश्वराः समर्थाः, 'इति' अतो हेतोः वाजपेयो न कर्त्तव्य इति ॥ ८ ॥

तद्विषयेण अधिकारिविशेषनिरूपणेन परिहरति— "तदु वै यजेतैवेति। सर्वथा वाजपेययागः कर्त्तव्य इत्यवधारणार्थः। तत्र विदुष एव यष्टृत्वं विदुषा मेव याजयितृत्व मित्युभय मेवोपपादयति— "य एव मिति। 'यः' पुमान् 'एतं' वाजपेयं यज्ञम्, ऋगादिवेदत्रयेण 'सृष्टं' चेतिकर्त्तव्यतया विहित इति 'विद्यात्' जानीयात्, 'ये' च 'प्रजयः' प्रज्ञातवन्तः साङ्गोपाङ्गं कर्म ज्ञातवन्त ऋत्विजः, 'ते' 'एनम्' यथादिष्टं विद्वांसं यष्टारं 'याजयेयुः'। अतः साधारणैर्वाजपेययागो न कर्त्तव्य इत्यभिप्रायेण "न वाजपेयेन यजेत"-इत्युक्तम्। "एवा ह स्वेवैतस्येति। क्रियाकुशलाना मृत्विजां याजयितृत्व मेव यज्ञसमृद्धिः; यज्ञवैकल्याभावेन यज्ञसम्पूर्त्तेः सम्भवात् ॥ १० ॥

अथ वाजपेये अधिकारिविधिं सूचयति— "स वा एष ब्राह्मणस्येति। यतो बृहस्पतिनानुष्ठितं, यतो देवानां मध्ये बृहस्पतिः ब्राह्मणजात्यभिमानी, ब्राह्मणबृहस्पत्योर्ब्रह्मसम्बन्धादैकरूप्यम्; 'ब्रह्म अधीते वेदं वा ब्राह्मणः'-इति व्युत्पत्तेः। इन्द्रेणाप्यनुष्ठितं, यतो देवानां मध्ये इन्द्रः क्षत्रियजात्यभिमानी। इन्द्रराजन्ययोः क्षत्रसम्बन्धादैकरूप्यम्; क्षत्रं नाम बलम्, तत्सद्भावात् उभयोः। अतो मनुष्येष्वपि ब्राह्मणराजन्ययोरेवाधिकारो न तु वैश्यस्य *। अत एव कात्यायनेनोक्तम्— "वाजपेयः अवैश्यस्य"-इति † ॥ ११ ॥

---

* "न वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः"-इति तै० ब्रा० १.३ २.१।

† का० श्रौ० सू० १४ १ १।

वाजपेयस्य साम्राज्यफलमिति वक्तुं प्रसङ्गात् राजसूयस्याधिकारिभेदेन फलभेदेन वा अवरत्वं दर्शयति— "राज्ञ एव राजसूय मित्यादिना *। एवकारोऽन्ययोगव्यवच्छेदार्थः। राजशब्देन क्षत्रिय उच्यते, न तु राज्ययोगाद्राजेति व्युत्पत्त्या ब्राह्मणादिर्विवक्ष्यते। "अवरं वा इति। राजसूयाख्यं कर्म 'अवरं' निकृष्टम्; कतिपयदेशाधिपतित्वरूपराज्यफलमात्रसाधनत्वात्। वाजपेयाख्यं कर्मैव 'परम्' उत्कृष्टम्; सर्वदेशाधिपतित्वरूपसाम्राज्यफलसाधनत्वात्। राज्यात् साम्राज्यस्याधिक्य माह— "कामयेत वै राजेति ॥ १२, १२ ॥ .

अथ वाजपेयस्य साम्राज्यफलं दर्शयति— "स यो वाजपेयेनेति। 'स' सम्राट् वाजपेययाजी 'इदं' परिदृश्यमानं 'सर्वं' जगत् 'संवृङ्क्ते' संवर्जयति, वशीकरोतीत्यर्थः †। एवं साम्राज्यफलं वाजपेयं विधाय तत्र कर्मादौ सावित्रहोमं विधत्ते— "स कर्मेव कर्मेण इति। वीप्सया सर्वकर्मादौ कर्तव्यत्वमभिधीयते। येषां कर्मणामादौ सावित्रहोमः कर्तव्यः, तानि कर्माणि कात्यायनेन सङ्गृहीतानि— "देव सवितरिति जुहोति यजत्यादिषु, सकृद् दीक्षारम्भे कर्मैकत्वात्, क्रयप्रदेशारम्भप्रवर्ग्योखादर्शाग्निप्रणयनहविर्धानाग्नीषोमीयाणां सदआग्नीध्रधिष्ण्यनिवपनवसतीवरीग्रहणपरिहरणेषु च कर्मान्तरत्वात्"—इति ‡। तत्र मन्त्रं विधत्ते—"देव सवितरिति §। तस्य मन्त्रस्याय

* 'राज्ञो राजसूयः'—इति का० श्रौ० सू० १५ १ १।
† मीमांसाया न्यायमालायां ( १अ० ४पा० ) द्रष्टव्यम्।
‡ का० श्रौ० सू० १४ १ ११, १२, १३।
§ वा० स० ९, १ १।

अर्थः ;— हे 'सवितः देव' प्रेरक। अन्तर्यामिन्। 'यज्ञं' वाजपेयं 'प्रसुव' प्रवर्त्तय, 'यज्ञपतिं' यजमानं 'भगाय' पशुधान्यरूपायैश्वर्याय 'दिव्यः' दिवि भवः यो 'गन्धर्वः' सवितुरनुचरः 'केतपूः' केतान् पुनाति, प्राणिनां विज्ञानानि शोधयन् भवति, सः 'नः' अस्माकं 'केतं' वाजपेयविज्ञानं 'पुनातु' शोधयतु। 'वाचस्पतिः' प्रजापतिश्च सवित्रानुज्ञातः 'नः' अस्मदीयं 'वाचं' हवीरूपमन्नम् 'अद्य' अस्मिन्नहनि 'स्वदतु' स्वादयतु ॥ १४ ॥

सवितुरुपधावनं बृहस्पतिसम्बन्धेन स्तौति— "तस्यैवाद इति। 'अदः' अस्मिन् विप्रकृष्टे पूर्वस्मिन् काले यथा 'बृहस्पतिः सवितारम्' 'उपाधावत्', तत. तस्मै सविता चानुज्ञां ददौ, एवम् 'एषः' इदानीं यजमानोऽपि तमेव 'उपधावति', तस्मै च 'प्रसविता' प्रेरयिता प्रसौति, अनुजानातीत्यर्थः ॥ १५ ॥

"तस्मादाहेति। सावित्रहोमस्य सद्यद्वृत्तितां दर्शयति— "प्राक् सुत्याया इति। प्राक् मर्यादायाम्। 'प्राक् सुत्यायाः' सुत्यादिनात् पूर्वम्, नोत्तरत्रेत्यर्थः। अत एव कात्यायनः— "प्राक् सुत्यायाः"—इति * ॥ १६ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १४ । ११ ॥

(अथ द्वितीयं ब्राह्मणम्)

अंशुं गृह्णाति। सर्व्वत्वायैव तस्माद्वा अंशुं गृह्णात्यथैतान् प्रज्ञातानेवाग्निष्टोमिकान् ग्रहान् गृह्णात्याग्रयणात् * ॥ १ ॥

अथ पृष्ठ्यान् गृह्णाति। तद्यद्देवैतैर्देवा उदजयंस्तद्वैष एतैरुज्जयति † ॥ २ ॥

अथ षोडशिनं गृह्णाति। तद्यद्देवैतेनेन्द्र उदजयत्तद्वैष एतेनोज्जयति ‡ ॥ ३ ॥

अथैतान् पञ्च वाजपेयग्रहान् गृह्णाति। ध्रुवसदं त्वा नृषदं मनःसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येषा वै लोकानामध्रुवमेव ध्रुव इयं पृथिवी ममेवैतेन लोकमुज्जयति ॥ ४ ॥

अप्सुषदं त्वा §। घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनि-

* ग्रहान् — इति ग घ।
† ‡ जि — इति क।
§ ग घ पुस्तकयोरिह चिन्हमिदं () नास्ति।

रिन्द्राय त्वा जुष्टतम मिति सादयत्येषां वै लोकाना मय मेव व्योमेद मन्तरिक्षलोक मेवै-तेनोज्जयति ॥ ५ ॥

पृथिविसदं त्वा। अन्तरिक्षसदं* दिविसदं देवसदं नाकसद मुपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येष वै देवसन्नाकसदेव एव देवलोको देव-लोक मेवैतेनोज्जयति ॥ ६ ॥

अपाꣳ रस मुद्वयसꣳ। सूर्ये सन्तꣳ समाहितम्। अपाꣳ † रसस्य यो रसस्तं वो गृह्णाम्युत्तम मुप-यामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येष वा अपाꣳ रसो यो ऽयं पवते स एष सूर्ये समाहितः सूर्यात् पवत ऽएत मेवैतेन रस मुज्जयति ॥ ७ ॥

ग्रहा ऊर्जाहुतयः। व्यन्तो विप्राय मतिम्। तेषां ‡ विशिप्रियाणां वोऽह मिष मूर्जꣳ समग्रभ मुपयाम-

---

* 'अन्तरिक्षसदं'—इति ■, घ।

† 'समाहित मपाꣳ'—इति ग, घ।

‡ 'मतिं तेषां'—इति ग, घ।

गृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष * ते योनि-
रिन्द्राय त्वा जुष्टतम मिति सादयत्युर्वं रसो रस
मेवैतेनोज्जयति ॥ ८ ॥

तान्वा ऽएतान् † । पञ्च व्वाजपेयग्रहान् गृ-
ह्णाति प्रजापति वा ऽएष उज्जयति यो व्वाज-
पेयेन यजते संवत्सरो वै प्रजापतिः पञ्च वा
ऽऋतवः संवत्सरस्य तत् प्रजापति मुज्जयति तस्मात्
पञ्च व्वाजपेयग्रहान् गृह्णाति ‡ ॥ ९ ॥

अथ सप्तदश सोमग्रहान् गृह्णाति । सप्त-
दश सुराग्रहाम् प्रजापतेर्व्वा ऽएते ऽअन्धसी यत्
सोमश्च सुरा च ततः सत्यं श्रीर्ज्योतिः सोमो
ऽनृतं पाप्मा तमः सुरैते ऽएवैतदुभे ऽअन्धसी
ऽउज्जयति सर्व्वं वा ऽएष इद मुज्जयति यो व्वाज-
पेयेन यजते प्रजापतिम् ह्युज्जयति सर्व्वं मु ह्येवेदं
प्रजापतिः ॥ १० ॥

स यत् सप्तदश । सोमग्रहान् गृह्णाति सप्त-
दशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावा-

* सुरा मेवं—इति ग च।

† °तान्—इति ग, च।

‡ °ति—इति च।

नैव यज्ञो यावत्यस्य मात्रा तावतैवास्मैतत् सत्यꣳ श्रियं ज्योतिरुज्जयति * ॥ ११ ॥

अथ यत् सप्तदश । सुराग्रहान् गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्मैतदनृतं पाप्मानं तम उज्जयति ॥ १२ ॥

त उभये चतुस्त्रिꣳशद् ग्रहाः सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तत् प्रजापतिमुज्जयति ॥ १३ ॥

अथ यत्र राजानं क्रीणाति । तद्दक्षिणतः प्रतिवेशतः केशवात् पुरुषात् सीसेन परिस्रुतं क्रीणाति न वा एष स्त्री न पुमान् यत् केशव पुरुषो यदाह पुमांस्तेन न स्त्री यदु केशवस्तेनो † न पुमान्नैतदयो न हिरण्यं यत् सीसं ‡ नैष सोमो न सुरा यत् परिस्रुत् तस्मात् केशवात् पुरुषात् सीसेन परिस्रुतं क्रीणाति ॥ १४ ॥

अथ पूर्वेद्युः । द्वौ खरौ कुर्वन्ति पुरोऽक्ष

---

* ति—इति क। † स्त्रेन—इति ग, घ।

‡ सीस—इति ग, घ।

"अथैतानिति । 'प्रज्ञातान्' प्रसिद्धान् 'आग्निष्टोमिकान्' अग्निष्टोमे विहितान् 'ग्रहान्' 'आ आग्रयणात्' आग्रयणपर्य्यन्तान् गृह्णीयात् । उपांश्वन्तर्यामौ, ऐन्द्रवायव मैत्रावरुणाश्विनान्, शुक्रामन्थिनौ, आग्रयणञ्च गृह्णीयादित्यर्थः ॥ १ ॥

अथातिग्राह्यान् विधत्ते— "अथ पृष्ठ्यानिति । 'पृष्ठ्यान्' अतिग्राह्यान् । ते हि पृष्ठ्यषडहसम्बन्धात् * पृष्ठ्या इत्यर्थः । पृष्ठ्यषडहे प्रतिदिवस मेकैकस्य, विश्वजिति सर्वपृष्ठे चैकाहे ग्रहणात् एतेषां पृष्ठ्यसञ्ज्ञा । तथाच चतुर्थकाण्डे समाम्नातम् —"अग्नीन्द्रसूर्य्या अतिग्राह्यान् ग्रहाः"–इत्यारभ्य, "तान् वै पृष्ठ्ये षडहे गृह्णीयात्, पूर्वे त्र्यह आग्नेय मेव प्रथमेऽहन्यैन्द्रं द्वितीये सौर्य्यं तृतीय एव मेवाभ्यहम्"–इति, तथा "विश्वजिति सर्वपृष्ठ एकाह एव गृह्यन्ते"–इति च †। तेषां मन्त्रानि गता खिलसञ्ज्ञैव शाखान्तरस्थम्, मन्त्रान्तरानुपदेशात् । अत्र कात्यायन— "प्रातस्सवनेऽतिग्राह्यान् गृहीत्वा षोडशिनम्"–इति ‡ ॥ २, ३ ॥

पृष्ठ्यानन्तरमपि विधत्ते— "अथैतान् पञ्चेति । सूचितं हि— "पञ्च चैन्द्रान्, ध्रुवसद मिति प्रतिमन्त्रम्"–इति § । अथैतान् तेषां पञ्चानां ग्रहाणा मपि पञ्च मन्त्रान् विधत्ते—"ध्रुवसद इत्यादिना । तत्र, प्रथमग्रहमन्त्रस्याय मर्थः ।,— 'ध्रुवसद' ध्रुवे स्थिरे

---

* 'पृष्ठ्यषडहसम्बन्धात्'—इति ख।

† पुरस्तात् ( ४ ४ ५ २–१२ ) द्रष्टव्यम्।

‡ का० श्रौ० सू० १४ १ २८ क।

§ का० श्रौ० सू० १४ १ २८ ख २ १।

|| वा० स० ९ ७ ०।

भूलोके सीदन्तम्, 'नृषदं' नृषु नेतृषु सीदन्तम्, 'मनःसदं' मनसि वर्त्तमानं 'त्वा' त्वा ग्रहम् 'इन्द्राय' 'जुष्टम्' अभिरुचितं 'गृह्णामि' त्वाम्। 'उपयामगृहीतोऽसि' पृथिव्याख्येन पात्रेण गृहीतोऽसि; "इयं वा उपयामः"—इति श्रुतेः *। अत्र भिन्नक्रमः, यत उपयामगृहीतोऽसि अतस्त्वा गृह्णामीति। 'ते' तव एष खरप्रदेशो 'योनिः' स्थानम्, तस्मात् 'इन्द्राय' 'जुष्टतमम्' अतिप्रियतमं त्वा मिह सादयामीति। "एष ते योनि"—इति मन्त्रान्त्यभागस्य विनियोग माह—"सादयतीति। मन्त्रगतं ध्रुवपदं व्याचष्टे—"एषां वा इति। 'एषां लोकानां' भूम्यादीनाम् 'अयं' परिदृश्यमानो लोको 'ध्रुवः' इदंशब्दस्यार्थ माह—"इयं वै पृथिवीति ॥ ४ ॥

"अप्सुषद मिति। द्वितीयग्रहमन्त्रस्यायमर्थः †;— अप्सु सीदन्तीत्यप्सुषत् तम्, घृते सीदन्तम्, 'व्योमि' अन्तरिक्षे सीदन्तम्। उपयामगृहीतोऽसीत्यादि पूर्वेण समानार्थं इति नेह विव्रियते। व्योमसदितिपदस्य तात्पर्य माह—"इद मेव व्योमेति। विशेषेण ओम् अवनं व्याप्तिर्यस्य तद् व्योम। तदेव 'अन्तरिक्षम्' तदेतद्द्वितीयग्रहणेन ‡ जितवान् भवतीत्यर्थः ॥ ५ ॥

"पृथिविसद मिति। तृतीयमन्त्रस्यार्थः §;— पृथिव्यादिषु त्रिषु लोकेषु सीदन्त अत एव सदम्। लोकत्रयाभिमानिषु अग्निवायुसूर्येषु, अन्येष्विन्द्रादिषु च आसीदन्तम्। 'नाकसदम्' न विद्यते अकं दुःखं यस्मिन्निति नाकः स्वर्गो देवलोकः। अत एव स्वर्गपदस्य सुखवाचकत्व मन्यत्रोक्तम्—

---

* श० ब्रा० ४ १ २ ७।  † वा० सं० ९ २ २।

‡ ०तद्विपरीतग्रहणे — इति प. क.।  § वा० सं० ९ २ ३।

मेवान्यं पश्चादन्यं नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति तस्मात् पूर्वार्द्धे खरौ कुर्व्वन्ति पुरोऽन्य मेवान्यं पश्चादन्यम् * ॥ १५ ॥

अथ यत्र पूर्वया द्वारा । स्वसतीवरीः प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति दक्षिणत' पात्राण्यभ्यवहरन्ति पुरो ऽन्तमेव प्रत्यङ्ासीनो † ऽध्वर्युः सोमग्रहान् गृह्णाति पश्चादन्तं प्राङासीनो ‡ नेष्टा सुराग्रहान्त्सोमग्रह मेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टा सोमग्रह मेवाध्वर्युर्गृह्णाति सुरा नेष्टैव नेदेनान् व्यत्यासं गृह्णीतः ॥ १६ ॥

न प्रत्यङ्ङ सन्न मध्वर्युः । सोमग्रह मतिहरति न प्राङ्ङ सन् नेष्टा सुराग्रहं नेज्ज्योतिश्च तमश्च संसृजावेति § ॥ १७ ॥

उपर्युपर्येवाक्ष मध्वर्युः । सोमग्रहं धारयत्यधोऽधोऽक्ष नेष्टा सुराग्रहं सम्पृचौ स्थः सं मा भद्रेण पृङ्क्त मिति नेत्याप मिति अथावेति तौ पुनर्व्विहरतो विपृचौ स्थो वि मा पाप्मना पृङ्क्त

* 'मन्यम्'—इति क, ख। † प्रत्यङ् ङासीनो—इति ग घ। ‡ 'प्राङ् ङासीनो—इति ग घ। § संसृजावेति'—इति ख।

मिति तदाथर्षीकां मुक्त्वादिहिंहटेव मेनए सर्व्वस्मा-त्पाप्मनो व्यिवृत्तस्मिन्न तावच्च मैनो भवति याव-त्पापाच्चायं तौ सादयन: * ॥ १८ ॥

अथाध्वर्युः । हिरण्यपात्रेण मधुग्रहं गृह्णाति तं मध्ये सोमग्रहाणां सादयत्यथोत्तरं गृह्णा-त्यथ ध्रुव मथैतान्त्सोमग्रहानुत्तमे स्तोत्र उक्थि-नां चमसेषु व्यवनीय जुह्वति ताम् भक्षयन्त्यथ माध्यन्दिने सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते तत्काल: ॥ १९ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् [१.२.] ॥

एव विहिते वाजपेये ग्रहविशेषा द्वितीयब्राह्मणेऽभिधीयन्ते, प्राक्तनास्त्वभिहितास्ते। तत्र तावन्मधुग्रहं विधत्ते— "मधु गृह्णातीति। 'मधु' सोमग्रहं सोमद्रव्येण गृह्णीयात्। 'सर्वत्वाय' सर्वविहितग्रहयुक्तत्वादोषपरिहारेण यज्ञस्य समग्रत्व इत्यर्थः। अंशुदाभ्ययोरप्राकृतत्वेन चोदकादप्राप्तयोरिह विधानं युक्तम्। अत एवापस्तम्बः— "अंश्वदाभ्यौ गृहीतव्यौ बुभूषताऽऽस्तौ न सर्वत्र गृहीतव्यौ वाजपेये राजसूये सत्रे सर्ववेदसे" -इति †। अथ ग्रहलिङ्गकानुपांशुयामादीनतिदिशति—

* 'सादयत:'—इति ग, घ।

† आप० श्रौ० सू० १२ ८ १२, १३।

"यत्र दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्"—इति ।

तत्र नाकपदं व्याचष्टे— "एष एव देवलोक इति ॥ ६ ॥

"अपां रसमिति । चतुर्थयजुर्मन्त्रस्यायमर्थः *,— 'अपां' 'रसं' सारभूतम्; उदकस्यैव सोमरसत्वेन परिणतत्वात् । 'उद्वयसम्' उत्कृष्टगतम् । "वी गति-प्रजनन-कान्त्यसन-खादनेषु †"—इत्यस्मादसुनि रूपम् । यद्वा, वय इत्यन्ननाम ‡, उद्गतमन्नं जीवनं वा यस्मिन् । सोमरसोऽमृतो जीवनहेतुश्च; "अपाम सोममममृता अभूम §"—इत्युक्तत्वात् । 'सूर्ये' 'सन्तं' विद्यमानं 'समाहितं' तत्रैव सम्यगाहितम्; रसस्योदकादिरूपस्य आदित्ये एवावस्थानात् । 'अपां' 'रसस्य' सारभूतस्य वल्लीरूपेण परिणतस्य सोमस्य 'यो रसः' दशापवित्रात्स्रवमाणः, तम् । आपः । 'वः' युष्मदर्थं सम्बन्धिनम् 'उत्तमम्' उत्कृष्टस्वरसं 'गृह्णामि' ‖ । "उपयामेत्यादि । व्याख्यातम् । मन्त्रं व्याचष्टे— "एष वा अपां रस इति । 'योऽयं पवते' दशापवित्रात् स्रवति, 'सः' अपां रसः । "एषः सूर्य इति । 'एषः' खलु सोमरसः उदकात्मना पूर्वं 'सूर्ये' 'समाहितः' सम्यगवस्थितः, इदानीं 'सूर्यात्' सूर्यप्रकाशाद् दशापवित्राद् 'पवते' स्रवति ॥ ७ ॥

"ग्रहा ऊर्जाहुतय इति । पञ्चमयजुर्मन्त्रस्यायमर्थः ¶;— हे ग्रहाः । गृह्यन्त इति 'ग्रहाः' सोमाः । 'ऊर्जाहुतयः' ऊर्जं भक्ष्यं सवनीयपुरोडाशमभिलक्ष्य हूयमानाः; यद्वा,

---

* वा० सं० ९. ३, १ । † धातु० पा० ३८ पर० ।
‡ निघ० २ ७ ७ । § ऋ० सं० ८ ४८, ३ ।
‖ 'गृह्णामि'—इति च, छ । ¶ वा० सं० ९. ३ २ ।

मद्याहुतिभूता यूयम्। 'विप्राय' मेधाविने, स्वापेक्षितफलपरि-पूरकाय वा यजमानाय। 'मति' विवच्चिता बुद्धिं 'व्यन्त.' पश्यन्तोऽनुजानन्तो भवतेति शेष। 'विशिप्रियाणा' "शिप्रे हनू नासिके वा"-इति * यास्कवचनम्; इह हि हनू गृह्येते, तत्र भवं कर्म शिप्रियम्, विगतं शिप्रियं येषां ते। यत्र हनुव्यापाराभावात् शोभनाभिपतनमकृता इत्यर्थ। यद्वा, विविधानि शिप्रियाणि हनुस्थानीयानि पात्राणि, तत्पर्यन्तं, तेषां 'व.' युष्माकं सम्बन्धिनम् 'इदम्' पयम् 'ऊर्जम्' बलप्रद सोम रसं 'समग्रभम्' "ग्रहोर्भं †" समग्रहम्, गृह्णामि। शिष्टं पूर्ववत्। ऊर्क् शब्दसूचितमर्थं माह—"ऊर्ग् वै रस इति ॥ ८ ॥

यद्गता पञ्चसङ्ख्या प्रशंसति— "तान् वा एतानिति। वाजपेययागस्य स्वरूपावाप्तिसाधनत्वात् प्राजापत्य संवत्सरात्मतया पञ्चर्तुरूपत्वात् यहाणां पञ्च सङ्ख्या युक्तेत्यर्थ ‡ ॥ ९ ॥

ग्रहान्तराणि सङ्ख्याणि विधत्ते— "अथ सप्तदशेति §। गृह्यन्त इति ग्रहा सोमा, सोमाय ते ग्रहाश्चेति विग्रह', सोमस्य वा ग्रहा। उभयेषां ग्रहाणां द्रव्यद्वय मनूद्य प्रशंसति— "प्रजापतेर्वा इति। 'अन्धसी' अन्ने इत्यर्थ। 'सत्य श्री ज्योति' सोम' सत्य श्री ज्योतिरात्मकत्व सोमस्य, इतरस्यास्तु 'अनृतं पाप्मा तम' अनृतपापतमोरूपत्वम्। पाप्मेति दारिद्र्यम् ॥ १० ॥

उभयग्रहसङ्घ्या प्राजापत्यात्मकत्वेन स्तौति— "स यत् सप्त

* निरु० ६ ३ १। † पा० ८ २ ३२ सू० वा० १।

‡ 'अतिग्राह्यवद्धोम.—इति का० श्रौ० सू० १४.२ १। 'पञ्चानां मैन्द्राणाम्'—इति तत्र वृत्ति.।

§ 'सप्तदशापरान्'—इति का० श्रौ० सू० १४ २ ३ 'सोमग्रहान्'।

दर्शयति । प्रजापतेः सप्तदशत्वम् "आश्रावय"—इत्यादि सप्तदशाक्षरमन्त्रात्मकत्वादित्यवगन्तव्यम् * । स एव यज्ञः , आश्रावयेत्यादिमन्त्राभावे यज्ञस्यासिद्धेः । श्रूयते च "प्रजापतिर्वै यज्ञः" —इति † । अत्र 'स यज्ञः' 'यावान्' यत्परिमाणः , कियत्सङ्ख्याकावयव इत्यर्थः । 'यावती' 'मात्रा' परिमितिः , 'तावतैव' सप्तदशसोमग्रहवता यज्ञेन 'सर्वं' सर्वं यज्ञात्मकस्य प्रजापतेः सत्यादिकं यष्टा वर्जितवान् भवतीति ॥ ११ ॥

"अथ यत् सप्तदशेति । यथा सोमग्रहवाक्यं योजितम् , एवमेव सुराग्रहवाक्यं योज्यम् , एतावांस्तु विशेषः — तत्र सत्यादेरुन्धप्राप्तिः , अत्रानृतादेर्निरासोऽभ्यय इति ‡ ॥ १२ ॥

त्रिविधग्रहाणां सङ्ख्यां मिलित्वा स्तौति — "त उभये चतुस्त्रिंशदिति । अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रवषट्काराविति 'त्रयस्त्रिंशद्' देवताः , 'प्रजापतिः' तु 'चतुस्त्रिंशः' इति ॥ १३ ॥

प्राकृतं सोमक्रयणविधिं मनूद्य परिस्रुत्क्रयणं विधत्ते — "अथ यत्रेति । 'यत्र' प्रदेशे 'राजानं' सोमलतामित्यर्थः , क्रीणीयात् , तस्य दक्षिणे प्रतिवेशे स्थाने 'केशवात्' केशा अस्य सन्तीति स तथोक्तः । 'केशाद्वोऽन्यतरस्याम्'—इति §

---

* स एष यज्ञः — "आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः"—इति तै० सं० १ ६ ११ १

† पुरस्तात् ( श० ब्रा० १ १ १ १३ ) द्रष्टव्यम् ।

‡ नेदं च तावत सौत्रान् इति का० श्रौ० सू० १८ २ ८ ।

§ पा० सू० ५ २ १०९ ।

सुरा न भवतीति ततोऽधिका, सोमवत्पूतत्वाभावात् ततो न्यूना। तस्माद् यथोक्त मेव कर्त्तव्य मिति स्थितम् ॥ १४ ॥

अथ द्वितीय मेव* यज्ञपात्रा यज्ञसादन माभूदिति प्रदेश-विशेष विधत्ते— 'अथ पूर्वद्युर्द्वौ खराविति। 'पुरोऽक्षम्' शकटस्याधस्तात् अक्षस्य पुरोभागे एकाम्, 'पश्चादक्षम्' अक्षस्य पश्चाद्भागेऽपरम्, इति 'द्वौ खरौ' 'पूर्वेद्यु' पूर्वदिवसे कुर्यु †। तत्र कारण माह— "नेत् सोमग्रहानिति। "नेद् सादया-मेति। सह सादन मयुक्त मित्यभिप्रायेण पृथक्-सादनार्थे खर-द्वय कर्त्तव्य मित्यर्थः। 'नेत्'—इति परिभये‡ ॥ १५ ॥

अस्तीर्ण्णाया हविर्द्धानप्रपादन मनूद्य परिस्तुतप्रपादने कश्चिद् विशेष विधत्ते— "अथ यत्रेति। 'अपरया' पश्चि-मया 'द्वारा' 'नेष्टा' नाम ऋत्विक्, पत्नीसंयाजे वर्त्तते§ 'प्रपादयति' प्रवेशयेदित्यर्थः। "दक्षिणत इति। हविर्द्धानस्य दक्षिणतो द्वार कृत्वा तेन सोमग्रहपात्राणि सुराग्रहपात्राणि च प्रवेशयनीत्यर्थः‖। सूचित हि— "दक्षिणत सन्धि करोति, यूपवेष्टन समदयभिर्वंस्त्रैर्वुद्दयन्वन वा परिव्ययणकाले, —० सन्धिना पात्राण्याहृत्य"—इति ¶।

---

* 'कर्त्तव्य मेव—इति च।

† का० श्रौ० १४ १ १८ सू० द्रष्टव्यम्।

‡ 'यथापि नेत्येष इत्येतेन सम्प्रयुज्यते परिभये"—इति निरु० १ ३ ६।

§ तथाचाश्वलायन — "चत्वारस्त्रिरथा तस्योत्तरे अथ — होता —० अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता"—इति ४ १ ६।

‖ प्रवेशयन्तीत्यर्थ'—इति च क।

¶ का० श्रौ० सू० १४ १ १६—२१।

वर्गद्वयग्रहणे ऋत्विजोर्नियमं दर्शयति— "पुरोऽध्व मित्था दिना। विभागेन धारणाय व्यत्यासं विधत्ते— "सोमग्रहं नेष्टा ध्वर्युरिति। 'व्यत्यासम्' व्यत्यस्य व्यत्यस्येत्यर्थः। अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति, नेष्टा प्रथमं सुराग्रहं गृह्णीयात् *, ततो द्वितीये द्वितीय मिति सोऽयं व्यत्यासः † ॥ १६ ॥

ग्रहाणां मन्त्रप्रदेशप्रापणं निषेधति— "न प्रत्यञ्च मध्य मिति। 'प्रत्यञ्च मध्यम्' यज्ञस्य पश्चाद् भाग 'प्रति' 'सोमग्रहम्' 'अध्वर्युः' 'न प्रतिहरति' नातिहरेत्, नातिक्रामयेत्। एवं 'नेष्टा' अपि 'सुराग्रहं' 'प्राञ्च मध्यम्' शकटाक्षस्य पूर्वदेशं नाति हरेत्। उभयत्र कारण माह— "तेजोज्योतिरिति। यदि ग्रहाणां मन्योन्यदेशातिक्रमणं स्यात्, तर्हि तेजस्तिमिरयोः संसर्गः स्यात्, स मा भूदिति व्यतिहरणनिषेधः। सोमस्य ज्योती रूपत्वं सुरायास्तु तमोरूपत्वं च प्रागावेदितम् ‡ ॥ १७ ॥

उभयग्रहधारणे कश्चिद् विशेष विधत्ते— "उपर्युपर्यक्षाध्वर्युरिति। अक्षस्य सविकृष्टोपरिभाग एव सोमग्रहस्य, सन्निकृष्टाधःप्रदेश एव सुराग्रहस्य §। "उपर्यधस सामीप्ये"— इति विधानम् ‖। धारणमन्त्रं विधत्ते— "सम्पृचौ स्थ इति ¶। तस्यार्थः,— वर्गद्वयमध्ये एकैकस्योत्तमप्रदेशे धारणात् उभयो

* का० श्रौ० १४ २ ४ सू० द्रष्टव्यम्।
† का० श्रौ० सू० १४ २ ५।
‡ का० श्रौ० सू० १४ २ ६।
§ 'सुराग्रह'—इति च क। मूलस्य प्रतीकग्रहणमिदं स्यात।
‖ पा० सू० ८ १ ७।
¶ वा० स० ६, ४ २।

द्वित्वेन मन्त्रे 'सम्पृचौ'-इति, 'पृङ्क्तम्'-इति च द्विवचनं युक्तम्। हे सोमसुरायज्ञौ ? 'सम्पृचौ' संस्रष्टारौ 'स्थ'। यतो युवां सम्पृक्तावभवतम्, अतो 'मा' माम् अपि 'भद्रेण' प्रजापतिना "प्रजा वै भद्रम्, पशवो भद्रम्"-इति * श्रुतेः। 'पृङ्क्त' संयोजयत मिति। कात्यायनस्तु प्रयोगक्रमानुसारेण आद्योत्तरयो मन्त्रयोः प्रतीके चतुर्थमन्त्रेणोदाजहार— "अथातिक्रमणम् पात्राभ्याम्, उपर्युपर्यग्नि मध्वर्युर्धारयत्यधोधो नेष्टा सम्पृचाविति, विपृचावित्याहरते"-इति †।

प्रयोजनकथनमुखेन मन्त्रस्य तात्पर्यं आह— "नेत् पाप मिति मनावेति। यदुभयोर्नेष्ट्रध्वर्योर्धारणसमये सम्पर्कयाचक मन्त्रे 'भद्रेण पृङ्क्त मिति' यत् प्रार्थनम्, तत् सदाचारं पाप मित्येव नेत्र प्रत्यविश्वभिप्रायेणेत्यर्थः ।

अथ प्रहरणात् तयोः स्वस्वप्रदेशेऽवस्थापन मन्त्रेण विभजते— "तौ पुनर्विहरत इति §। हे पात्रे ! 'विपृचौ' विश्लिष्टौ 'स्थ'। यत एवम्, अतो ममापि प्रार्थना वियोजन मिति।

मन्त्रस्योत्तरभागं व्याचष्टे— "तद्यथैषीका मिति। यथा 'मुञ्जात्' मुञ्जस्तम्बात् 'इषीकाम्' मध्यवर्त्ति तृणं 'विवृहेत्' पृथक् कुर्यात्, 'एवम्' 'एनं' यजमानं 'सर्वस्मात्' 'पाप्मनः' पापात् 'विवृहत' द्वे यज्ञपात्रे ( १ )। एतदेवाह— "तस्मिन

---

* "प्रजा भद्रेण पृङ्क्तेत्याह प्रजा वै भद्रम् प्रजयैवैनं समर्धयति"-इति तु मै० ब्रा० १ २ ४ ६।

† का० श्रौ० सू० १४ २ ६ ७, ८।

‡ सुराकम -इति च, ह।

§ का० श्रौ० सू० १४ २ ८।

तावन्नेति । 'खल'-शब्दोऽव्ययं * । यावत् स्थाप्यं तावन्मात्र' स्वल्प मपि 'एन.' पापं 'नशिम्' 'न' भवति ॥ १९ ॥

अथ मधुग्रहग्रहणं विधत्ते— "अथाध्वर्युरिति । तस्य सादन-मपीदं विधत्ते— "तं मध्य इति । अत्र कात्यायनः— "हिर-ण्मयेन मधुग्रह गृहीत्वा खरमध्ये सादयति"–इति † ।

अथ प्राकृतावुक्थ्यध्रुवग्रहौ दर्शयति— "अथोक्थ्य मित्यादि.। सूत्रकृता चनयोर्योदकादेव ग्रहण' सिद्ध मिति सूचितम्— "उक्थ्यादि"–इति ‡ ।

पृथग्ग्रहणसद्भावात् द्विविधग्रहाणां होमकाल' भक्षणं च विधत्ते— "अथैतानसोमग्रहानिति । तान् प्रातःसवने गृही-तान् सोमग्रहान् 'उत्तमे स्तोत्रे' तृतीयसवने बृहत्स्तोत्रे वाज-पेयसत्रावसाननिमित्ते कृते सति 'ऋत्विजां चमसेषु' 'व्यवनीय' व्यवनयनं कृत्वा जुहुयुर्भक्षयेयुश्च ।

तत्सद्भावात् सुराग्रहाणां मधुग्रहस्य च माध्यन्दिनसवनमध्ये विनियोगो भविष्यतीत्याह— "अथ माध्यन्दिन इति । 'उद्यति' –इति, "वद व्यक्तायां वाचि" §, कर्मणि यकि सम्प्रसारणम् । एतेषां होमाद्यावत् तद्विनियोगप्रकारोऽपि "अथाध्वर्युर्य यज-मानश्च पूर्वया द्वारा मधुग्रह मादाय निष्क्रामतः"–इत्यारभ्य, "अथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति"–इत्यादिना ।

---

* अम० को० ३ ४ ३ ।
† का० श्रौ० सू० १४ २ ९ ।
‡ का० श्रौ० सू० १४ २ १० ।
§ धा० पा० १००९ धा० ।
‖ पञ्चमे ब्राह्मणे २९ कण्डी द्रष्टव्या।

षड्विंशेऽध्याये वक्ष्यत इत्यर्थः । "तस्मात इति । 'अत' सोमग्रहहोमभक्षणप्रतिपादनानन्तर 'तस्य' आम्नातस्य सुराग्रहविनियोगप्रतिपादकवाक्यस्य पाठानुसन्धान कार्यमित्यर्थः ॥ १८ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् )

आग्नेयमग्निष्टोम ऽआलभते । अग्निर्वा ऽअग्निष्टोमो ऽग्निष्टोम * मेवैतेनोज्जयत्यैन्द्राग्नमुक्थेभ्य आलभत ऽऐन्द्राग्नानि वा ऽउक्थान्युक्थान्येवैतेनोज्जयत्यैन्द्रꣳ षोडशिन ऽआलभत ऽइन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति ॥ १ ॥

सारस्वतꣳ सप्तदशाय स्तोत्रायालभते । तदेतदनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वा ऽएष उज्जयति यो वाजपेयेन यजते

---

* 'अग्निष्टोम'—इति ग. घ.।

संवत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रि मुप्नयति तस्मादेतद्नतिरात्रे सति रात्रे रूपं क्रियते * ॥ २ ॥

अथ मरुद्भ्य उज्जेषिभ्यः। वशां पृश्निमालभत ऽइयं वै वशा पृश्निर्यदिद मस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरन्नं वा ऽएष उज्जयति यो वाजपेयेन यजते ऽन्नपेयए ह वै नामैतद्यद्वाजपेयं विशो वै मरुतो ऽन्नं † वै विश उज्जेषिभ्य इत्युज्जित्या ऽएव दुर्वेदे ऽउज्जेषवत्यौ याज्यानुवाक्ये यद्युज्जेषवत्यौ न विन्देदपि ये ऽएव के च मारुत्यौ स्यातां दुर्वेदो ऽएष वशा पृश्निर्यदि वशां पृश्निं न विन्देदपि येव का च वशा स्यात् ॥ ३ ॥

तद्धा आहत ‡। यत्र होता माहेन्द्रं ग्रह मनुशएसति तद्वै वपया प्रचरेयुरेष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्य मेव स्तोत्रं निष्केवल्यए शस्त्र मिन्द्रो

---

* 'क्रियते'—इति ग, घ।

† 'अन्नं'—इति ग, घ। ‡ 'आहत'—इति ग, घ।

वै यजमानस्तन्मध्यत एवैतद्यजमाने वीर्यं दधाति तस्मादस्या अत्र वपया प्रचरेयुः ॥ ४ ॥

द्वेधावदानानि श्रपयन्ति । ततोऽर्धानां जुह्वा सुपस्तीर्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्य-नक्तावदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभि-घारयति न प्रत्यनक्तावदानानि तद्यदर्धानां द्वि-द्विरवद्यति तथैषा कृत्स्ना भवत्यथ यदेतैः प्रच-रन्ति तेन दैवीं विशं मुञ्चयत्यथाद्यानि मानुष्यै विश उपहरति तेनो मानुषीं विशं मुञ्च-यति ॥ ५ ॥

तद् तथा न कुर्यात् । स्खलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य एवं करोति तस्माद्यथैवेतरेषां पशूनां वपाभिः प्रच-रन्ति तदेवैतस्यै वपया प्रचरेयुरेकधावदानानि श्रप-यन्ति * न मानुष्यै विश उपहरति † ॥ ६ ॥

अथ ‡ सप्तदश प्राजापत्यान् पशूनालभते । ते वै

---

* 'श्रपयन्ति'—इति च का०-टीप-इटम् ।
† 'उपहरति'—इति ख, 'उपहरति'—इति ग, घ ।
‡ 'अथ'—इति क ।

सर्वे तूपरा भवन्ति सर्वे श्यामाः सर्वे मुष्कराः प्रजापतिं वा ऽएष उज्जयति यो व्वाजपेयेन यजते ऽयं वै प्रजापतिः पशुर्वा ऽअयं तत् प्रजापति मुज्जयति सोमो वै प्रजापतिः पशुर्वै प्रत्यक्ष सोमस्तत्प्रत्यक्षं प्रजापति मुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजा-मुज्जयति ॥ ७ ॥

ते वै सर्वे * तूपरा भवन्ति। पुरुषो वै प्रजा-पतेर्नेदिष्ठ सो ऽयं तूपरो † ऽविषाणस्तूपरो वा ऽअविषाणः प्रजापतिः प्राजापत्या एते तस्मात् सर्वे तूपरा भवन्ति ॥ ८ ॥

सर्वे श्यामाः। द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्राजापत्या एते तस्मात् सर्वे श्यामा भवन्ति ॥ ६ ॥

सर्वे मुष्कराः। प्रजननं वै मुष्करः प्रज-ननं प्रजापतिः प्राजापत्या एते तस्मात् सर्वे

---

* 'सर्वे'—इति ग, घ।

† ग्रार्द्धचन्द्रचिह्न ग-घ पुस्तकयो न्नास्ति।

मुष्कारा भवन्ति दुर्वेदा एवाऽ सम्वृद्धाः पशवो यद्वे-
वाऽ समृद्धान् न विन्देदपि कतिपया एवैवाऽ समृद्धाः
स्युः सर्वं मु ह्येवेदं प्रजापतिः ॥ १० ॥

तदुहैके। व्वाच ऽउत्तम मालभन्ते यदि वै
प्रजापतेः पर मस्ति व्वागेव तदेतद्वाच मुत्तमाम
इति व्वदन्तस्तदु तथा न कुर्यात् सर्वं वा ऽइदं
प्रजापतिर्यदिमे लोका यदिदं किं च सा यद्वे-
वैषु लोकेषु व्वाग्वदति तद्वाच मुत्तमयति तस्माट्ट
तन्नाद्रियेत ॥ ११ ॥

तेषा माहृत् *। यत्र मैत्रावरुणो व्वामदेव्य
मनुशंसति तदेषां व्वपाभिः प्रचरेयुः प्रज-
मनं वै व्वामदेव्यं प्रजननं प्रजापतिः प्राजापत्या
एते तस्मादेषां मत्र व्वपाभिः प्रचरेयुः † ॥ १२ ॥

यथेष्टा अनुयाजा भवन्ति ‡। अव्यूढे स्रुचा-
वथैषाऽ हविर्भिः प्रचरन्ति सोऽग्नोऽग्नो वै
प्रजापतिमन्वन्तत एवैतत् प्रजापति मुत्तमयत्यथ

* 'माहृत'—इति क, ख।

† 'तस्मादेषां व्वपाभिरत्र प्रचरेयुः'—इति क, ख।

‡ 'भवन्ति'—इति क।

यत् पुरा प्रचरेद्यथा य मध्वान मेष्यन्त्स्यात्तं गत्वा स क्व ततः खादेत्तं तत्तस्माद्देषा मत्र हविर्भिः प्रचरन्ति ॥ १३ ॥

तदु तथा न कुर्यात्। ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं करोति तस्माद्यथैवेतरेषां पशूनां वपाभिः प्रचरन्ति तद्वैवैतेषां वपाभिः प्रचरेयुर्यथैवेतरेषां पशूनाᳫ हविर्भिः प्रचरन्ति तद्वैवैतेषाᳫ हविषा प्रचरेयुरेषानुवाक्या भवत्येका * याज्यैवादेवत्या हि प्रजापतय ऽइत्युपाᳫशूक्त्वा छागानाᳫ ह-विषो ऽनुब्रूहीति प्रजापतय ऽइत्येवोपाᳫशूक्त्वा † छागानाᳫ हविः प्रस्थितं प्रेष्येति वषट्कृते जुहोति ॥ १४ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१.३.] ॥

तृतीये पशुतन्त्रमभिधीयते। तत्र तावत् वाजपेयस्य अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थात्मकपशुसद्भावेन सर्वक्रत्ववरोधकत्वमस्तीति वैदिकप्रसिद्धिः ‡ तत्सकलसाधारणपशुसद्भावे सत्यु-

---

* 'एका'—इत्येव ग घ।

† 'इत्युपांशूक्त्वा'—इति ख, घ।

‡ 'वैदिकप्रसिद्धिः'—इति घ।

पश्यति, नान्यथा। तथा च तैत्तिरीयकम्— "ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र, अथ कस्माद् वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति, पशुभिरिति ब्रूयात्"–इति *। यज्ञशब्देन यजतिचोदिता वषट्कारप्रदाना अङ्गप्रधानभूता यागा अभिधीयन्ते। तत्समूहरूप एकफलसाधनतायापूर्ववान् कर्मविशेष क्रतुरित्यर्थ †।

अतस्तानग्निष्टोमादिगतानाग्नेयादिसवनीयपशून् विधत्ते— "आग्नेय मग्निष्टोम इति। तत्राग्निष्टोमस्य द्वादश स्तोत्रशस्त्राणि, उक्थ्यस्य उक्थत्रयेण पञ्चदश, षोडशिन षोडशिस्तोत्रेण सह षोडश, वाजपेयस्य बृहत्स्तोत्रेण सह सप्तदश, अतिरात्रपर्यायत्रयेण ‡ सह षोडशिपक्षे एकोनत्रिंशत्, अन्यदा अष्टाविंशति पशूनाम्।

तत्तत्क्रतुसाधारण्य द्योतयितु मग्निष्टोमादिपदाभिधानम्। अन्ते स्तूयते अग्निमिति अग्निष्टोमो नाम साम, अस्मिन् विषयभूते 'आग्नेय मालभते। एतेन पशुना अस्मिन् वाजपेये अग्निष्टोमस्य क्रतु मेवानुष्ठितवान् भवतीत्यर्थ। एव मुत्तरत्रापि योज्यम्। 'उक्थ्येभ्य' तृतीयसवने स्तूयमानेभ्योऽन्येभ्य स्तोत्रेभ्य § उक्थस्तोत्रेभ्य इन्द्रादिदेवताक । पशुरालम्भनीय। षोडशिने' षोडशिस्तोत्राय 'ऐन्द्र' पशुम् आलभेत ¶ ॥ १ ॥

"सारस्वत मिति। 'सप्तदशाय' सप्तदशसङ्ख्यापूरकाय बृहत्स्तोत्राय 'सारस्वतं' सरस्वतीदेवताकं * पशु मालभेत। अस्ति ह्य मिदं बृहत्स्तोत्रं वाजपेयस्यासाधारणं लिङ्गम्; श्रूयते हि— "सारस्वा बृहत्स्तोत्रम्"—इति †। कथं वाजपेये अतिरात्रान्तर्भाव इत्याशङ्क्य, अनेन सारस्वतपशुनैवातिरात्रस्यान्तर्भावं दर्शयति— "तदेतदिति। 'अनतिरात्रे', सति प्रकृते वाजपेये यज्ञे अतिरात्रान्तर्भावसिद्धये 'तदेतत्' सारस्वतालम्भनं 'रात्रेः' रात्रिपर्यायस्य 'रूपं क्रियते' ‡; तेन तदन्तर्भावोऽपि सिद्ध इत्यर्थः। एतेषां आग्नेयादीनां अग्निष्टोमादिसंस्थाचतुष्टयसाधनत्वं § सूत्रे दर्शितम्— "आग्नेयोऽग्निष्टोमे सवनीयः पशुः, ऐन्द्राग्न उक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी"—इति ‖।

नन्वतिरात्रान्तर्भावाय रात्रिसामान्यपि कस्मान्न प्रयोक्ष्यानीत्यत आह— "प्रजापतिं वा एष इति। प्रजापतेस्तु संवत्सरात्मकता सङ्ख्यासाम्यात्; द्वादशमासाः पञ्चर्तव इति संवत्सरस्य सप्तदशत्वम्, प्रजापतेश्चाश्रावयेत्यादिसप्तदशाक्षरमन्त्रात्मकत्वात् ¶। अतः सप्तदशेनैव बृहत्स्तोत्रेण सप्तदशात्मकप्रजापतेरुज्जितिः सिद्धेति प्रयोजनाभावात् रात्रिसामानि न प्रयो-

---

* 'सरस्वतीदेवत्य'—इति च।

† तै० ब्रा० १.४.४.२।

‡ 'रात्रेः रात्रिपर्यायस्येत्यर्थः', तद्रूपं क्रियते, अतिरात्रस्यासाधारणं रूपं क्रियते'—इति च।

§ 'अग्निष्टोमसंस्थाचतुष्टयसाधारणत्वं'—इति च।

‖ 'अतिरात्रपश्चनुमालभ्य'—इति का० श्रौ० सू० १४.२.११ क।

¶ पृ० २४ टीप्पनी '*' द्रष्टव्या।

यथेत्यादिना। दुर्वेदो वस्यु मशकाः * खलु इति निपातेन सह प्रयोगः। अत एव कात्यायनः— "वशां पृश्निं मरुद्भ्य उक्षेभ्यस्तदभावे पृश्निम्"—इति † ॥ २ ॥

मारुतीवपाप्रचरणं प्राक्तनाभ्यामाग्नेयैन्द्राग्नपशुभ्यां वपाप्रचरणेन सह विधास्यति। तत्र तावदेवेयां मतं सुपन्यस्यति— "तस्या आहुर् यत्र होतेति। 'तस्याः' मारुत्या वशायाः 'आहुत' तन्त्रम्, यज्ञम इति शेषः। यत्र होता माहेन्द्रं ग्रहम् 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरत्वेन व्याख्येयम्; "माहेन्द्राग्नौ वशावपाचरणम्"—इति ‡ कात्यायनेन सूचितत्वात्। 'तत्' तदा 'अस्यै' अस्या मारुत्याः 'वपया' 'प्रचरेयुः'। प्रचरणं माहेन्द्र इति यत् 'एष वै इन्द्रस्य' असाधारणो 'ग्रहः'; ग्रहणमन्त्रे केवलेन्द्रस्यैव देवतात्वेन प्रतिपादनात्। निष्केवल केवल मिन्द्रस्यायमिति 'निष्केवल्यो ग्रहः'। माध्यन्दिने सवने हि माहेन्द्रग्रहग्रहणम्; तच्च सवन मिन्द्रस्येति नियतम्। श्रूयते हि— "प्रातः सुत मपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते"—इति §।

॥ केवलं माहेन्द्रग्रह एव निष्केवल्यः, अपि तु तदनन्तरं प्रयोक्ष्ये शस्यमाने अपि केवलेन्द्रदेवताकत्वात् इन्द्रस्यासाधारणं मित्यत आह— "अप्यस्तेत निष्केवल्य मेवेति।

अस्तु ग्रहादीनां केवलेन्द्रदेवताकत्वं तेन प्रकृते किं जायात

* 'दुर्वेदे वस्यु मशको'—इति च।

† का० श्रौ० सू० १४ ३ ११ सू, ११।

‡ का० श्रौ० सू० १४ ३ १६।

§ ऋ० सं० ४ ३५ ७।

मित्यत्र चाह— "इन्द्रो वै यजमान इति। यस्माद् याग लक्षणेन परमैश्वर्येण योगाद् 'यजमान' इन्द्ररूप । 'वै'- शब्द शाखान्तरीया प्रसिद्धिं द्योतयति, "एष खलु वा एतर्हीन्द्रो यो यजते'–इति तैत्तिरीयके श्रवणात् *। 'घृत' इन्द्रपशु मानयोस्तादात्म्यात् माध्यन्दिनसवनवर्त्तिमाहेन्द्रपशावेव वपा श्रपणेन यजमाने एव 'यजमाने' 'वीर्य' निहितवान् भव तीत्यर्थः ॥ ४ ॥

पशववदानानां सर्वैकध्येन † श्रपण सिद्धान्तयितुं द्वैविध्य पूर्वपक्षयति— "द्वेधावदानानि श्रपयन्तीति। कात्यायनश्च तत्र वपाश्रपण ‡ मवदानानां द्वेधा श्रपण च विकल्पेन सूत्र यामास— "माहेन्द्राग्नौ वपाश्रपणम् अवदानैश्च द्वैध श्रुते "– इति, "यथान्याय चोभयो यथायाथ, एकध्यञ्च श्रपणम्"–इति § च। ब्राह्मणे ‖ "तदु तथा न कुर्यात्"–इत्येक निषिध्य, अन्यत् सिद्धान्तितम्। कथ मनयोर्विकल्प सिध्यतीति चेत्, सत्यम्। मतान्तरनिषेधस्तु प्रसक्तिपूर्वको भवितु मर्हति, प्रसक्तिस्तु शाखान्तरीयेति तन्मतानुसारेण सूत्रकृता विकल्प इत इत्यविरोध ‖। हृदय जिह्वा वक्षा यकृद् वृक्कौ सव्यो

---

* तै० स० ६ १ ११ २।

† 'सर्वैक साध्येन –इति च। 'सर्वैकध्येन –इति ग, ङ।

‡ 'वपाश्रपण –इति ङ।

§ का० श्रौ० सू० ६ ७ १६ १७ २२—२४।

‖ 'पुरोऽभ्यो दवताभ्यिष्टदृश्या अवद्यति, उत्तराणि त्रिश्रो ददाति' –इति का० श्रौ० सू० ६ ७ १८, १६। 'पूर्वाणि हृदयादीनि, उत्तराणि गुदादीनि –इत्यादिरीतिरप्यत्र समालोच्य।

दोरुभे पार्श्वे दक्षिणा श्रोणिः गुदस्तृतीय मिति दैवतानि; दक्षिणो दोः सव्या श्रोणिः गुदस्तृतीय मिति सौविष्टकृतानीति। एतानि सर्वाण्यवदानानि द्विधा पृथक् स्थापयन्ति पक्वानि कुर्युः। दैवतानां हृदयादीनां सौविष्टकृतानां त्र्यङ्गाणां च पृथक् स्थापन मित्यर्थः।

हविषा मवदानप्रकार माह— "ततोऽर्द्धाना मिति। अथ जुह्वा माज्येनोपस्तरणं कृत्वा 'अर्द्धानां' प्रधानहविषां हृदयादीनां मध्ये एकैकस्माद् 'द्विर्द्विः' अवद्येत्। एव मेकादशावदानान्यवदाय पुनराज्येनैकवार मभिघारणं कुर्यात्। एव मुपस्तरण-द्विरवदान-पुनरभिघारणैर्हविषो चतुरवत्तत्वं सम्पादितम्। अनन्तरं स्विष्टकृदर्थान्यवदानानि इतीव प्रत्यक्षात्।

"यथोपस्तीर्णेति, वाक्यं स्पष्टार्थम्। अत्र उपस्तरणावदाने सकृत् सकृद्, द्विरभिघारण मिति चतुरवत्तसम्पत्तिः। अत्र स्थितानि * अवत्तोपानि न प्रत्यक्षात्; उत्तरत्र विनियोगाभावात्।

एतेषां द्विरवदानं प्रशंसति— "त्र्यर्द्धाना मिति। अर्द्धानां हृदयादीनां प्रत्येकं देवतार्थं स्विष्टकृदर्थं च द्विरवद्यतीति 'यत्', तेन द्विरवदानेन 'एषा' वषा 'कृत्स्ना' सम्पूर्णा भवति, यथेतरः पशुस्तथेत्यर्थः।

अथैतेषां प्रचरणं स्तौति— "अथ यद्देवेति। "दैवीं विश मिति। अवदानानां देवतोद्देशेनाग्नौ प्रक्षिप्तत्वात् तेन प्रचरणेन 'दैवीं' देवसम्बन्धिनीं 'विशम्' प्रजाम् 'उच्छ्रयति'।

एवं सर्वासां हविषां विनियोग मभिधाय, अर्द्धान्तरस्यापि

* 'अपात्तस्थितानि'—इति क, ख।

मित्यत आह— “इन्द्रो वै यजमान इति। यस्माद् याग-लक्षणेन परमैश्वर्येण योगात् ‘यजमानः’ इन्द्ररूपः। ‘वै’-शब्दः शाखान्तरीयां प्रसिद्धिं द्योतयति; “एष खलु वा एतर्हीन्द्रो यो यजते”-इति तैत्तिरीयके श्रवणात् *। ‘अतः’ इन्द्रयज-मानयोस्तादात्म्यात् माध्यन्दिनसवनवर्तिमाहेन्द्रग्रहान्ते वपा-श्रपणेन यजमाने एव ‘यजमाने’ ‘वीर्यं’ निहितवान् भव-तीत्यर्थः ॥ ४ ॥

पञ्चावदानानां मध्येकाध्येन † श्रपणं विधास्यति' द्वैविध्यं पूर्वपक्षयति— “द्वेधावदानानि श्रपयन्तीति। कात्यायनस्तु अत्र यथाप्रवरम् ‡ अवदानानां द्वेधा श्रपणं च विकल्पेन सूत्र-यामास— “माहेन्द्रान्ते यथाप्रवरणम् अवदानेषु द्वैधं शृतैः”-इति, “यथाम्नायं वोभयोः यथायाय, यथाध्वर्यु श्रपणम्”-इति § च। ब्राह्मणे तु “तदु तथा न कुर्यात्”-इत्येकं निषिध्य, अन्यत् विधास्यति। कथं अनयोर्विकल्पः सिध्यतीति चेत्, सत्यम्। मतान्तरनिषेधस्तु प्रशस्तिपूर्वको भवितुमर्हति, प्रशस्तिस्तु शाखान्तरीयेति तन्मतानुसारेण सूत्रकारेण विकल्पः कृत इत्यविरोधः ‖। हृदयं जिह्वा वक्षो यकृद्-वृक्कौ सव्यौ

---

* तै० सं० ६. १. ११. २।

† 'मध्येक मध्यमेन'—इति च। 'मध्येकाध्येन'—इति क, ख।

‡ 'यथाप्रवरं'—इति ख।

§ का० श्रौ० सू० ६. ९-१६, १७. १२—१३।

‖ 'पूर्वाण्यो देवताभिरवद्य्या मनदाति, उत्तराणि विंशं दहालि'—इति का० श्रौ० सू० १४. ९. १८, १९। 'पूर्वाणि हृदयादीनि,

दोहमे पार्श्वे दक्षिणा श्रोणिः गुदतृतीय मिति दैवतानि ;' दक्षिणो दोः सव्या श्रोणिः गुदतृतीय मिति सौविष्टकृता-नीति। एतानि सर्वाण्यवदानानि द्विधा पृथक् अपयन्ति पक्वानि कुर्युः। दैवतानां हृदयादीना सौविष्टकृतानां मद्राणां च पृथक् अपण मित्यर्थः।

हविषा मवदानप्रकार माह— "ततोऽर्वाना मिति। अथ जुह्वा माज्येनोपस्तरणं कृत्वा 'मर्वाना' प्रधानहविषा हृदया-दीनां मध्ये एकैकस्मात् 'द्विर्द्वि' अवद्येत्। एव मेकादशा-वदानाभ्यवदाय पुनराज्येनैवाभि मभिघारणं कुर्यात्। एव मुपस्तरण-द्विरवदान पुनरभिघारणैर्हविषां चतुरवत्तत्वं सम्पादि-तम्। अनन्तरं स्विष्टकृदर्थान्यवदानानि सूत्रेण प्रत्यक्षयात्।

"यथोपस्तीति, वाक्यं सष्टार्थम्। अत्र उपस्तरणावदाने सकृत् सकृद्, द्विरभिघारण मिति चतुरवदानसम्पत्तिः। अत्र स्विताति * अवसयोगाणि न प्रत्यक्षयात्; उत्तरत्र विनि-योगाभावात्।

एतेषां द्विरवदानं प्रशंसति— "यावदवाना मिति। अर्वाना हृदयादीनां प्रत्येकं दैवतार्थे स्विष्टकृदर्थे च द्विरवद्यतीति 'यत्', तेन द्विरवदानेन 'एषा' वशा 'कृत्स्ना' सम्पूर्णा भवति, यद्येतरः पशुमत्येतदर्थः।

अथैतेषां प्रचरणं स्तौति— "अथ यदेतैरिति। "दैवीं विश मिति। अवदानानां देवतोद्देशेनाग्नौ प्रक्षिप्तत्वात् तेन प्रचरणेन 'दैवीं' देवसम्बन्धिनीं 'विशम्' प्रजाम् 'उत्जयति'।

एव मर्वानां हविषां विनियोग मभिधाय, अर्वान्तरस्यापि

---

* 'अपवसितानि'—इति क, ख।

दर्शयति— "यथाङ्गानीति। यागार्थादेव हविषः पृथक् पक्वानि अङ्गानि 'मानुष्यै' मनुष्यसम्बन्धिन्यै 'विशे' प्रजायै 'उपहरति' ददाति। 'तेन' दानेन 'मानुषीं' प्रजां जितवान् भवतीति। अतएव सूत्रितम्— 'पूर्वेभ्यो देवताश्विष्टकृद्भ्या मवद्यत्युत्तराणि विशे ददाति"-इति *। अत्र पूर्वोत्तरशब्दौ कर्कोपाध्यायेनैव व्याख्यातौ— "पूर्वाणि हृदयादीनि, उत्तराणि चराङ्गाणि"-इति ॥ ५ ॥

तदिदमाह्निक † माहेन्द्राग्नौ वपायाश्च हविषा द्विधा श्रपणं च दूषयति— 'तदु तथा न कुर्यादिति। तत्र प्रत्यवायं दर्शयति— "ह्वलति वा एष इति। 'यो यज्ञमार्गात्सकाशाद् 'एति' प्रच्युतो भवति, स 'ह्वलति' विभ्रष्टो भवतीत्यर्थः। कस्य यज्ञपथाद् भ्रंशनम्? त आह— "एति वा एष इति। 'एवम्' उक्तरीत्या 'वपया' प्रातस्सवनकर्तव्य वपाहोम माहेन्द्राग्नौ श्रपणञ्च करोति, स यज्ञमार्गात् प्रच्युतो भवेत्, अतस्तथा न कुर्यादिति सम्बन्धः ॥

अथ माहेन्द्रपशुवपाप्रचरणकाले ‡ मारुती वपा प्रचरण हविषा ऐकध्येन श्रपणञ्च विधत्ते— "तस्माद् यद्येवेत्यादिना §। अस्मिन् पक्षे माहेन्द्र्य स्विष्टकृद्यागावदान मिति पृथक्पक्वस्य हविषोऽभावात् मानुषी विशे अवदान मिति विशेषः ॥ ६ ॥

---

* का० श्रौ० सू० १४ २ १८, १९।

† 'तदिदं'—इति ख।

‡ इत उत्तरम् [=प्रातस्सवने]—इत्यधिकं ख पुस्तके।

§ यथान्याय वोभयो, यथायाथ, ऐकध्यञ्च श्रपणम्—इति का० श्रौ० सू० १४ १ १२, १३, २४।

पशुप्रशंसा विधत्ते — "अथ समदशीति । 'प्राजापत्यान्' प्रजापतिदेवताकान् षष्मदशसङ्ख्याकान् पशून् आलभेत । अत्र देवतासङ्ख्यासम्बन्धविशिष्टपशुविधिः । तेषु पशुषु गुणत्रयं विधत्ते —"ते वै सर्वे तूपरा इति । 'तूपराः' अविषाणा इत्यर्थः । 'श्यामाः' शुक्लकृष्णवर्णाः, 'मुष्कराः' मुष्कौ येषां सन्तीति । "ऊषसुषिमुष्कमधो रः"—इति † मत्वर्थीयो र-प्रत्ययः । मुष्कवृद्धिः सर्वाङ्गवृद्धि मन्तरेण न घटते इति सर्वे पुष्टाङ्गा भवेयुरित्यर्थः ॥

पशुसम्बन्धेन प्रत्यक्षसोमात्मना च स्तुवन् तदात्मक-प्रजापतिप्राप्तिं प्रतिपादयति— "प्रजापतिर्वा इत्यादिना । सोमवत् पशोरपि सवनत्रयव्यापित्वात् तात्त्वम्यम्, अत्र देवतार्थमारोप्याभावात् प्रत्यक्षत्वम् ॥ ७ ॥

पशुगतां बहुधा तूपरीत्वं प्रशंसति— "ते वै सर्वे तूपरा इति । अस्याय मर्थः ;— यस्मात् 'पुरुषः' 'प्रजापतेः' 'नेदिष्ठम्' अन्तिकतमं वस्तु, वस्तुमत्सृष्टेः प्रथमभावित्वात् ; 'सः' 'अयं' पुरुषः 'तूपरः' । तूपरशब्दार्थं स्वयं मेव दर्शयति— "अविषाण इति । पुरुषत्वादविषाणः, ततः प्रजापतिदेवत्यानां पशूनां तूपरत्वगुणेन भाव्य मिति ॥ ८ ॥

श्यामत्व मनूद्य व्याचष्टे— "सर्वे श्यामा इति । शुक्लकृष्णवर्णद्वयात्मकं श्यामत्व मित्यर्थः । द्वित्व मात्मना प्रशंसति— "द्वन्द्वं वा इति । 'प्रजापतिः प्रजननम्' ; सर्वोत्पादकत्वात् ॥ ९ ॥

"सर्वे मुष्करा इति, वाक्यं निगदव्याख्यातम् । उक्तत्रिविधगुणानां पशूना मसुलभत्वमभिप्रायादनपूर्वकं पक्षान्तर माह—

---

* 'त्रिषन्धसशनि'—इति क ह ।

† पा० सू० ५. २. १०७ ।

"दुर्वेदा इति । अनद्गुणानां पशूनां मध्यात्रे कतिपया एव पशवो गुणत्रयवन्तो भवेयुः । अत्र सूत्रम्— "प्राजापत्याय सप्तदश श्यामतूपरान् वस्तास्तद्गुणाभावे सर्वेषां मेकदेशोऽपि" -इति * । यद्येवं तर्हि कतिपयपशूनां वर्णान्तरयुक्तत्वेऽपि कामं गौणत्वैकस्य परिहरति— 'सर्वं वै' इति । प्रजापतेः सर्वात्मकत्वात् वर्णान्तरयुक्तत्व पशूनां प्राजापत्यत्वं न विरुध्यत इत्यर्थः ॥ १० ॥

अत्र केचित् सप्तदशप्राजापत्यपशूनां मध्ये वाग्देवत्य पशुम, तत्र चोपपत्तिं वदन्ति, तेषां मतं निरसितुमनुवदति— "तद्धैके वाचे इति † । एके शाखान्तरीया 'वाचे' वाग्देवतार्थं 'उत्तमम्' अन्ते कर्तव्यत्वादपरम मित्यर्थः, तम् 'आल भन्ते' । न हि 'प्रजापतेः' 'परम्' उत्कृष्टं पूर्वभावि किञ्चिदपि 'अस्ति', यदर्थं पशुरालभ्यते, यदस्ति, 'वागेव' अस्ति, तस्या अग्न्यग्निप्रकाशान्येन पूर्वं मवसानादिति भावः । ताम् 'उत्तमाम्' वाचम् 'इति' बुद्ध्या वाग्देवत्यं पशुरालम्भ नीय इति । तद् दूषयति— "तदु तथेति । 'सर्वं वा इदमिति । अस्यायमर्थः,— प्रजापतेः सर्वात्मकत्वेन लोकात्मकत्वम्, तथा च चराचरसर्वभूतात्मकत्वात्तस्यैव, अतो लोकेषूद्यमाना वाक् अपि प्रजापतिरूपैवेति [ प्रजापतिसदावाक्येऽपि विभागत्वात् ‡ ] तदर्थं वाग्देवत्यपश्वालम्भनं नादरणीयमिति ॥ ११ ॥

* का० श्रौ० सू० १४ २ १२ १४ ।

† वाच उत्तम एके—इति का० श्रौ० सू० १४ २ १५ ।

‡ अपि प्रजापतिरूपैवेति—एतस्य स्थाने वन्यश्रीपिठन्तर्गत एव एव प्र० ट० प्राच्य० सर्वत्र न एव पूर्व मशुद्ध इत्येवाकलप्रत्ययम्यात मिति ।

उक्तानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्यागस्य च प्राकृतपशुवपाहविर्भिः सह होमकालं विधास्यति, तत्र तावत् पूर्वपक्ष माह— “मैषा माह्र यद्येति। 'मैत्रावरुण.' नाम-र्त्विक् माध्यन्दिने सवने 'वामदेव्यं' साम 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरतया व्याख्येयम्। अतएव कात्यायनः—“वामदेव्यप्रशान्ते प्राजापत्यानाम्”–इति*। अनुष्ठान मिति शेषः। तदा एषां सप्तदशानां वपायागः कर्त्तव्य इत्यर्थः॥ १२॥

“अधीष्टा इति। तृतीयसवने अनुयाजयागानन्तरं स्रुग्-व्यूहनादर्वाचीना प्राजापत्यानां हविर्यागः कर्त्तव्यः। अत्र कात्यायनः— “स्रुग्व्यूहनात् प्राग्वपया”–इति†। तं कालं प्रशंसति— “सोऽन्त इति। 'सः' एव कालः 'अन्तः' सवनीये कर्त्तव्यानां यागानां अवधिः। प्रजापतेः सर्वोत्तमत्वादन्तत्वम्। तस्मादन्तरूपे तस्मिन् काले क्रियमाणेन हविर्होमेन 'प्रजापति मेव' उज्जितवान् भवतीत्यर्थः। “अथ यत् पुरेति। अस्यार्थः;— 'यत्' यदि उक्तकालात् 'पुरा' प्राकृत एव काले वपा-हविर्भिः प्रचरेत्, तर्हि व्यर्थ मेव प्रजापतिप्राप्तिसाधककर्म-कलापकरणं प्रयुक्त मितीम मर्थं प्रदर्शयितुं दृष्टान्तः— “यथाय मिति। 'यथा' लोके पुरुषो यं ग्रामं अभिगन्ता भवेत्, 'तं' गत्वा देशं प्राप्य 'क्व' कुत्र गच्छति; तत्प्राप्तेः सिद्धत्वात्। 'एवम्' एतत्काले होमकरणकप्रजापतिप्राप्तेः सिद्धत्वात्, उपरितनकर्मानुष्ठानं निष्फलं स्यात्। तस्मादनुयाजान्ते स्रुग्-व्यूहनात् प्राक् पशुहविर्होम इति केषाञ्चिन्मतम्॥ १३॥

* का० श्रौ० सू० १३ २ १०।

† का० श्रौ० सू० १३ २ ११।

( अथ चतुर्थं ब्राह्मणम्. )

तं वै माध्यन्दिने सवने ऽभिषिञ्चति। माध्यन्दिने सवन ऽआजिं धावन्त्येष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतस्मिन्वाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत एवैतत् प्रजापति मुज्जयति ॥ १ ॥

अगृहीते माहेन्द्रे। एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्य मेव स्तोत्रं निष्केवल्यꣳ शस्त्र मिन्द्रो वै यजमानस्तदेनꣳ स्व ऽएवायतने ऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे * ॥ २ ॥

अथ † रथ मुपावहरति ‡। इन्द्रस्य वज्रो ऽसीति वज्रो वै रथ इन्द्रो वै यजमानस्तस्मादाहेन्द्रस्य वज्रो ऽसीति वाजसा इति वाजसा हि रथस्त्वयायं वाजꣳ सेदित्यन्नं वै वाजस्त्वयाय मन्न मुज्जयत्वित्येवैतदाह ॥ ३ ॥

---

* 'माहेन्द्रे'—इति ग, घ।

† 'अथ'—इति क।

‡ 'ति'—इति ग, घ।

तं पूर्वेद्युर्मन्त्रैरेवाभ्यववर्तयति । वाजस्य नु प्रसवे मातरं महीमित्यन्नं वै वाजोऽन्नस्य नु प्रसवे मातरं महीमित्येवैतदाहादितिं नाम वचसा करामह ऽइत्येषा वै पृथिव्यदितिस्तस्मादाहादितिं नाम वचसा करामह ऽइति यस्यामिदं विश्वं भुवनमाविवेशेत्यस्याꣳ हीदꣳ सर्वं भुवनमाविष्टं तस्यां नो देवः सविता धर्म साविषदिति तस्यां नो देवः सविता यजमानꣳ सुवतामित्येवैतदाह ॥ ४ ॥

अथाश्वानद्भिरभ्युक्षति । स्नपनायाभ्यवनीयमानान्स्नपितान्वोदानीतानद्भ्यो ह वा ऽअग्रेऽश्व, सम्बभूव सोऽद्भ्यः सम्भवन्नसर्वः समभवदसर्वो हि वै समभवत्तस्मान्न सर्वैः पद्भिः प्रतितिष्ठत्येकैकमेव पादमुदच्य तिष्ठति तद्यदेवास्यावाप्स्वहीयत तेनैवैनमेतत् समर्धयति कृत्स्नं करोति तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्स्नपितान्वोदानीतान् * ॥ ५ ॥

* ०तान्—इति क, ख ।

सो ऽभ्युक्षति* । अप्स्वन्तरमृत मप्सु भेषज मपा मुत प्रशस्तिष्वश्वा भवत व्वाजिन इत्यनेनापि देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाज-सास्तेनायं व्वाजएं सेदित्यन्नं वै व्वाजस्तेनाय मन्न मुज्जयत्वित्येवैतदाह † ॥ ६ ॥

अथ रथं युनक्ति । स दक्षिणायुग्य मेवाग्रे युनक्ति सव्यायुग्यं वा ऽअग्रे मानुषे ऽथैवं देवत्रा ‡ ॥ ७ ॥

स युनक्ति । व्वातो वा मनो वेति न वै व्वातात् किञ्चनाशीयो ऽस्ति न मनसः किञ्चना-शीयो ऽस्ति तस्मादाह व्वातो वा मनो वेति गन्धर्व्वाः सप्तविंशतिस्ते § ऽग्रे ऽश्व मयुञ्जन्निति गन्धर्व्वा ह वा ऽअग्रे ऽश्वं युयुजुस्तद्ये ऽग्रे ऽश्व मयुञ्जंस्ते त्वा युञ्जन्त्वित्येवैतदाह तेऽअस्मिन् जव माऽदधुरिति तद्ये ऽस्मिन् जव माऽदधुस्ते त्वयि जव माऽदधत्वित्येवैतदाह ॥ ८ ॥

---

* 'ति'—इति ख, घ।    † 'ह'—इति ग, घ।

‡ 'देवत्रं'—इति क, 'देवत्रा'—इति ग, घ।

§ 'सप्तविंशतिः । ते'—इति क, ख।

अथ सव्याष्टिं युनक्ति । वातरंहा भव वाजिन् युज्यमान इति वातजवो भव वाजिन् युज्यमान इत्येवैतदाहेन्द्रस्येव दक्षिणः श्रियै धीति यथेन्द्रस्य दक्षिणः श्रियैवं यजमानस्य श्रियै धीत्येवैतदाह युञ्जन्तु त्वा मरुतो विश्ववेदस इति युञ्जन्तु त्वा देवा इत्येवैतदाहाते त्वष्टा पत्सु जवं दधात्विति नात्र तिरोहितमिवास्त्यथ दक्षिणाप्रष्टिं युनक्ति सव्याप्रष्टिं वा ऽअथ मानुषे ऽथैवं देवत्रा * ॥ ९ ॥

स युनक्ति । जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो ऽअचरच्च वात ऽइति जवो यस्ते वाजिन्नप्यन्यत्रापिनिहितस्तेन न इमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुरित्याजिर्वै वाजो ऽवाजिच्च न एध्यस्मिंश्च नो यज्ञे देवसमन ऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह ॥ १० ॥

* देवत्रा—इति क, ख ।

ते वा ऽएत ऽएव त्रयो युक्ता भवन्ति। त्रिवृद्धि देवानां तद्धि देवत्राधिप्रष्टियुग एव चतुर्थो ऽन्वेति मानुषो हि स तं यत्र दास्यन् भवति तच्चतुर्थमुपयुज्य ददाति तस्मादपीतरस्मिन्यज्ञ ऽएत ऽएव त्रयो युक्ता भवन्ति त्रिवृद्धि देवानां तद्धि देवत्राधिप्रष्टियुग एव चतुर्थो ऽन्वेति मानुषो हि स तं यत्र दास्यन् भवति तच्चतुर्थमुपयुज्य ददाति * ॥ ११ ॥

अथ बार्हस्पत्यं चरुं नैवारꣳ सप्तदशशरावं निर्वपति †। अन्नं वा ऽएष उज्जयति यो वाजपेयेन यजते ऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्य ऽएवैतदन्नमुदजैषीत्तदेवास्मा ऽएतत् करोति ॥ १२ ॥

अथ यद्बार्हस्पत्यो भवति। बृहस्पतिर्ह्येतमग्र ऽउदजयत्तस्माद्बार्हस्पत्यो भवति ॥ १३ ॥

अथ यन्नैवारो भवति। ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति सप्तदशशरावो भवति सप्तदशो वै प्रजापतिस्तत् प्रजापतिमुज्जयति ॥ १४ ॥

* 'ददाति'—इति क। † 'ति'—इति क।

त मश्वानवघ्रापयति । वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजोऽन्नजित इत्येवैतदाह वाजꣳ सरिष्यन्त इत्याजिꣳ हि सरिष्यन्तो भवन्ति बृहस्पतेर्भाग मवजिघ्रतेति बृहस्पतिर्ह्येष भागी भवति तस्मादाह बृहस्पतेर्भाग मवजिघ्रतेति तद्यदश्वानवघ्रापयतीम मुज्जयानीति तस्माद्वा अश्वानवघ्रापयति ॥ १५ ॥ ४ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [१,४,] ॥

अथ माध्यन्दिने सवने कर्त्तव्यः प्रयोगोऽभिधीयते ।—

तत्र, यजमानाभिषेक माजिधावन ( च * ) प्राधान्येन विधत्ते —"स वै माध्यन्दिन इति। अभिषेकाजिधावनयोः स्वरूप मुपरत्र विशदीभविष्यति। "एष वा इति। 'य एष यज्ञः' सवनत्रयात्मना 'तायते' विस्तार्यते, 'एषः' एव खलु सः 'प्रजापतिः', 'यस्मात्' 'इमाः प्रजाः' मनुष्याद्याः उत्पन्नाः। 'एतर्हि' इदानीम् 'अपि' 'एत मेव' यज्ञात्मकं प्रजापतिम् 'अनु'-लक्ष्य, प्रजा उत्पद्यन्ते। 'तत्' तेन माध्यन्दिने सवने अभिषेकेण आजिधावनेन च यज्ञमध्ये एव तं 'प्रजापतिं' जितवान् भवतीति ॥ १ ॥

---

* इद मधिकं च-पुस्तके ।

अथ कालं विधत्ते— "अगृहीत इति। माहेन्द्रदेवत्ये ग्रहे 'अगृहीते', माहेन्द्रग्रहात् पूर्वमित्यर्थः। अत्र सूत्रम्— "मरुत्वतीयाश्च इन्द्रस्य वज्र इति रथावहरणम्"-इति *। "एष वा इन्द्रस्य निष्केवल्य इत्यादिकं वाक्यं पूर्ववद् व्याख्येयम् †। 'स्व एवायतन इति। यजमानस्येन्द्रतादात्म्यादिन्द्रस्य यदसाधारणं माहेन्द्रग्रहादिलक्षणं स्थानम्, तद् यजमानस्यापि स्वकीयं भवतीति स्वशब्दस्याभिप्रायः ॥ २ ॥

पूर्वं रथवाहने ‡ काष्ठविशेषे स्थापितम्, आजिधावनाय सज्जीकर्तुं तस्य रथस्य तस्मात् वाहादवहरणं समन्त्रकं विधत्ते —"अथ रथ मिति। 'उपावहरति' अधःप्रदेशादवतारयेत्। मन्त्रस्यायमर्थः §,— हे रथ। त्वम् 'इन्द्रस्य वज्रोऽसि'। वज्र एव हि स्फ्यरथयूपभेदात् त्रिधा विभक्तः, "इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा अभवत्, स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयम्"-इति ‖ श्रुतेः। 'वाजसा' वाजमन्नं सनोति ददातीति वाजसाः, अन्नदाता च भवसि। अत 'अयं' यजमानः 'त्वया' वज्रभूतेन 'वाजम्' अन्नं 'सेत्' सिनोतेः सेधतेर्वा रूपम्, जिनुयात् बध्नीयात्, साधयतु वेति ॥

तं मन्त्रं भागशोऽनूद्य व्याचष्टे— "वज्रो वा इति। 'वै'-

---

* का० श्रौ० सू० १४ । ३ । १ ।

† पुरस्तात् ३अ० ४ब्रा० (पृ०३५ पं०१४) द्रष्टव्यम् ।

‡ 'निष्क्रम्य मध्यमाङ्ग रथवाहने करोति,' अनन्तरकर्म—इति का० श्रौ० सू० १४ । ६ । ७-८ ।

§ वा० सं० ९ । ५ । १ ।

‖ तै० सं० ५ । २ । ६ । ३१ ।

अश्वोऽप्सूत्पत्तिः प्रसिद्धा; "अप्सुयोनिर्वा अश्वः"-इति * श्रुतेः। यस्मादप्सु प्रतिष्ठितोऽश्वः, तस्मादिदानीं भूमावश्वो न सर्वैः पादैरवतिष्ठते। तदेवाह—"एकैक मिति। 'उदस्य' उद्धृत्येत्यर्थः। "तद्यदेवेति। 'तत्' तत्र आप्सु कारणभूतासु 'अप्सु' यदेवाश्वम् 'अहीयत' हीनमवशिष्टमभूत्, 'तेन' अङ्गेन 'एनम्' अश्वम् 'एतत्' एतेन प्रोक्षणेन कृत्स्नं सर्वपादयुक्तं 'करोति' कृत्स्नवान् भवतीत्यर्थः ॥ ३ ॥

प्रोक्षणविधिं मन्त्रद्वयं विधत्ते— "सोऽभ्युक्षतीति। तत्र "अप्स्वन्तर्"-इति मन्त्रेण †, "देवीराप."-इत्यनेनापि ‡ प्रोक्षणं कुर्यात्। 'अपि'-शब्दः समुच्चयवाची; मन्त्रद्वयेन कुर्यात्। अत्र सूत्रम्— "अश्वान् प्रोक्षत्यपोवगाहीयमानान् स्नातान् वागतानप्स्वन्तरिति, देवीराप इति वा, समुच्चयो वा"-इति §।

मन्त्रयोरर्थः;— 'अप्सु' मध्ये 'अमृतम्' अपमृत्युनिवारकं रोगनिवारकं च वीर्यं वर्त्तते, हे 'वाजिन.!' अश्ववन्त.॥ 'अश्वाः!' 'अपां' सम्बन्धिषु 'प्रशस्तिषु' अमृतत्वे भेषजत्व-सद्गुणेष्वन्यास्वपि गुणवत्त्वप्रशंसासु प्रशस्तप्रदेशेषु वा यूयं सम्यक् भवतेति। 'देवीः' द्योतमाना., हे 'आप !' 'व.' युष्माकं 'यः' 'ऊर्मिः' जलसङ्घः 'प्रतूर्त्तिः' प्रतरणशीलः, निम्नगमनेन प्रबलस्योपद्रवस्य प्रकर्षेण हिंसकः, 'ककुद्मान्' ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते, तत्समानेनोदक-

त्रिभिर्युक्तं रथं कुर्यात् *। अत पूर्वं अश्वद्वयस्य युक्तत्वात् तृतीयस्य प्रष्टित्वं युक्तम्। अत एवापस्तम्बः— "प्रष्टिवाहिनं रथं युनक्ति"–इति। तृतीयेनाश्वेन रथं युञ्ज्यादित्यर्थः। तं 'दक्षिणा' दक्षिणतः प्रथमं युञ्ज्यात्। "सव्याप्रष्टि मित्यादि, पूर्ववद् व्याख्येयम् † ॥ ८ ॥

योजने मन्त्रं विधत्ते—"स युनक्ति जवो य इति ‡। हे वाजिन्! 'ते' तव हृदये 'यः' 'जवः' वेगः 'गुहा' गुहायां गूढप्रदेशे 'निहितः' स्थापितः, 'श्येने' पक्षिणि च यो जवः 'परीतः' व्यवस्थितः, यो वेगो 'वाते' वायौ 'अचरत्' तिष्ठति। हे 'वाजिन्'। तेन बलेन बलवान् त्वं 'नः' अस्माकं बलेन 'वाजजित् भव' अन्नस्य जेता दाता भव। 'समने' यज्ञेऽपि सङ्ग्रामे पारयिष्णुः पारयिता पारगमनशीलश्च भवेति ॥

तमिमं मन्त्रं व्याचष्टे—"जवो यस्त इति। "अयन्त्वापनिहित इति। 'अन्धस' गुहायमित्याद्युपलक्ष्यते, प्रदेशान्तरे 'अपनिहितः' निहितः। पूर्वार्धस्य तात्पर्यं माह—"तेन न इति। यजमानाश्वयोस्तादात्म्यं युक्तम्। 'समने पारयिष्णुः' -इत्यस्याभिप्रायं माह— "अस्मिंश्च नो यज्ञ इति। 'देवसमने' समन मिति सङ्ग्रामनाम §, देवसमागमनयोरस्मिन् यज्ञे। गतार्थं अन्यत् ॥ १० ॥

---

*"प्रष्टवाही वहत्यत्र सेधा प्रष्टी युक्ता पशुमंबहन्ति। स्यात मस्य दक्षि न यावं पर्दे नैदीयोऽन्तरं दवीयः"—इति।

* का० श्रौ० सू० १४ ३ ८।

† ५७ पृ० १९ पं० अथ दक्षिणेत्यादि द्रष्टव्यम्।

‡ वा० सं० ९. ९. १।    § निघ० २ १७ १८।

एतावता सखानां नित्यसङ्गा मनूद्य प्रशंसति— "ते वा एत इति । विहरत्वं विराहत्तिः । दैवे कर्मणि प्रोक्षणादौ प्रसिद्धे 'हि'-शब्दार्थः । चतुर्थस्याश्वस्यानुगमनं विधत्ते— "प्रष्टिमष्टीति । तृतीयस्याश्वस्य युगप्रदेशे । 'प्रष्टिः' स्त्रन्थ्यर्थानुवादी । मन्त्रेण युक्तः सन्नेवानुगच्छेत् । यस्मात् स चतुर्थो 'मानुषः' मनुष्यसम्बन्धी ; मानुषे हि कर्मणि चतुर्थं वाहानां योजनं दृष्टम् । अत मानुषरूपस्योदासाय तस्यायोजन मिति । अत्र सूत्रम्— "प्रष्टिवाह्युर्योऽनुगच्छति"-इति * ।

यदेव चतुर्युञ्जो † रथोऽध्वर्यवे दीयते, तस्मिन् प्रदानसमये चतुर्थस्य रथे योजनं दर्शयति— "तं यत दास्यमिति । तदुक्तं सूत्रे— "चतुर्थं युक्ताध्वर्यवे ददाति"-इति ‡ । अत्रार्थे मन्त्रमाम्नातं निर्दिशति— "तथादधीति । 'दक्षिणम्' राजसूयादावित्यर्थः । शिष्टं गतार्थम् ॥ ११ ॥

विधत्ते— "अथ बार्हस्पत्य मिति । अत्र द्रव्यदेवताविशिष्टचरुविधिः । "सप्तदशशराव मिति । सप्तदशशरावपरिमितम् । मुष्टिमितिनिर्धिलेन शरावस्य तथाज्ञायायां पृथग्विधानात् प्रकृतिगतमुष्टितत्त्वसङ्ग्यानिवृत्तिः । तथाच कात्यायनः— "माध्यन्दिनीयैः सह नैवारचरुर्बार्हस्पत्यः सप्तदशशरावः, सङ्ख्यामुष्टिनिवृत्तिः"-इति § । चरुविधिं प्रशंसति— "सर्वं वा एष इति ।

---

* का० श्रौ० सू० १४ ५ ८ ।

† 'चतुर्युञ्जो'—इति क, ख, ग ।

‡ का० श्रौ० सू० १४ ४ १२ ।

§ का० श्रौ० सू० १४ २ २६. ३० । कर्कोपाध्यायमते तु 'न यथासिद्धन्'—इति सूत्रपाठमारभ्यापि न सङ्ख्याबाधः ।

"तदद्देवेत्यादि। तत्र वाजपेये 'यत्' 'एतत्' अन्नम् 'उदजे-यीत्', पुरा बृहस्पतिरनेन क्रतुना यदेतत्फलभूतं सर्वं साधितवान्, 'तदेव' अन्नम् 'अस्मै' बृहस्पतये 'एतत्' एतेन चरुणा 'करोति' ॥ १२ ॥

देवतागरावसङ्ख्याविधिमनूद्य प्रशंसति— "अथ यदित्यादिना। पुरा बृहस्पतिः 'एतं' 'चरुं' साधितवान्, अतोऽस्य चरोर्बृहस्पतिर्देवतेति युक्तम् ॥ १३ ॥

"अथ यन्नैवार इति। "नीवारा इति। यद् 'एते' 'ब्रह्मणा' एव 'पच्यन्ते', न तु कृष्टबीजोत्पन्नशाल्यादिवत्, अतः ब्रह्मणत्वात् पक्का नीवाराः ब्रह्मरूपस्य बृहस्पतेर्योग्या इत्यर्थः ॥ १४ ॥

विधत्ते— "स अश्वानवघ्रापयतीति *। 'तं' चरुम् 'अश्वान्' रथे युक्तान् अवघ्रापयेत्। "आ गन्धोपादानि" †। तत्र मन्त्रमाह— "वाजिन इति ‡। हे 'वाजिनः' 'अश्वाः!' 'वाजजितः' अन्नस्य जेतारः, 'वाजं'='अन्नम्' अन्नसाधनमार्गं प्रति सरिष्यन्तः यूयम्, 'बृहस्पतेर्भागम्' 'अवजिघ्रत' अवाङ्मुखा गन्धोपादानं कुरुतेति तदर्थः §।

तद् व्याचष्टे— "वाजिनो ह्यश्वा इति। "वाजिनः हि सरिष्यन्त इति। साध्यभूतान्नवाची वाजशब्दः उपचारात् तत्साधने मार्गे वर्तते इत्यर्थः। अवघ्रापणस्य प्रयोजनमाह— "तथा-

* का० श्रौ० सू० १४ ३ १०।

† आ० प० ८२६ पा०।

‡ वा० सं० ९.९ २।

§ 'अवघ्रापणमन्नसंस्कारः प्रयोजनार्थः। तस्य च विसर्गे तद्भवति न भवति—इति का० श्रौ० सू० १४ ३ १० इति;।

दध्रानिति। इमं यज्ञं साधयामीति बुद्ध्या 'यज्ञान्' अवधापयेत् ॥ १५ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम्. )

तद्यदाजिं धावन्ति। इममेवैतेन लोकमुज्जयत्यथ यद् ब्रह्मा रथचक्रे साम गायति नाभिदघ्न ऽउद्धिते ऽन्तरिक्षलोकमेवैतेनोज्जयत्यथ यद्यूपं रोहति देवलोकमेवैतेनोज्जयति तस्माद्वा ऽएतत् त्रयं क्रियते * ॥ १ ॥

स ब्रह्मा रथचक्रमधिरोहति। नाभिदघ्न ऽउद्धितं देवस्याहं सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकं रुहेयमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः † ॥ २ ॥

---

* 'क्रियत'—इति ख। † '०णः'—इति ग, घ।

अथ यदि राजन्यो यजते । देवस्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयमिति यजन्ते ह्यैन्द्रः यजन्ते राजन्यः ॥ ३ ॥

त्रिः सामाभिगायति । त्रिरभिगीयावरोहति देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकं रुहेयमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः * ॥ ४ ॥

अथ यदि राजन्यो यजते । देवस्याहꣳ सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकं रुहेयमिति यजन्ते ह्यैन्द्रः यजन्ते राजन्यः ॥ ५ ॥

अथ सप्तदश दुन्दुभीननुवेद्यन्तꣳ समिन्वन्ति । प्रतीच आग्नीध्रात् प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापतिमुज्जयति ॥ ६ ॥

---

* ब्राह्मणः —इति ग, घ ।

अथैतेषां दुन्दुभीनाम् *। एकं यजुषाहन्ति तत् सर्वे यजुषाहता भवन्ति ॥ ७ ॥

स आहन्ति। बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयतेति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः † ॥ ८ ॥

अथ यदि राजन्यो यजते। इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयतेति वषट् हीन्द्रः वषट् राजन्यः ‡ ॥ ९ ॥

अथैतेष्वाजिसृत्सु रथेषु। पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहरति तत् सर्वे यजुषोपावहृता भवन्ति ॥ १० ॥

स उपावहरति। एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत § बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वमिति

* ०नाम्—इति ग घ ।

† 'ब्राह्मण'—इति ग, घ ।

‡ 'राजन्य,'—इति क। 'राजन्य'—इति ख।

§ मजीजपत—इत्येव म पुस्तके ।

अथ यदि राजन्यो यजते । देवस्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेय मिति क्षत्रꣳ हीन्द्रः क्षत्रꣳ राजन्यः ॥ ३ ॥

त्रिः सामाभिगायति । त्रिरभिगीयावरोहति देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पते-रुत्तमं नाक मरुह मिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः * ॥ ४ ॥

अथ यदि राजन्यो यजते । देवस्याहꣳ सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाक मरुह मिति क्षत्रꣳ हीन्द्रः क्षत्रꣳ राजन्यः ॥ ५ ॥

अथ सप्तदश दुन्दुभीननुवेद्यन्तꣳ समाघ्नन्ति । प्रतीच आग्नीध्रात् प्रजापतिं वा ऽएष उज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमा मेवैतद्वाचं परमं प्रजापति मुज्जयति सप्त-दश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति ॥ ६ ॥

---

* ब्राह्मणः—इति अ, च ।

अथैतेषां दुन्दुभीनाम् *। एकं यजुषाहन्ति तत् सर्वे यजुषाहता भवन्ति ॥ ७ ॥

स आहन्ति। बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयतेति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः † ॥ ८ ॥

अथ यदि राजन्यो यजते। इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयतेति क्षत्रं हीन्द्रः क्षत्रं राजन्यः ‡ ॥ ९ ॥

अथैतेष्वाजिसृत्सु रथेषु। पुनरासृतेष्वेतेषां दुन्दुभीना मेकं यजुषोपावहरति तत् सर्वे यजुषोपावहृता भवन्ति ॥ १० ॥

स उपावहरति। एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाज मजीजपताजीजपत § बृहस्पतिं वाजं वनस्पतयो विमुच्यध्व मिति

---

* ॰नाम्—इति ग, घ।

† 'ब्राह्मणः'—इति ग, घ।

‡ 'राजन्यः'—इति क। 'राजन्यः'—इति ख।

§ 'मजीजपत'—इत्येव 'ग पुस्तके।

यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः * ॥ ११ ॥

अथ यदि राजन्यो यजते। एषा वः सा सत्या संवागभूद्यामिन्द्रं वाज मजीजिपताजीजि-पतेन्द्रं वाजं वनस्पतयो विमुच्यध्व मिति वाचयत्यैन्द्रो हि राजन्यः † ॥ १२ ॥

अथ वेशान्तात्। राजन्य उदङ् सप्तदश प्रव्याधान् प्रविध्यति यावान्वा एकः प्रव्याधस्ता-वांस्तिर्यङ् प्रजापतिरथ यावत् सप्तदशप्रव्याधास्ता-वानन्वङ् प्रजापतिः ॥ १३ ॥

तद्यद्राजन्यः प्रविध्यति। एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः सन् बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्य-स्तस्माद्राजन्यः प्रविध्यति सप्तदश प्रव्याधान् प्रविध्यति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति ‡ ॥ १४ ॥

अथ यं यजुषा युनक्ति। तं यजमान आति-

---

* 'ब्राह्मणः'—इति ग, घ।

† 'राजन्यः'—इति क, ख। ‡ 'ति'—इति क।

इति देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषमिति ॥ १५ ॥

तद्यथैवादो बृहस्पतिः। सवितारं प्रसवायोपाधावत् सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदं सुजयामीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत उदजयदेवमेवैष एतत् सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इदं सुजयानीति तदस्मै सविता प्रसविता प्रसौति तत् सवितृप्रसूत उज्जयति* ॥ १६ ॥

अथ यजुरध्वर्युः। अन्तेवासी वा ब्रह्मचारी वैतद्यजुरधीयात् सो ऽन्वाख्याय वाचयति वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजो ऽन्नजित इत्येवैतदाहाध्वन स्कभ्नुवन्त इत्यध्वनो हि स्कभ्नुवन्तो धावन्ति योजना मिमाना इति योजनशो हि मिमाना अध्वानं धावन्ति काष्ठां गच्छतेति यथैनानन्तरा नाष्ट्रा रक्षांसि न हिंस्युरेव

* ति—इति क।

यजते ऽन्नपेयॅं ह वै नामैतद्यद्वाजपेयं तद्यदेवै-तदन्न मुदजैषीत्तेनैवैतदेतां गतिं गत्वा सॅं-स्पृशते तदात्मन् कुरुते ॥ २५ ॥

स उप स्पृशति। आ मा वाजस्य प्रसवो जगम्यादित्यन्नं वै वाज आ मान्नस्य प्रसवो जगम्यादित्येवैतदाहेमे द्यावापृथिवी विश्वरूपेऽइति द्यावापृथिवी हि प्रजापतिरा मा गन्तां पितरामातरा चेति मातेव च हि पितेव च प्रजापतिरा मा सोमो ऽअमृतत्वेन गम्यादिति सोमो हि प्रजापतिः ॥ २६ ॥

स अश्वानवघ्रापयति। वाजिन इति वा-जिनो ह्यश्वास्तस्मादाह वाजिन इति वाज-जित इत्यन्नं वै वाजो ऽन्नजित इत्येवैतदाह वाजॅं सस्वाॅंऽस इति सरिष्यन्त इति वा ऽअथ ऽआह सरिष्यन्त इव हि तर्हि भवन्त्य-थात्र ससवाॅंऽस इति ससवाॅंस इव ह्यत्र भवन्ति तस्मादाह ससवाॅंऽस इति बृहस्पते-र्भागं मवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागं मवजिघ्रतेति निमृजाना

इति तद्यजमाने व्वीर्यं दधाति तद्यदश्वानवघ्रा-
पयतीम मुज्जयानीति वा ऽश्वे ऽवघ्रापयत्य-
थाश्वम मुदजैष मिति तस्माद्वा ऽश्वानवघ्रा-
पयति * ॥ २७ ॥

अथैतेषा माजिसृताᳬ † रथानाम् । एक-
स्मिन् वैश्यो वा राजन्यो वोपास्थितो भवति स
व्वेदेरुत्तरायाᳬ श्रोणा ऽउपविशत्यथाध्वर्युश्च यज-
मानश्च पूर्व्वया द्वारा मधुग्रह मादाय निष्क्राम-
तस्' वैश्यस्य वा राजन्यस्य वा पाणावाधत्तो
ऽथ नेष्टापरया द्वारा सुराग्रहानादाय निष्क्रा-
मति स जघनेन शालां पर्य्येत्यैकं वैश्यस्य वा
राजन्यस्य वा पाणावादधदाहानेन त्वा ऽत्र
निष्क्रीणामीति सत्यं वै श्रीर्ज्योतिः सोमो
ऽनृतं पाप्मा तमः सुरा सत्य मेवैतच्छ्रियं ज्योति-
र्यजमाने दधात्यनृतेन पाप्मना तमसा वैश्यं
विध्यति तैः स यं भोगं कामयते तं कुरुते
ऽथैतᳬ सहिरण्यपात्र मेव मधुग्रहं ब्रह्मणे

* ति'—इति क।

† ॰माजिसृताᳬ'—इति ग, घ।

मेतदाह धावन्त्याजिमाघ्नन्ति दुन्दुभीनभि साम गायति ॥ १७ ॥

अथैताभ्यां जगतीभ्याम् । जुहोति वानु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुः ॥ १८ ॥

स जुहोति । एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो ऽअपि कक्ष ऽआसनि । क्रतुं दधिक्रा अनु संसनिष्यदत् पथा * मङ्कांस्यन्वापनीफणत् स्वाहा ॥ १९ ॥

उत स्म । अस्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः । श्येनस्येव ध्रजतो ऽअङ्कसम् परि दधिक्राव्ण सहोर्जा तरित्रतः स्वाहेति † ॥ २० ॥

अथोत्तरेण त्रिकेन । जुहोति वानु वा मन्त्रयते द्वयं तद्यस्माज्जुहोति वानु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुरेतामेवैतदश्वान् धावत उपवाजयत्येतेषु वीर्यं

* 'पथा'—इति ग, घ।

† 'स्वाहेति'—इति क, 'स्वाहेति'—इति ख।

दधाति तिस्रो वा ऽइमाः पृथिव्य इयमहैका द्वे ऽअस्याः परे ता एवैतदुज्जयति ॥ २१ ॥

सो ऽनुमन्त्रयते । शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः * । जम्भयन्तो ऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद् युयवन्नमीवाः ॥ २२ ॥

ते नो ऽअर्वन्तः । हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रव । सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे † ॥ २३ ॥

वाजे वाजे ऽवत । वाजिनो नो धनेषु विप्रा ‡ अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानै-रिति § ॥ २४ ॥

अथ बार्हस्पत्येन चरुणा प्रत्युपतिष्ठते । त मुपस्पृशत्यन्नं वा ऽएष उज्जयति यो वाजपेयेन

---

* स्वर्काः—इति ग घ ।

† रे—इति ग घ ।  ‡ विप्रा—इति क ।

§ ॰रिति—इति ख, ॰रिति—इति ग, घ ।

ददाति तं ब्रह्मणे ददत्सत्तमायुरात्मन् धत्ते ऽमृतं ह्यायुर्हिरण्यं तेन स यं भोगं कामयते तं कुरुते ॥ २८ ॥ ५ ॥

॥ इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् [१.५.] ॥

विहितं वाजिधावनं मनुष्य प्रशंसति— "तद् यदिति। वाजिधावनेन भूर्लोकं जितवान् भवतीत्यर्थः ॥ १ ॥ अथ सामगानं यूपारोहणं च सार्थवादं विधत्ते— "अथ यद् ब्रह्मेत्यादि। 'ब्रह्मा' नामर्त्विक् 'नाभिदघ्ने' नाभिमात्रे 'उच्छ्रिते' उन्नते 'रथचक्रे' स्थित्वा 'साम' गायेत्। 'एतेन' भूम्यूर्ध्वप्रदेशयोर्मध्यदेशे गीयमानेन साम्ना 'अन्तरिक्षलोकं' जितवान् भवति। चक्रादुन्नतस्य सप्तदशारत्निपरिमितस्य यूपस्यारोहणेन तृतीयलोकं तेन स्वाधीनं कृतवान् भवति ॥ १ ॥

ब्रह्मणो रथचक्रे गानं विहितम्, तत् आरोहणं यजमानस्य न सम्भवतीति तदिदानीं विधत्ते— "स ब्रह्मेति †। तत्र वाजपेये द्वावधिकारिणौ, ब्राह्मणो राजन्यश्चेति; तत्र यजमानभेदेन मन्त्रभेदं विवक्षु प्रथमं ब्राह्मणपक्षे मन्त्रं पठति— "देवस्याहमिति ‡। 'सत्यसवस' सत्यानुज्ञानस्य 'सवितुः' सर्वस्य प्रसवितुर्देवस्य 'सवे' प्रसवे अनुज्ञायां वर्तमानो हि 'बृह-

---

* अ निमन्त्रेव पाठोऽयं, पाठे वा ब्रह्मदभिक्रया श्रीयं धावन्ति। छन्दोधन्व माजिमन्त्रेणोच्यते —इति का० श्रौ० १४ ३ २१ सूत्रवृत्तिः।

† का० श्रौ० सू० १४ ३ १२।

‡ मा० सं० ९. १०. १।

पतेः' सम्बन्धिनः 'उत्तमम्' उत्कृष्टं 'नाकं' स्वर्गं 'रुहेयम्' आरोहणं करवै। रुहेराशीर्लिङि, 'लिङ्याशिष्यङ्'-इत्यङ् *। "ब्रह्महेति। देवानां मध्ये बृहस्पतिर्ब्राह्मणजातिः ॥ २ ॥

राजन्यपक्षेऽपि मन्त्रं पठति— "मम यदीति। बृहस्पते-रित्यस्य स्थाने इन्द्रस्येति विशेषः †। अर्थस्तु पूर्ववत्। "अहं वीन्द्र इति। देवानां मध्ये इन्द्रः क्षत्रियजातिः ॥ ३ ॥

विहितस्य ब्रह्मकर्तृकस्य सामगानस्य त्रित्वमङ्गा विधत्ते— "त्रिः सामेति ‡। 'त्रिः' त्रिवार मित्यर्थः। "देवस्य वयम्" -इति, "रुहेम"-इति च बहुवचनान्तः शाखान्तरीयो मन्त्रः। तथैव कात्यायनोऽपि सूत्रयामास— "देवस्य वय मिति ब्रह्मा रथचक्र मारोहति"-इति §। अत्र "अहम्"-इति, "रुहे-यम्"-इति च एकवचनान्तत्वेन पठितत्वात् शाखाभावात् ‖ न मनु-स्त्वेव शाखायां विहित मित्यविरोधः।

प्रसङ्गाद् ब्रह्मणो रथावरोहणं वक्ति— "त्रिरभिगीयाव-रोहतीति। प्रयोगक्रमस्तु सूत्रे दर्शित ¶— "ब्रह्मा त्रि साम गायति, दुन्दुभीन् वादयति, पयस्य इति प्रत्युचं जुहोति"-

---

* पा० सू० ३ । १ । ८६ ।

† वा० सं० ९ । १० । २ । का० श्रौ० सू० १४ । ३ । १३ ।

‡ का० श्रौ० सू० १४ । ४ । १ ।

§ का० श्रौ० सू० १४ । ३ । १२ । काण्वशाखासूत्रे तु देवस्याह मित्येकवचनान्त एव पाठः ।

‖ माध्यन्दिया मिति पाठः ।

¶ का० श्रौ० सू० १४ । ४ । १—८ । अत्र तु कात्यायनस्य च देवस्याह मिति पाठे सम्मतिः, सौत्रमा अथर्वैवेति ध्येयम् ।

हवनविधिं मन्त्रं मन्त्रं * विधत्ते— "स वाइस्तीति। हे 'बृहस्पते।' 'वाजम्' चरुं 'जय'। हे दुन्दुभयः। 'बृहस्पतये' बृहस्पतेरर्थाय 'वाचं' सत्यभूता यूयं 'वदत'। 'बृहस्पतिं' 'वाजम्' चरुं 'जापयत' चरुविषयं जयं प्रापयत। बृहस्पतिः स्वय मेव वाजं जयति, तं जापयत। जयतेर्ण्यन्तस्य "क्रीङ्‌-जीनां णौ ।" "-इत्यात्वे कृते पुगागमः ॥ ८ ॥

राजन्यमन्त्रमेदं दर्शयति— "अथ यदीति। बृहस्पतिस्थाने इन्द्र पदं प्रक्षेपणीयम् ‡। अन्यत् समानम् ॥ ९ ॥

विधत्ते— "अथैतेष्विति। 'रथेषु' 'आजिसृत्सु' लक्ष्यस्थानं प्रति सृतवत्सु गतवत्सु 'पुनरासृतेषु' पुनरागतेषु सत्सु 'एतेषां' सर्वेषां 'दुन्दुभीनां' मध्ये 'एकं' प्राग् 'यजुषा' मन्त्रेण 'उपावहरति' अवरोहयेत्; अन्येषाम् तूष्णीं मित्यर्थः. § ॥ १० ॥

"स उपावहरतीति। अवरोहणमन्त्रस्याय अर्थः ‖ ;— हे दुन्दुभयः। 'वः' युष्माकं सम्बन्धिनी 'सा सत्या' 'संवाक्' समुदिता वाक् 'अभूत्', 'यया' वाचा 'बृहस्पतिं' 'वाजम्' 'अजीजपत' चरुविषयं जयं प्रापयत। एतस्यैव पुनर्वचनं सन्नीजपतेति वाक्यम्। हे 'वनस्पतय ।' काष्ठे कारणमन्दः, वानस्पत्या दुन्दुभयः 'विमुच्यध्वम्' विमुक्ता भवतेति ॥ ११ ॥

"अथेति। अत्रापि पूर्ववन्मन्त्रभेदो "यदि राजन्य इत्यादिना प्रदर्शितः. ¶ ॥ १२ ॥

अथवैर्युक्तस्य रथस्य यजमानकर्तृकं समन्त्रक मारोहणं विधत्ते —अथ य मिति। उक्तं समदृशमध्याधान्तपथाजिधावनं कर्तुम् 'आतिष्ठति' आरोहेदित्यर्थः। अत्र सूत्रम्— "देवस्याह मिति यजुर्युक्त मारोहति यजमानः"–इति *। आरोहणमन्त्रस्याय मर्थः † ;—'सत्यसवसः' यथार्थमसवस्य 'सवितुर्देवस्य' 'सवे' अभ्यनुज्ञायां वर्त्तमानः 'अहम्' 'वाजजितः' अन्नस्य जेतुः 'बृहस्पतेः' सम्बन्धि 'वाजम्' अन्नम् 'जेयम्' जीयास मिति। सवितुरनुज्ञ यैव अवर्त्तं मे वाजोऽन्नयो भवतीत्यर्थः ॥ १५ ॥

इम मर्थं बृहस्पतिदृष्टान्तेन द्रढयति— "तद्यथैवाद इत्या दिना। 'अदः' अमुष्मिन् विप्रकृष्टे काले, आजिधावनकाले 'बृहस्पतिः' 'सवितारम्' अनुससार। "एव मेवैष इत्यादिना दार्ष्टान्तिके योजयति ॥ १६ ॥

विधत्ते— "अथ यदीति। 'अथ' यजमानस्य रथारोहणा नन्तरम्, 'अध्वर्योः' शिष्यो के वा, अन्यो 'ब्रह्मचारी' वा 'एतद्' वक्ष्यमाणं मन्त्रम् 'अधीयात्' स्मरेत्; 'सः' त मेव रथम् 'अन्वास्थाय' तूष्णी मारुह्य "वाजिनः इति" मन्त्रं § 'वाच यति', यजमान मिति शेषः। अत्र सूत्रम्— "अध्वर्योर्ध तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय"–इति, "वाजिन इति वाचयति"–इति ‖ च। हे 'वाजिनः' अश्वाः। 'वाजजितः'

* का० श्रौ० सू० [illegible] ३ १८।
† वा० सं० ६. १३ १।
‡ 'अध्वर्युशिष्यो —इति क, ग।
§ वा० सं० ६. १६. २।
‖ का० श्रौ० सू० १४ ३ १६, २२।

अध्वस्य जेतारः 'अध्वनः' मार्गान् 'स्कभ्नुवन्तः'। "स्कभि स्तभि प्रतिबन्धे" *। स्कम्भनं नाम वेगेनाक्रमणम्, मार्गान् स्तब्धान् कृत्वा पुरोगमनम्। तत् कुर्वन्तः, योऽभयन्तो वा 'योजना' योजनानि 'मिमानाः'। "माङ् माने" †। शीघ्रगत्या परिच्छिन्दन्तः शीघ्रगामिनः, 'काष्ठाम्' वाजिधावनस्यावधिभूताम्। "आक्रान्तोऽपि काष्ठेत्युच्यते"-इति ‡ हि यास्कः। सप्तदशप्रव्याधान्ते निर्मिता औदुम्बरी शाखा लक्ष्यभूतस्वर्गात्मिकाम्; "स्वर्गो वै लोकः काष्ठा"-इति श्रुतेः §। वेगेन गच्छतेति।

स इमं व्याचष्टे— "वाजिनोऽश्वा इति। "योजनशो हीति। लोके 'हि' अश्वाः 'योजनशः' एकैकं योजनं 'मिमानाः' परिच्छिन्दन्तो महान्तम् 'अध्वानं' 'धावन्ति' गच्छन्ति, एव मश्वा अपीति।

"यदीनानिति। अस्याय मर्थः;— 'अस्मत्' वाजिधावन मध्ये 'मार्गे' नाशकानि 'रक्षांसि' 'एनान्' अश्वान् 'यथा' 'न हिंस्युः', तथा लक्ष्यस्थानं गच्छतेति।

विहितानां वाजिधावनदुन्दुभ्याघ्ननबृहत्संज्ञकसामगानानां प्रयोगकालं विधत्ते— "धावन्त्याजि मिति। अत्र सूत्रम्— "अन्तेवासी वा वाचनाय"-इत्येतस्मादनन्तरम् "आजिं धाव' यन्ति, वाजिन इति वाचयति, ब्रह्मा बृ. साम गायति, दुन्दुभीन् वादयन्ति"-इति ‖ ॥ १० ॥

---

* भ्वा॰ आ॰ ३८७ धा॰।

† दि॰ आ॰ ३६ धा॰। ‡ निरु॰ २ ५ १।

§ तै॰ ब्रा॰ १ ३ ६ २।

‖ का॰ श्रौ॰ सू॰ १४ ३ १८, २१, २२ ४ १ ७।

विधत्ते— "अथैताभ्या मिति। 'एताभ्यां' वक्ष्यमाणाभ्यां मन्त्राभ्यां हवन मनुमन्त्रणं वा विकल्पेन कर्त्तव्यम् *। उभय-त्रार्थवादवाक्यशेषः समान इत्याह— "यदि जुहोतीति। 'यन्तुः' अध्वर्युणेन स्तुतिरिति यजुर्वाक्यशेषः, स तु समानः। "एतानेवैतदश्वान् आवत उपवाजयति, एतेषु वीर्यं दधाति"-इति वाक्यशेषो द्रष्टव्यः †। 'एतत्' अनेन हवनेन अनुमन्त्र-णेन वा 'आवतः' शीघ्रगामिनः तान् 'अश्वान्' 'उपवाजयति' अत्यन्तवेगयुक्तान् करोति, एतेष्वश्वेषु वीर्यं सामर्थ्यं निहित-वान् भवतीत्यर्थः। अतो वेगसाधनत्वात् हवन मनुमन्त्रणं वा कर्त्तव्यमित्यर्थः ॥ १८ ॥

हवन मनूद्य मन्त्रार्थं विधत्ते— "स जुहोत्येष स्य इति ‡। 'एषः' 'स्यः' सः 'वाजी' वेगवान् अश्वः 'ग्रीवायाम्' 'अपि' 'कक्षे' कक्षमूले 'आसनि' आस्ये तदुचितरज्जुविशेषैः 'बद्धः' 'क्षिपणिं' कशया 'तुरण्यति' त्वरयति। 'दधिक्राः' धारकाणां मार्गनिरोधकानां पाषाणादीनाम् अपि अतिक्रामन् अश्वः 'क्रतुं' क्रतुमादिनोऽभिप्रायम् 'अनुसंसनिष्यदत्' सम्यगनुसन्दधानः 'पथां' मार्गाणाम् 'अङ्कांसि' लक्षणानि, कुटिलानि निम्नोन्नतानि च 'अन्वापनीफणत्' अनुक्रमेण सरलत्वं समत्वं चापादयन्, तुर-ण्यतीति पूर्वेण सम्बन्धः। 'स्वाहा'-इति होमसिद्ध्यर्थं वषट्-कारनिवृत्त्यर्थम् ॥ १९ ॥

"उत स्मेति §। द्वितीयमन्त्रस्यार्थः;— 'उत स्म'

---

* का० श्रौ० सू० १४ । ३, ४ ।
† अखिलैव ब्राह्मणे ११ क० (११पृ० १०पं०) द्रष्टव्यम् ।
‡ वा० सं० ९ । १४ ।	§ वा० सं० ९ । १५ ।

'ते' 'अर्वन्तः' गतिकुशला अश्वाः, 'हवनश्रुतः' अस्मदाह्वान-श्रोतारो 'वाजिनः' अन्नवन्तोऽश्वाः सर्वेऽपि 'नः' अस्माकं 'हवम्' आह्वानम् अस्मदीयं 'शृण्वन्तु'। 'मितद्रवः' पूर्ववत्। 'सहस्रसाः' सहस्रोऽस्य संभक्तारो दातारः। 'मेधसाता' यज्ञे। सुप आकारः *। 'सनिष्यवः' सनिं दानम् † अस्माकमिच्छन्तः। ईदृशाः 'ये' अश्वाः 'समिथेषु' संग्रामेषु 'महः' मंहितः गवोः 'धनम्'। मह इति धनविशेषणं वा, महदनं 'जभ्रिरे' आहृतवन्तः। शृण्वन्त्विति पूर्वेणान्वयः॥२३॥

"वाजी वाजेऽवत इति ‡। तृतीयमन्त्रस्यायमर्थः;— हे 'वाजिनः' अश्वाः। 'वाजे-वाजे' तत्तदन्ननिमित्ते धन-निमित्ते च 'नः' अस्मान् 'अवत'। 'विप्राः' मेधाविनः 'अमृताः' अमरणधर्माणः 'ऋतज्ञाः' ऋतं सत्यं गन्तव्यदेशं जानन्तः। तादृगश्वाभिमानिनो हे देवाः। 'अस्य मध्वः पिबत' इदं धावनात् पूर्वं घ्राणावघ्रायमाणं मधुसमानं नैवारचरुलक्षणं पिबत। पीत्वा च 'मादयध्वम्' हृष्टा भवत। ततः 'तृप्ताः' सन्तो 'देवयानैः पथिभिः' देवाधिष्ठितैर्मार्गैः अश्वभिराजिं प्रति 'यात' इति॥२४॥

विधत्ते—"अथ बार्हस्पत्येनेति §। 'प्रत्युपतिष्ठते' आजि धावनं कृत्वा तीर्थदेशं॥ प्रत्यागच्छतोऽश्वान् प्रति नैवारचरुणा

* पा० सू० ७ १ ३९।
† सन्यदान—इति च।
‡ वा० सं० ९ १८ १।
§ का० श्रौ० सू० १४ ३ ११।
॥ इह चात्वालोत्करयोर्मध्यदेशस्तीर्थो ज्ञेयः।

यपि च 'अस्य' यजमानस्य रथे नियुक्तस्य 'द्रवतः' गच्छतः 'तुरण्यतः' तूर्णं मध्वान मश्नुवानस्य 'प्रगर्हिनः' यवर्षिं प्राप्तु मभिकाङ्क्षतोऽश्वस्य 'अङ्कं' शृङ्गारचिह्नं* वस्त्रचामरादिकं 'परि' सर्वस्मिन्नपि देहे वर्त्तमानम् अनुगच्छति। तत्र दृष्टान्तः —'वेः' पक्षिणः 'पर्णं न' वातोद्धतं पत्रम् इव। यथा त्वरया गच्छतः पक्षिणः पक्ष उत्थितो गच्छन् नायलोपयते, तथेत्यर्थः। शीघ्रधावने श्येनो दृष्टान्यते— 'धजतः' परिधावतः 'श्येनस्य इव' 'दधिक्राव्णः' धारकपर्वताद्यतिक्रामिणोऽश्वस्य 'कार्ष्णों' वलेन 'सह' 'तरितः' स्वयं तरतोऽश्वस्येति योज्यः। 'स्वाहा' -इति पूर्ववत् ॥ १० ॥

कर्त्तव्यान्तरं विधत्ते— "पयोसरेवेति †। वक्ष्यमाणेन ऋचेन हवन मनुमन्त्रणं वा कुर्यात्। "द्वयं तदिति। अस्याय मर्थः— 'जुहोत्यनुमन्त्रयते वा'-इति यत्, तद् द्वयं सत्यानृतात्मकत्वेन द्विप्रकार मिति; "द्वयं वा इदं न तृतीय मस्ति, सत्यञ्चैवानृतञ्च"-इति श्रुतेः‡। हवनानुमन्त्रणयो-रुभयत्रार्थवादवाक्यशेषः समान इत्याह— "यदि जुहोतीति। 'अस्तु.' वाक्यशेषः समानः; आगतमन्त्रकरणयोस्तु प्रकरणयोश्च हवनानुमन्त्रणयोस्तावकवाक्यशेषः समान इत्यर्थः। कः पुन-रसावित्याह—"एतामेवैतदिति। हवनानुमन्त्रणार्थवादवाक्यशेष ॥

"तिस्रो वा इत्यादिकं ऋचेन त्रिलपङ्क्त्यर्थवादमाह्नाथम्। 'पृथिव्यस्त्रिष्ट.'; "त्रयो वा इमे त्रिवृतो लोकाः"-इति

---

* 'अङ्गानारचिह्न''-इति च, छ।'

† का० श्रौ० सू० १८ ४ २। 'च-शब्दात् जुहोति अनुमन्त्रयते वा -इति तत्र वृत्ति.। ‡ श० ब्रा० १ १ १ ४।

एकैकस्य व्याख्यानकल्पश्रुतेः। तत्र 'इयं' परिदृश्यमाना भूमिः 'एका', 'अस्याः' भूमेः 'परि' उपरि दृश्यमाने 'द्वे' पृथिव्यौ; 'ताः' तिस्रो भूमीः वृषकरणकेन होमेनानुमन्त्रणेन वा उज्जित-वान् भवति ॥ २१ ॥

ततोऽनुमन्त्रण मनूद्य मन्त्रत्रयं पठति— "सोऽनुमन्त्रयत इति। अन्यदन्यस्योपलक्षणम्; यथानुमन्त्रणानुवादत्वात्, मन्त्रान्ते हवनं वा कार्यम्; वचनबलादित्यवगन्तव्यम् *। तत्र, प्रथममन्त्र-स्यायमर्थः †;— 'वाजिनः' अश्वाः 'हवेषु' यज्ञेषु, सङ्ग्रामेषु वा 'नः' अस्माकं 'शं भवन्तु' सुखप्रापका भवन्तु। 'देवताता' दैवयोग्याः। यद्वा, देवास्तन्यन्ते विस्तार्यन्ते यत्र सा देव-तातिर्यज्ञः, तस्मिन्। 'हवेषु' आह्वानेषु शं भवन्त्विति योजना। 'मितद्रवः' मितं मल्पं द्रवन्ति गच्छन्तीति मितद्रवः, 'स्वर्काः' शीघ्रधावनेन सुष्ठु अर्चनीयाः 'अहिं' 'वृकं' 'रक्षांसि' सर्पवत् आरण्यश्ववत् बाधकान् राक्षसान् 'जम्भयन्तः' जम्भन्तः, वर्ण-व्यत्ययः, क्षोभयन्तः। 'सनेमि'-इति पुराणनाम ‡, इह 'तु' क्षिप्रवचनम्। शीघ्रम् 'अमीवान्' रोगान् 'अस्मत्' अस्मत्तः 'युयवन्' वियोजितवन्त इत्यर्थः ॥ २२ ॥

"ते नो अर्वन्त इति §। द्वितीयमन्त्रस्यायमर्थः;—

---

* पूर्वकण्डे द्रष्टव्या। "अनुमन्त्रयते वा, उपरिष्टाच्च त्रिभिः"— इति का० श्रौ० सू० १४ ४ ४, ५। 'च-शब्दात् जुहोति अनु मन्त्रयते वा'—इति च तत्र कर्कः।

† वा० सं० ९ १६ १।

‡ निघ० ३ २८ ४।

§ वा० सं० ९ १७ १।

'अश्वान्' अवघ्रापयेत्। तन्मन्त्रस्याय मर्थः;— हे 'वाजिनः' अश्वाः! 'वाजजितः' वाजस्यान्नस्य जेतारः, वाज मन्नं जेतु मिति शेषः। 'ससृवांसः' आजिसरणं कृतवन्तः सन्तो 'बृहस्पतेः' सम्बन्धिनं 'भागम्' अन्नभागम् 'अवजिघ्रत' अवघ्राणं कुरुत। 'निमृजानाः' अवलेपनिमार्जनं कुर्वाणाः 'इति'। मन्त्रं पदशोऽनुद्य व्याचष्टे— "वाजिनो हीति। ससृवांस इति भूतार्थविहितक्वसुप्रत्ययेन प्रयोगस्याभिप्राय माह— "सरिष्यन्त इति। पूर्वं आजिधावनप्राक्काले अश्वानवघ्रापणं विहितम्; तन्मन्त्रे 'वाजं सरिष्यन्तः'-इति तु भविष्यत्त्वेन प्रयुक्तम्; आजिधावनस्य करिष्यमाणत्वात्, अत्र त्वस्य कृतत्वात् तदन्ते विधीयमाने अवघ्रापणमन्त्रे ससृवांस इति भूतार्थवाचकत्वेन प्रयोगो युक्त इत्यभिप्रायः। निमृजाना इत्यस्य तात्पर्य माह— "तद्यजमान इति। अवलेपनिमार्जनस्य वीर्यहेतुत्वात् 'तत्' तेन 'निमृजाना इति'-पदेन 'यजमाने' 'वीर्यं' स्थापितवान् भवति ॥

आजिधावनस्यादौ तदन्ते च विहितस्य अवघ्रापणस्य प्रयोगभेदं दर्शयति— "तद्यदश्वानिति। 'अग्रे' पूर्वं वाजोज्जित्यर्थम्, अत्र तूज्जितस्य वाजस्य स्वाधीनत्वापादनार्थम्; अतः पूर्व मिमं वाज मुज्जयानीति, अथेमं वाज मुदजैष मित्यागामिदर्शनार्थि भूतार्थवाचि च पदं युक्त मित्यर्थः ॥ २७ ॥

सुराग्रहाणां मधुग्रहस्य च विनियोगप्रकारो माध्यन्दिने सवने वक्ष्यत इति द्वितीयब्राह्मणान्ते * प्रतिज्ञातम्, त मिदानीं मवसरप्राप्तं दर्शयितु माह— "अथैतेषा मिति। 'वाजिग्रहान्' आजिं प्रति सरिष्यतां रथानां यजमानस्योज्जितिकाले

* 'द्वितीयब्राह्मणे'—इति क। २६पृ० १०पं० ( २.१८. ) द्रष्टव्यम्।

मेकस्मिन् रथे वैश्यराजन्ययोरन्यतरः सुराग्रहवान् प्रतिग्रहीतु-मासीनो भवति। अत्र कात्यायनो यजुर्युक्तमारोहण मध्वर्यु-शिष्यस्य यजमानवाचनार्थं सुक्ता * सूत्रयामास— "इतरेषा-मेकस्मिन् राजन्यो वैश्यो वा सीरप्रतिग्रहायाजिं सीमां यन्ति" -इति †।

"स वेदेरिति। अस्यायमर्थः ;— 'सः' वैश्यराजन्ययो-रन्यतरो रथादवरुह्योत्तरस्यां 'श्रोण्यां' उपविशेत्। 'अथ' अनन्त-रम् अध्वर्युयजमानौ 'पूर्वया द्वारा' हविर्धानस्य पूर्वद्वारेण 'मधु-ग्रहम्' आदाय, निष्क्रम्य, वैश्यराजन्ययोरन्यतरस्य हस्ते निद-ध्याताम् ‡। 'नेष्टा' अपि हविर्धानस्य पश्चिमद्वारेण 'सुराग्रहान् आदाय' निष्क्रम्य 'जघनेन' पत्नीशालायाः पश्चिम प्रदेशादागत्योत्तरस्यां वेदिश्रोण्यामुपविश्य उभयोरन्यतरस्य पाणा-वेकं सुराग्रहं प्रयच्छन् "अनेन त इमं निष्क्रीणामि"-इति वाक्यं पठेत् §। 'अनेन' सुराग्रहेण 'ते' तव सम्बन्धिनम् 'इमं' मधुग्रह 'निष्क्रीणामि' स्वाधीनं करोमीति तस्यार्थः।

स मिथं निष्क्रयं प्रशंसति— "सत्यं वै श्रीरिति। सोमस्य सत्यात्मकत्वम्, सुरायाः अनृतात्मकत्वं च प्रागेव व्याख्या-तम् ||। सुराग्रहप्रतिग्रहीतारं 'वैश्य' 'मिथ्याति' आधत्ते। अनेन

---

* "देवस्याह मिति (९. १३. १) यजुर्युक्तमारोहति यज-मान", आध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय"—इति का० श्रौ० सू० [illegible] ३. १८, १९ द्रष्टव्यम्।

† का० श्रौ० सू० १४ ३ २०, २१।

‡ का० श्रौ० सू० १४ ४ १५।

§ का० श्रौ० सू० १४ ४ १६।

|| पृ० २२ पं० १३ द्रष्टव्यम्।

राजन्य च विधसीलर्या नम्य , वैश्यराजन्ययोरन्यतरस्य हस्ते प्रदानस्योक्तत्वात् ।

प्रतिग्रहीतॄणां तु सुरायहाणां मैच्छिकव्यवहारं दर्शयति— 'तं स स भोग मितिं'। क्षीरस्य मधुग्रहस्य दान विधत्ते— "यवेत मिति । 'एतं' मधुग्रह हिरण्यपात्रसहित ब्रह्मणे दद्यात्*। आपस्तम्बेन सौवर्णपात्रपरिमाण मुक्तम् — "ब्रह्मणे ददाति हि मधुस्थानश्च सौवर्ण शतमानस्य कृतम्"—इति†।

तद् दानं प्रशंसति— "तं ब्रह्मण इति। 'तं' मधुग्रह 'ब्रह्मणे' 'ददत्' प्रयच्छन्। शैतौ शतृप्रत्यय । हिरण्यदानेन 'अमृतम्' अमरणशीलम् 'आयु' 'आत्मन्' आत्मनि निहित वान् भवतीति। ब्रह्मप्रतिग्रहीतस्य मधुग्रहस्यैच्छिकं व्यवहारं दर्शयति— "स ॥ भोग मिति। "ब्रह्मणे मधुग्रह ददाति सपात्रम् , त स यथेष्ट कुरुते'—इति‡ हि कात्यायनेन सूचित मिति ॥ २८ ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य पञ्चमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १४ ३ १७

† आप० श्रौ० सू० १८ ५ ५। मधुस्थानम्—इति तत्रत्यपाठ ।

‡ का० श्रौ० सू० १४ ३ १७ १८।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं षोडशस्य कनककृततुलापूरुषौ स्वर्णगर्भम् ,
सप्ताम्भोधीन् * पञ्चसीरी † त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रा रुक्मवाजिद्विपरथवितरणौ सायणिः ‡ मित्रधार्यौ § ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलं स्वर्णजं वर्णमुख्यः ,
कार्पासीयं क्षमावान् गुडकृत मजडो ‖ राजतं राजपूज्य ।
श्चाज्योत्थं प्राज्यजन्मा ¶ लवणज मल्पः शार्करं चार्कतेजाः ,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसान्मिश्रणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायः समाप्तः ॥ १ ॥

---

* 'सप्ताब्धीन्'—इति ठ (१)। † 'सप्तसीरीं'—इति ठ।
‡ 'मायणः' स्यात् । § स्यात् 'मिद्धधार्यौ' ।
‖ मजड—इति ठ। ¶ 'प्राज्यबुद्धिः'—इति ठ।
(१) ठ इति प्रथमकाण्डीयमध्यादर्शोक्तिषु चिह्नं द्रष्टव्यम् ।

( अथ द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् । )

अथ स्रुवं चाज्यविलापनीं चादाय। आह-वनीयं मभ्येति स एता द्वादशाप्रीर्जुहोति वा व्याचयति वा यदि जुहोति यदि व्याचयति समान एव बन्धुः ॥ १ ॥

स जुहोति। आपये स्वाहा स्वापये स्वाहा-ऽपिजाय स्वाहा क्रतवे स्वाहा व्यसवे स्वाहा-ऽह्र्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनंश-िनाय स्वाहा विनंशिन ऽआन्त्यायनाय स्वा-हाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहा-ऽधिपतये स्वाहेत्येता द्वादशाप्रीर्जुहोति द्वादश वै मासा * संवत्सरस्य संवत्सरः प्रजापतिः प्रजा-पतिर्यज्ञस्तद्यैवास्याप्रियो सम्पत् तां मेवैतदुव्ययति तां मात्मन् कुरुते † ॥ २ ॥

अथ षट् कृप्ती। जुहोति वा व्याचयति वा यदि जुहोति यदि व्याचयति समान एव बन्धुः ॥ ३ ॥

---

* मासा —इति ग घ । † कुरुते —इति ग घ ।

स व्याचयति * । आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताᳬ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामित्येताः षट् कृप्तीर्व्याचयति षड् वा ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्य कृप्तिर्या सम्पत्ता मेवैतदुज्जयति ता मात्मन् कुरुते ॥ ४ ॥

चष्टाश्रिर्यूपो † भवति। चष्टाचरा वै गायत्री गायत्र मग्नेश्छन्दो देवलोक मेवैतेनोज्जयति सप्तदशभिर्वासोभिर्यूपो व्वेष्टितो वा व्विवयितो वा भवति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति ॥ ५ ॥

गौधूमं चषालं भवति। पुरुषो वै प्रजापतेर्नेदिष्ठᳬ सो ऽय मत्वगिवे वै पुरुषस्योषधीनां नेदिष्ठतमा यद्गोधूमास्तेषां न त्वगस्ति मनुष्य लोक मेवैतेनोज्जयति ॥ ६ ॥

गर्त्तन्वान् यूपो ऽतीव्यायो भवति। पितृ

---

* ति—इति क।　　† अष्टा०—इति ग, घ।

देवलोको वै गर्त्तः पितृलोकमेवैतेनोज्जयति सप्त-दशारत्निर्भवति सप्तदशो वै प्रजापतिस्तत् प्रजा-पति मुज्जयति ॥ ७ ॥

अथ नेष्टा पत्नी मुदानेष्यन् । कौशं वासः परिधापयति कौशं वा चण्डातक मन्तरं दोक्षित-वसनाज्जघनार्द्धो वा ऽएष यज्ञस्य यत् पत्नी ता मेतत् प्राचीं यज्ञं प्रसादयिष्यन् भवत्यमेध्यं वै पत्न्या अमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भा-स्तद्यदेवास्या अमेध्यं तदेवास्या एतद्दर्भैर्मेध्य कृत्वा-ऽथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नी मुदानेष्यन् कौशं वासः परिधापयति कौशं वा चण्डातक मन्तरं दोक्षितवसनात् ॥ ८ ॥

अथ निश्रयणीं* निश्रयति । स दक्षिणत उदङ् रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वे-वोदङ् रोहेत् तथा ह्युदग् भवति † ॥ ६ ॥

स रोक्ष्यन् जाया मामन्त्रयते । जाय ऽएहि स्वो रोहावेति रोहावेत्याह जाया तद् यज्जाया

---

* निश्रेणीं – इति मा० मध्यम इति डा० वेबर, ।
† 'भवति – इति ग घ ।

मामन्त्रयते ऽर्द्धो ह वा ऽएष आत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत् प्रजायते ऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दते ऽथ प्रजायते तर्हि हि सर्व्वो भवति सर्व्व एतां गतिं गच्छानीति तस्माज्जाया माम-न्त्रयते ॥ १० ॥

स रोहति । प्रजापतेः प्रजा अभूमेति प्रजापतेर्ह्येष प्रजा भवति यो व्वाजपेयेन यजते * ॥ ११ ॥

अथ गोधूमानुपस्पृशति † । स्वर्देवा अग-न्मेति ‡ स्वर्ह्येष गच्छति यो व्वाजपेयेन य-जते ॥ १२ ॥

तद्यद्गोधूमानुपस्पृशति § । अन्नं वै गोधूमा अन्नं वा ऽएष उज्जयति यो व्वाजपेयेन यजते ऽन्नपेयं ह वै नामैतद् यद्वाजपेयं तद्यदेवैतदन्न

* यजत—इति क ख ।

† ॰ति—इति ग घ ।  ‡ ॰ग्मेति—इति क,

§ ॰ति—इति क  ॰ति—इति ग, घ ।

मुदजैषीत्तेनैवैतदेतां गतिं गत्वा सᳬस्पृशते तदात्मन् कुरुते तस्माद्धोधूमानुपस्पृशति* ॥ १३ ॥

अथ शीर्ष्णा यूप मत्युज्जिहीते। अमृता अभूमेति देवलोक मेवैतेनोज्जयति † ॥ १४ ॥

अथ दिशो ऽनुवीक्षमाणो जपति। अस्मे वो ऽस्त्विन्द्रिय मस्मे नृम्ण मुत क्रतुरस्मे वर्चाᳬसि सन्तु व इति सर्व्वं वा ऽएष इद मुज्जयति यो व्वाजपेयेन यजते प्रजापतिᳬ ह्युज्जयति सर्व्वं मु ह्येवेदं प्रजापतिः सो ऽस्य सर्व्वस्य यश इन्द्रियं व्वीर्यᳬ ‡ संवृज्य तदात्मन्धत्ते तदात्मन् कुरुते तस्माद्दिशो ऽनुवीक्षमाणो जपति § ॥ १५ ॥

अथैन मूषपुटैरनूदस्यन्ति। पशवो ऽवा ऽऊषा अन्नं वै पशवो ऽन्नं वा एष उज्जयति यो व्वाजपेयेन यजते ऽन्नपेयᳬ ह वै नामैतद्यद्वाजपेयं तद् यदेवैतदन्न मुदजैषीत् तेनैवैतदेतां गतिं

* °स्पृशति —इति क।  † °ऽजयति —इति क।
‡ इन्द्रियं वै व्वीर्य्यं —इति क पुस्तके।
§ °जपति —इति क।

गत्वा संस्पृशते तदात्मन् कुरुते तस्मादेनमुप पुटैरनूदस्यन्ति * ॥ १६ ॥

आश्वत्थेषु पलाशेषूपनद्धा भवन्ति । स यदेवादो ऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति विशो ऽनूदस्यन्ति विशो वै मरुतो ऽन्नं विशस्तस्माद्विशो ऽनूदस्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापतिमुज्जयति † ॥ १७ ॥

अथेमामुपावहमानो जपति ‡ । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इति बृहस्पतेर्ह वा ऽअभिषिषिचानात् पृथिवी बिभयांचकार महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै मायं नावदृणीयादिति बृहस्पतिरु ह पृथिव्यै बिभयांचकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रं हिनस्ति न पुत्रो मातरम् ॥ १८ ॥

---

* ॰दस्युति—इति क ।　　† 'मुज्जयति'—इति क ।

‡ अवति ——इति पाठः ग पुस्तके ।

बृहस्पतिसवो वा ऽएष यद्वाजपेयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै मायं नावदृणीयादित्येष उ हास्मै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रं हिनस्ति न पुत्रो मातरम् ॥ १९ ॥

अथ हिरण्यमभ्यवरोहति । अमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति * ॥ २० ॥

अथाजर्षभस्याजिनमुपस्तृणाति । तदुपरिष्टाद्रुक्मं निदधाति तमभ्यवरोहतीमां वैव † ॥ २१ ॥

अथास्मा ऽआसन्दीमाहरन्ति उपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते तस्मादस्मा ऽआसन्दीमाहरन्ति ‡ ॥ २२ ॥

औदुम्बरी भवति § । अन्नं वा ऽऊर्गुदुम्बर ऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति

---

* 'तिष्ठति'—इति क ।
† 'वैव'—इति ग, घ ।
‡ माहरन्ति—इति क ।
§ 'भवति'—इति क ।

ता मध्येण हविर्द्धाने जघनेनाहवनीयं निद-
धाति * ॥ २३ ॥

अथाजर्षभचर्माजिन मास्तृणाति । प्रजापति-
र्वा एष यदृषभः एता वै प्रजापतेः † प्रत्यक्ष-
तमां यदजास्तस्मादेतास्त्रिः संवत्सरस्य विजाय-
माना द्वौ त्रीनिति जनयन्ति तत् प्रजापति
मेवैतत् करोति तस्मादजर्षभचर्माजिन मास्तृ-
णाति ॥ २४ ॥

स आस्तृणाति । इयं ते राडिति राज्य
मेवास्मिन्नेतद् दधात्यथैन मासादयति यन्तासि यमन
इति यन्तार मेवैन मेतद् यमन मासां प्रजानां
करोति ध्रुवोऽसि धरुण इति ध्रुव मेवैन मेतद्-
धरुण मस्मिंल्लोके करोति कृष्यै त्वा क्षेमाय
त्वा रय्यै त्वा पोषाय त्वेति साधवे त्वेत्ये-
वैतदाह ॥ २५ ॥ ६ ॥

॥ इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् [२.१.] ॥

---

* 'निदधाति'—इति क, ख ।

† प्रजापति'—इति क ।

॥ श्रीमद्गणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्यायस्य प्रथमब्राह्मणे यूपारोहणमुच्यते। तत्र प्रथमम् आप्तिहोमं विधित्सुराह— "अथ स्रुवमिति। आज्यं विलाप्यतेऽनया इत्याज्यविलापनी स्थाली; स्रुवपर्णं स्रुवपत्रमित्यर्थम्। अत्र सूत्रम्— "द्वादश स्रुवाहुतीर्जुहोत्याप्तये स्वाहेति प्रतिमन्त्रं, वाचयति वा"–इति *। होमं विधत्ते— "स एता द्वादशेति। द्वादशसङ्ख्याकाः आप्तिसाधनत्वादाप्त्याख्याः आज्याहुतीर्जुहुयात्। "आप्तये स्वाहा"–इत्यादिलिङ्गसमवायात् प्राग्भूत उपदधातीतिवत् आप्त्यनामिसमुदाये आप्तिशब्दः। विकल्पेन यजमानवाचनं विधत्ते— "वाचयति वेति। आप्तीर्जुहुयात्, यजमानं वा वाचयेदित्यर्थः। अत्रोभयत्रार्थवादवाक्यमेव:, यथाम इत्याह— "यदि जुहोतीति। 'मन्त्रः' वाक्यमेव:, "द्वादश वै मासाः"–इत्यादिना वक्ष्यते † ॥ १ ॥

होमे मनूक्त द्वादश मन्त्रान् विधत्ते— "स जुहोत्याप्तये स्वाहेति ‡। संवत्सरस्य यज्ञात्मकप्रजापतेरेतानि नामानि आप्तिरीत्यादिभिः, तस्मै 'स्वाहा' सुहुतमस्तु। 'स्वापये' शोभनमाप्नुवते देवाय। 'विश्राय' अस्तु जाताय। 'क्रतवे' सङ्कल्पाय, यज्ञाय वा। 'वसवे' वासकाय। अह्नाम्पतिः अहर्पतिः संवत्सरः, तस्मै। "मुग्ध वैचित्ये" §, अपकारं अजानते 'मुग्ध'.

* का० श्रौ० सू० १४. ५. २ ।

† इत उपरितनस्यैव कण्डिकायाम् ( द्रष्ट पृ० ११पं० =८५पृ० ११पं० ) ।

‡ वा० सं० ९. २०. १–१२ ।

§ दि० प० ६९ धा० ।

दिवधाय ; 'अह्ने बुध्नाय'–इत्येकं नाम। एवमुत्तरत्रापि विशेषणयुक्त मेकैकं नाम। 'वैनंशिनाय' विनाशयुक्तेषु हितकारित्वेन भवतीति वैनंशिनः, विनंशिनः पुत्रो वा वैनंशिनः, तस्मै। एवमुत्तरत्राप्यपत्यार्थे प्रत्यय इति वेदितव्यम्। 'विनंशिने' मनुविनाशकाय। अन्त्ये अयने भवः आन्त्यायनः, अन्त्यायनस्य पुत्राय वा, तस्मै। 'आन्त्याय' अन्ते भवाय 'भौवनाय' भुवनस्यापत्याय। 'भुवनस्य पतये'–इत्येकं नाम, भुवनस्य पतिः प्रजापतिः, "प्रजापतिर्वै भुवनस्य पतिः"–इति * हि तैत्तिरीयकम्। तथा 'अधिपतये'–इति, अधिपतिः प्रजापत्यात्मको वाजपेययज्ञः। अत्र स्वाहान्त एकैको मन्त्र इत्यर्थः।

आहुतिगतां द्वादशसंख्यां प्रशंसति— "द्वादश वै मासा इति। अथै वाक्यशेषो होमवाचनयोरुभयोरपि समानः— "सर्वीवाप्तास्मिरिति। 'अथ' संवत्सरस्य प्रजापत्यात्मकस्य यज्ञस्य 'या' 'आप्तिः' सर्वात्मकत्वेन व्यापकशक्तिः, 'या' 'सम्पत्' संवत्सरसम्पत्तिः, सर्वात्मकता, ता मेता मुभयी मेवैताभिर्होमैर जितवान् भवति; जित्वा च 'ताम्' 'आत्मनि' स्वस्मिन् कृतवान् भवति ॥ २ ॥

विधत्ते — "अथ यद् कृसीरिति †। 'कृसीः' क्षुपिधातुनिष्पन्नशब्दयुक्तमन्त्रकरणिका आहुतीर्जुहुयात्। मन्त्राणां वाचनं कार्य मिति वा ॥ ३ ॥

---

* तै० सं० १ ७ ८ ६ ४ ७ ११ २, ५ ३ ६ १६, तै० ब्रा० १ ३ ७। ऋ० सं० ४ ५३ २ प्रभृतिषु द्रष्टव्यम्।

† "षट्कोत्तरा."–इति का० श्रौ० सू० १४ ५ २। "जुहोति वाचयति वा"–इति मत इति.।

वाचनमनूद्य मन्त्रान् विधत्ते— "स वाचयतीति । यत्र वाचनविवक्षया मन्त्रान्ते स्वाहाशब्दो न प्रयुक्तः ; यत्र वचनबलाद् हवनं वा कार्यम् , तदा स्वाहाशब्दः प्रयोक्तव्यः । मन्त्रार्थस्तु— 'आयुः' मदीयं , 'यज्ञेन' वाजपेयाख्येन 'कल्पताम्' समर्थं भवतु । 'पृष्ठं' रथन्तरादि ; यद्वा 'पृष्ठं' वंशवदायुःप्राणादेराधारभूतो मध्यदेहः । 'यज्ञः' विष्णुः । अन्यत् स्पष्टम् * ।

ता इमाः षट्क्लृप्तीः प्रशंसति— "षड् वा ऋतव इति । हवनवाचनयोरत्र षाड्विधः समान इत्यर्थः । "तद् यैवास्य क्लृप्तिरित्यादि , पूर्ववद् योज्यम् ॥ ४ ॥

क्लृप्तिवाचनमन्त्रतदर्थाभिज्ञस्य यजमानस्य यूपारोहणं विवक्षुरादौ स्वर्गत्वेन निरूपयिष्यमाणस्य यूपस्य प्राकृतं गुणमनुवदति— "अष्टाश्रिर्यूप इति । अश्रिगतामष्टसङ्ख्यां प्रशंसति— "अष्टाक्षरेति । यतः 'अष्टाक्षरं छन्दो गायत्रम्' ततस्तद्रूपत्वाद् देवलोकजयहेतुरष्टाश्रिर्यूप इत्यर्थः । यूपस्य वेष्टनं विधत्ते— "सप्तदशभिरिति । 'वेष्टितः' यथा यूपो न दृश्यते , तथाच्छादनं 'वा' कार्यम् , 'नियमितः' यूपस्यैकत्र प्रदेशे वाससा बन्धनं † 'वा' कार्यम् । वासोगतां सङ्ख्यां प्राजापत्यात्मना स्तौति— "सप्तदश इति ‡ ॥ ५ ॥

चषालमात्रस्य यूपशकलस्य दारुमयत्वापवादाय विधत्ते— "गौधूम मिति । गोधूमपिष्टमयं चषालं कुर्यादित्यर्थः । "पुरुषो

---

* ते षट् मन्त्रास्तु मा० सं० ९ २१ १–६ ।

† 'बन्धनं'—इति क ख, छ ।

‡ "यूपवेष्टनं सप्तदशभिर्वस्त्रैर्दूष्यैर्वा परिव्ययकाले"—इति का० श्रौ० सू० १४ । १ । २० ।

षा इत्यादि। अस्यायमर्थः,— 'पुरुषो' नु 'प्रजापतेः' 'नेदिष्ठम्' अन्तिकतमं वस्तु; पुरुषसृष्टेः प्रथमभावित्वात्। 'सोऽयम्' 'अत्वक्' अस्थ्यादिहीन इव यद्वत्त्वगपहितः; 'गोधूमाः' मध्ये एते 'गोधूमाः' अपि 'पुरुषस्य' सन्निहिततमं वस्तु, अत्वकारित्वात्। तेषां तु त्वगभावः प्रसिद्धः। अतो गोधूमचषालकरणेन 'मनुष्यलोकमेव' जितवान् भवतीति ॥ ६ ॥

तस्मिन् यूपे गुणविशेषं विधत्ते— "गर्त्तम्मानिति। गर्त्तमान्, यूपस्याधो निखातप्रदेशः कार्यः। 'गर्त्तम्मान्' † "अनो नुट्"-इति ‡ अन्तस्तातरस्य मतुपो नुडागमो विहितः, व्यत्ययेनाकारान्तादपि भवति। 'अतीच्छ्राये.' अतमूलाय, स्थूलाग्रप्रदेशो भवेत्। गर्त्तं पितृलोकात्मना प्रशंसति— "पितृदैवत्य इति। "पितृणां सदनमसि"-इत्यादिमन्त्रपाठे यूपावटस्य पितृदेवतास्थानत्वं प्रतीयते। अत एव तैत्तिरीयके यूपस्य सर्वदेवतामयत्वकथनप्रस्तावे— "पितृणां निखातं मनुष्याणामूर्ध्वं निखातात्"-इति § गर्त्तावच्छिन्नस्य यूपभागस्य पितृदेवत्यत्वम्। ईदृशो प्रशिशिरत्र 'वै' शब्देन द्योत्यते। आरोहणीययूपस्य चोदकप्राप्तं प्रमाणमपवदितुं परिमाणान्तरं विधत्ते— "सप्तदशेति। चतुर्विंशत्यङ्गुलपरिमितोऽरत्निः; सप्तदशसङ्ख्याका अरत्नयः प्रमाणं यस्य यूपस्येति विग्रहः ॥ ७ ॥

विधत्ते— "अथ नेष्टेति। 'उदानेष्यन्' आनाय्यतो निर्गमयिष्यन् 'क्षौमं' दर्भमयं 'वासः' पत्नीं परिधापयेत् ‖। अथ

---

* 'उत्कीर्णमयाष्टो गौधूमचषालः'-इति का० श्रौ० सू० १४, १ २२।
† 'गर्त्तवान्'-इति क। ‡ पा० सू० ८ २ १६।
§ तै० सं० ६ ३, ४ १८। ‖ का० श्रौ० सू० १४ ५ ३।

पापस्तम्ब — "यज्ञस्य योनिरसीति दर्भमयं पत्नीम्"-इति *। श्रुतिश्च भवति— "दर्भमयं परिधापयति"-इति †। यद्वा, क्रिमिकोशविकारभूतं वासः 'क्षौमम्', तेन पत्नीं प्राच्छादयेत्। यद्वा, 'क्षौमम्' कुशमयं, षण्डातकम् सर्वोरुक परिधापयेत्, एवं शेष ॥ षण्डातकपदं कर्कोपाध्यायेन व्याख्यातम्— "षण्डातकं वसनं मुच्यते ‡। एवं ह्यभियुक्तोपदेश §— 'सर्वोरुकं विनासिन्या वासः षण्डातकं स्मृतम्'-इति। वृत्तौ पथिकत्वेनाच्छादनीयं मूरुकञ्चुकं सर्वोरुकं वासः। वसनस्य प्रदेशं विवक्ते— "अन्तर मिति ‖। दीक्षाकाले यद् वस्त्रं परिहितम्, तस्माद् बहिःप्रदेशे इत्यर्थः। अन्तर-शब्दो बहिर्योगे वर्त्तते ॥ १ ॥

दर्भैरेव वासः कर्त्तव्य मिति पत्नीोपपत्तिं दर्शयति— "जघनार्द्ध इत्यादिना। पूर्वदेशस्याहवनीयसाध्यत्वात् यत्र प्राच्यां दिश्यवस्थितं, तस्य यज्ञस्य पश्चिमभागे (पत्नीशालाया मव स्थानात् ¶) पत्नी यज्ञस्य जघनार्द्धे इति निरूप्यते। तां पत्नीम् एतर्हि 'प्राचीं' प्राङ्मुखां पूर्वदिगवस्थितं यज्ञं प्रापयिष्यन् भवति। तदुपायत्वेन दर्भमयवासः परिधापनस्य सिद्ध

---

* आप० श्रौ० सू० १८ ५ ७। इह ताण्ड्ये मित्यनुवर्त्तते। तत्र कृत्वाक्त वस्त्र मिति सा० भा० (तै० स० १ ७ ८ २)।

† तै० ब्रा० १ ३ ७ १

‡ षण्डकं उच्यते'—इति दा०—वैयरत्नस्यादित्व पाठान्तरम्।

§ अम० को० २ ६ ११६। विदु —इति च डा० देवरङ्ग।

‖ अन्तर दीक्षितवसनात —इति का० श्रौ० सू० १४ ५ ३।

¶ आश्वेय पाठो न पुस्तकान्तरे।

त्वापादकत्व माह— "अस्ति वा इति। पत्नीसम्बन्धिनाभिर्यद् वाचीन मङ्गम्, तद् 'अमेध्यम्' अपवित्रम्, तत्प्रदेशे मेध्य दर्भमयवास परिधापनेन तदङ्ग परिहृत्य 'कृत्वा', 'एना' 'प्राचीं' 'यज्ञ' प्रापितवान् भवति। दर्भाणां मेध्यत्वम् "पवित्रं वै दर्भाः पुनात्येवैनम्'—इति * श्रुत्यन्तरादवगम्यते। "तस्मावेष्टे-त्यादि, प्रतिज्ञार्थनिगमनम् ॥ ८ ॥

विधत्ते— "अथ निश्रेणी मिति †। 'निश्रेणीम्' निश्रेणी यूपारोहणार्थं सोपानसदृश काष्ठनिर्मितपदार्थं, 'निदधाति' यूपे निदध्यात्। तथा साधनेन यजमानस्य यूपारोहणे कञ्चिद् विशेष विधत्ते— "स दक्षिणत इति। दक्षिणप्रदेशा दुदङ्मुखो यूप मारोहेत्, उदक्प्रदेशाद् दक्षिणमुखो वा आरोहेदिति विकल्प। तत्रैक पक्ष सिद्धान्तयति— "दक्षिणत इति। 'तु' शब्द पक्षान्तरव्यावृत्त्यर्थः। तथाहि एव सति क्षति 'उदङ् भवति' कायस्य उदगपवर्गेणा सिद्ध्यति, तस्मा दय मेव पक्ष श्रेयान् ॥ ९ ॥

रोहणकाले जायामन्त्रणं विधत्ते— "स रोक्ष्यन्निति। रोहणं करिष्यन्, हे 'जाये।' 'एहि' आगच्छ, 'स्व' स्वर्ग 'रोहाव' आरोहणं करवावेति ‡। जायाया प्रत्युक्तिं दर्शयति— "रोहावेत्याह जायेति §। अथान्वयव्यतिरेकाभ्यां जाया सहितस्य सम्पूर्णावयवत्वं प्रतिपादयन् जायामन्त्रणं विधत्ते—

---

* तै० ब्रा० १ २ ७ १।
† का० श्रौ० सू० १४ ५ ४। तत्र निश्रयणीं दृश्यते।
‡ का० श्रौ० सू० १४ ५ ६।
§ का० श्रौ० सू० १४ ५ ७।

"तद्यदिति। प्रथमपर्याये 'असर्वः' इति परिच्छेदः, असम्पूर्ण इत्यर्थः। 'ह' यस्माद् यजमानस्य 'अर्द्धः एषः यत् जाया आत्मनः', तदभावे प्रजोत्पत्त्यभावः, यदा * जायासाहित्यं तदा प्रजोत्पादनसमर्थत्वम्। तथाच 'सर्वः' सम्पूर्णावयवोऽस्मि-त्याह— "एतां गतिं मिति। 'एतां' यूपारोहणलक्षणां 'गतिं' 'गच्छामि' प्राप्तवानीत्यभिप्रायेण जायामन्त्रणं कार्य मिति ॥ १०॥

एतद्यूपारोहणमन्त्रमर्थं विधत्ते— "स रोहतीति †। 'प्रजापतेः' 'प्रजाः' अपत्यभूताः 'अभूम' इति ‡ ॥ ११ ॥

गोधूमस्पर्शनमन्त्रं विधत्ते— "अथ गोधूमानिति §। वयं देवाः सन्तः 'स्वः' स्वर्गम् 'अगन्म' गतवन्त इति मन्त्रार्थः ‖ ॥ १२ ॥

"तद् यद् गोधूमानित्यादि। गोधूमस्पर्शनेन वाजपेययाजिन सर्वं स्वाधीनं कृतवान् भवतीति तात्पर्यार्थः ॥ १३ ॥

विधत्ते— "अथ शीर्ष्णेति ¶। 'शीर्ष्णा' शिरसा 'यूपम्' 'अत्युज्जिहीते' अतिक्रम्योद्गमयति। यूपं शिरसा स्पृशन् न अतिक्रम्य स्वशिर उद्गमयेदित्यर्थः। 'अमृताः' अमरणधर्माणो 'अभूम' सम्भूता इति उद्गमनमन्त्रस्यार्थः **। 'एतेन' यूपाग्रात् स्वशिरस उद्गमनात् यूपस्यातिक्रान्तत्वात् देवलोकजयः ॥ १४ ॥

---

* 'यदा'—इति क, ख, ङ, च पुस्तके नास्त्येव।
† का० श्रौ० सू० १४ ५ ८।
‡ वा० सं० ९. २१ ७।
§ का० श्रौ० सू० १४ ५ ९।
‖ वा० सं० ९. २१ ८।
¶ का० श्रौ० सू० १४ ५ १०।
** वा० सं० ९. २१. ९।

विधत्ते—"अथ दिश इति*। यूपे तिष्ठन्नेव यजमानः सर्वा दिशोऽनुक्रमेण पश्यन् "अस्मै"-इति† मन्त्रं जपेत्। तन्मन्त्रस्यायमर्थः,— हे दिशः। 'वः' युष्मत्सम्बन्धि 'इन्द्रियं' वीर्यम् 'अस्मै' यजमानाय 'अस्तु'। तथा 'हृदयं' युष्मत्सम्बन्धि मनः 'अस्मै' यजमानाय 'अस्तु'। 'उत' अपि च 'क्रतुः' सङ्कल्पः, तद्रूपेको यज्ञोऽपि 'अस्मै' अस्तु। 'वः वर्चांसि' युष्मत्सम्बन्धीनि तेजांसि 'अस्मै' यजमानाय 'सन्तु' इति। इन्द्रियादीनामाशासनं युक्तमित्याह—"सर्वं वा इत्यादि। प्रजापतेः सर्वात्मकत्वाद् वाजपेयेन च प्रजापतिप्राप्तित्वाद् 'एतत् सर्वस्य' जगतो यजमानादिकं 'सम्भृत्य' विभज्याधाय स्वात्मनि धारयति, अनन्तरं स्वात्मनि कुरुते, आत्मसात् कृतवान् भवतीत्यर्थः ॥ १२ ॥

अथ कात्यायनः— "अपदयाम्रत्यपरोपगानूषपुटानुदस्य यज्ञ॰ दिश प्रतिस्कन्धायैनाभिमिति‡ यदसूत्रयत्, तत् अर्थम् विधत्ते— "अथैनं मिति। 'ऊषपुटैः' ऊषपात्रैः§ अथवा, मानस्त्यपदे पुटोऽस्य तैः पुटैः यूपेऽवस्थितं यजमानमभिलक्ष्य 'उदस्यन्ति' ऊर्ध्वान् प्रतिदिशं प्रक्षिपेयुरित्यर्थः। अतएव आपस्तम्बः—"तं माष्टयैराषपुटैरूषपुटैर्वाध्वर्यवो विश प्रतिदिशं मर्पयन्ति"-इति ||। "पशवो वा ऊषा"-इत्यादिकस्यायमर्थः, —ऊषाणां यज्ञदाता पशुसाधनत्वात् साध्यत्वम्। पशूनाञ्च

---

* का० श्रौ० सू० १४ ५ ११।

† का० स० ६. ३२ १

‡ का० श्रौ० सू० १४ ५ १२ १३।

§ ऊषपात्रैरपांशुव —इति क।

|| आप० श्रौ० सू० १८ ५ १६।

यन्त्रत्वं क्षीरादिस्रावकत्वेन प्रसिद्धम् । अत ऊषपुटद्वारा रूपाणां सम्यक्त्वा-दूषपुटहननेन यजमानेऽत्र भेव निहितवान् भवतीति ॥ १६ ॥

विधत्ते— "आश्वत्थेष्विति । अश्वत्थपलाशैरुपनद्धान् सन्नद्धान् कुर्यात् । आश्वत्थैरेव करणे कारणमाह— "स यदेवेति । 'अदः' अमुष्मिन् विप्रकृष्टे काले, 'अश्वत्थे' अवस्थितान् 'मरुतः' 'इन्द्रः' आह्वयत् । एवं सति मरुतो देवविशां मरुतां आश्रयभूतः । अतस्तदीयेषु पर्णेषु अन्नसंस्कृतानां रूपाणामुपनिबन्धनं प्रशस्त-मित्यर्थः । ऊषपुटेषु वैशेषकार्यम् विधत्ते— "विश इति । 'विशः' वैश्या अपेयेयुः । मरुतां विट्त्वं मिन्द्रस्य प्रजात्वात्; अतो मनुष्यविशा अपि तज्जातीयत्वेन तदात्मकत्वम् । तेषां वैश्यानां अन्नत्वं कृषीवलत्वात् । ऊषपुटानां सङ्ख्यां विधत्ते— "सप्तदशेति ॥ १७ ॥

तत्रैव यजमानस्य भूम्यवेक्षणं समन्त्रकं विधत्ते— "अथैना-मिति *। 'माता' सर्वस्य निर्मातृत्वात् मातृभूतायै 'पृथिव्यै' 'नमः' 'इति' † । आदरार्थो मन्त्रवाक्याभ्यासः । मन्त्रगत मातृशब्दस्य जननीवाचकत्वं विवक्षित मिति वदन् भूम्यवेक्षणं बृहस्पतिदृष्टान्तमुखेन प्रशंसति— "बृहस्पतेरिति । पूर्वं वाज-पेययागे बृहस्पतेरभिषिक्तात् भूमिर्बिभेति स्म । भयकारणमाह — "योऽयमपिषीति । यत् 'अयम्' अभिषिक्तः पुरुषो 'महद्-भूत्' इत्यन्वयः । 'यत्' यस्मात् अभिषेकेण महत्त्वगुणवान्, 'अथ' बृहस्पतिः 'मा' मां भूमिम् 'न अवदारयेत्' नाव-दारयेत् 'इति', अतो हेतोः 'मित्रधेयं अकुरुत'-इति उत्तर-

---

* नमो मात्र इति भूमि मवेक्षते'—इति का० श्रौ० सू० १४ ५, १४ ।
† वा० सं० ९ २२ २ ।

वाक्यशेषसम्बन्धः। तथा 'बृहस्पतिः' अपि भूम्याः सकाशाद् बिभेति स्म ; 'यद्' यस्मात् 'इयं' भूमिः 'मा' माम् अभिषिक्तं 'नावधून्वीत' न विचालयेत् 'इति'। 'तत्' तस्मात् कारणात् 'अनया' पृथिव्या सह 'एव' 'एतत्' निरीक्षणरूपं 'मित्रधेयं' मैत्रीम् 'अकुरुत' भूमिरपि तस्य मकरोदित्यर्थः। उपक्रमोपसंहाराभ्या मवगम्यते,— उपक्रमे तावदुभयोरपि भीतिरुक्ता, भयदारवपरिहाराय मित्रधेयकरण मिति चोक्तम् ; उपसंहारेऽपि 'न पुत्रो मातरम्' इति मातुः पुत्रकर्तृकोपद्रवस्य निषेधात् ॥ १८ ॥

इदानीं मनुष्ठानेऽपि भूम्यवेक्षणं मित्रत्वप्रयोजन मित्याह— "बृहस्पतिसवो वा इति। "वाजपेय मिति। यदेव. 'बृहस्पतिसवः' बृहस्पतेरभिषेको यस्मिन्निति स तथोक्तः। शिष्टं पूर्वपर्यायवत् व्याख्येयम् ॥ १९ ॥

विधत्ते— "अथ हिरण्य मिति। 'हिरण्यम्' 'अभि' लक्ष्य यूपादवरोहेत् ; यत. 'हिरण्य' मरणरहितायुरात्मकम्, तस्मादवरोहणेन तथाविधे 'आयुषि' एव प्रतिष्ठितो भवतीत्यर्थः ॥ २० ॥

हिरण्यनिधानार्थं वस्ताजिनास्तरणं विधत्ते— "अथाजीति। तस्यास्याध्वर्युर्यजमानस्य 'उपरिष्टात्' 'रुक्म' मिदध्यात्। हिरण्ये अवरोहणं वैकल्पिक मित्याह— "इमां वैवेति। रुक्मे वाऽवरोहेदिति। अत एव कात्यायनः— "स रुक्मे वस्तचर्मण्यवरोहति, भूमौ वा"–इति * ॥ २१ ॥

---

* का० श्रौ० सू० १४ ५ १५, १६। 'रुक्मः परिमण्डलः सौवर्णाभरणविशेषः, वस्तो छागः तस्य चर्म'–इति तत्र वृत्तिः। "हिरण्य मध्यवरोहति"–इत्यादि च तै० ब्रा० १ ३ ७. ७। .

विधत्ते— "अथाख्या इति। 'अथो' यूपादवरोहणाय। आसन्दी लक्षणं सूत्रं कात्यायनेन— "औदुम्बरी मासन्दीं नाभिदघ्ना मरत्निमात्राङ्गी मूला माहरन्ति"-इति *। 'उपरिसद्यम्'- इत्यस्यायमर्थः,— वाजपेयेन यागेन 'उपरिसद्यम्' उपरिसदनं 'जयति' भद्रपीठादेरुपर्यवस्थानं प्राप्नोति। एतदुपपादनायाह— "यो जयतीति। 'यः' यूपारोहणेन 'अन्तरिक्षसद्यम्' आकाशे उपवेशनं 'जयति', 'सः' इति पूर्वेण सम्बन्धः ॥ २२ ॥

'औदुम्बरीति। उदुम्बरनिर्मिता आसन्दी †। 'अन्नं वा ऊर्गिति। यदेतद् 'ऊर्ग्' बलकरम् 'अन्नम्', तदात्मकः 'उदुम्बर' वृक्षः, तज्जन्यत्वात्। श्रूयते हि— 'देवा वा ऊर्जं व्यभजन्त, तत उदुम्बर उदतिष्ठत्'-इति। "तामग्रेणेति। अस्यार्थः,— 'हविर्धाने'-इति द्वितीयाद्विवचनान्तं पदम्, ते 'अग्रेण' तयोरग्रप्रदेशम् आहवनीय अधर्मेन' सोमाहुत्यधिकरणाग्नेः पश्चिमप्रदेशे 'ताम्' आसन्दीं निदध्यात्। अत्र सूत्रम्— "उत्तरवेदि मपरेणोदुम्बरी मासन्दीं वस्त्रावर्णया स्तृणातीय ते"-इति ‡। २३ ॥

आसन्द्या अजाजिनेनाच्छादनं विधत्ते— "अथाजर्षभस्याजिन मिति। अजप्रजापत्योर्बहुप्रजोत्पादकत्वादैकरूप्यं समर्थयते— "एता वा इत्यादि। 'एताः' प्रजा 'प्रजापतेः' 'प्रत्यक्ष

---

समाम्' अतिशयेन प्रत्यक्ष रूपम्, यस्मादेवं 'तस्मात्' संवत्सर मध्ये 'त्रि' त्रिवारं 'द्वौ त्रीन्' वा पुत्रान् 'विजायमानाः' सुवाना भवन्ति * ॥ २४ ॥

आसन्द्याम् यजमानं मन्त्र † विधत्ते— "स आसन्द्यामासीति । हि अभिषिष्यमाणं वाजपेययाजिन् । 'ते' तव 'इयम्' आसन्दी 'राट्' राज्यसाधनम्, पीठादिकपरिच्छद मेव राज्य मित्यर्थं । तस्याभिप्राय माह— "राज्य मिति । तदेवैतदासनरूपेण यजमाने राज्यं निहितवान् भवति ॥

विधत्ते— "अथैन मिति ‡ । 'एन' यजमानम् अस्या आसन्द्याम् उपवेशयेत् । तन्मन्त्रस्याय मर्थः ;— हे यजमान ! 'यन्ता' सर्वस्य नियन्ता 'असि', 'यमनः' 'प्रजानां' नियमिता असि, 'ध्रुव' स्थिरः 'असि', 'धरुण' धारकः असि । 'कृष्यै' कर्षणाय 'त्वा' त्वाम्, उपवेशयामीति शेषः । एव मुत्तरत्रापि योज्यम् । 'क्षेमाय' लब्धवस्तुपरिपालनाय, 'रय्यै' धनाय, 'पोषाय' इति § ।

मन्त्रं व्याचष्टे— "यन्तार मिति । "ध्रुव मेवैन मिति । 'अस्मिन् लोके' 'ध्रुव' सन्तम् 'एव' 'एन' यजमानम् 'एतत्'

---

* आग्नेयं यूपं मरुतामिव प्राचीनमिव गृहात्मोजसीये, तस्मिन्नासन्नं हिरण्यं निधायास्तम्भीति हिरण्ये दक्षिणं पादं यजमानः प्रतिष्ठापयते, पृथिवि प्रजन्त सभीति मध्यम्, तस्मादासन्दीमारोहन्ति'—इति आप० श्रौ० सू० १८ ॥ ११. ६ १—५ ।

† वा० सं० ६ ११ ६ ।

‡ का० श्रौ० सू० १४ ५ १८ ।

§ मन्त्रपाठस्तु वा० सं० ६, ११ ३ ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

यद्वा

द्वितीयेऽध्याये द्वितीयं ब्राह्मणम्।

॥ हरिः ॐ ॥

बार्हस्पत्येन चरुणा प्रचरति। तस्यानिष्ट एव स्विष्टकृद्भवत्यथास्मा अन्नं सम्भरत्यन्नं वा एष उज्जयति यो वाजपेयेन यजतेऽन्नपेयं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्मा एतत् सम्भरति * ॥ १ ॥

औदुम्बरे पात्रे †। अन्नं वा ऊर्गुदुम्बर ऊर्जो अन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे सोऽप एव प्रथमाः सम्भरत्यथ पयोऽथ यथोपस्मारमन्नानि ॥ २ ॥

* 'सम्भरति'—इति क।

† पात्रे'—इति ग 'पात्रे'—इति घ।

एतेन मध्यमाङ्गेन 'यज्ञ' धारकं 'करोति'। स्वाहादिपदानामर्थं सङ्कलय्याह— "साधवे त्वेति। श्रेयसे त्वा मुपवेशयामीति। एतेन स्वाहादिश्रेयांसि, अन्यान्यपि सङ्गृहीतानि भवन्तीत्यर्थः ॥ २१ ॥ १ [२. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

॥ इति पञ्चमकाण्डे प्रथमः प्रपाठकः * ॥

---

* इत उत्तरं सिद्ध 'कण्डिका' ११७—इति क, कण्डिका सङ्ख्या ११७—इति ख, ग, घ। तत्र १ ब्रा० १६ क०, २ ब्रा० १९ क०, ३ ब्रा० १४ क०, ४ ब्रा० १५ क० ५ ब्रा० २८ क०, ६ ब्रा० २१ क०। एतावती सङ्ख्यनयास्मिन् प्रपाठके षट्सु ब्राह्मणेषु ११७ कण्डिका सम्पन्ना इति शम् ॥

वाजस्येमाम्। प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट्*। अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं नियच्छतु स्वाहा ॥ ६ ॥

वाजस्य नु। प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः। सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं वर्द्धयमानो ऽअस्मे स्वाहा ॥ ७ ॥

सोमꣳ राजानम्। अवसे ऽग्निमन्वारभामहे। आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥ ८ ॥

अर्यमणं बृहस्पतिम्। इन्द्रं दानाय चोदय। वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनꣳ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा। वदेह नः प्रति नः सुमना भव। प्र नो यच्छ† सहस्रजित्त्वꣳ हि धनदा असि स्वाहा ॥ १० ॥

---

* सम्प्राट — इति ग सम्राट — इति घ।

† यच्छ — इति च का० वेवरहट।

तद्धेके। सप्तदशान्नानि सम्भरन्ति सप्तदशः प्रजापतिरिति * वदन्तस्तदु तथा न कुर्यात् प्रजापतेर्न्वेव सर्व्वं मन्न मनवरुद्धं क उ तस्मै मनुष्यो यः सर्व्वं मन्न मवरुन्धीत † तस्मादु सर्व्वमेवान्नं यथोपस्मारं सम्भरन्नेक मन्नं न सम्भरेत् ॥ ३ ॥

स यन्न सम्भरति। तस्योद्ब्रुवीत तस्य नाश्नीयाद्यावज्जीवं तथा नान्न मेति तथा ज्योग्जीवति स एतस्य सर्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्याभ्य एवैतद्देवताभ्यो जुहोति ता अस्मै प्रसुवन्ति ताभिः प्रसूत उज्जयति तस्माद्वाजप्रसवीयानि जुहोति ॥ ४ ॥

स जुहोति। वाजस्येमं प्रसवः सुषुवे ऽग्रे सोमं राजानमोषधीष्वप्सु ‡ ता अस्मभ्यं मधुमती र्भवन्तु वयं राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ ५ ॥

---

* 'प्रजापतिर्इति'—ग पुस्तके।

† 'मवरुन्धति'—इति क ख।

‡ ०प्सु'—इति ग '०प्सु—इति घ।

व्वाजस्येमाम् । प्रसवः शिश्रिये दिव मिमा च व्विश्वा भुवनानि सम्राट् * । अदित्सन्तं दापयति प्रजानन्त्स नो रयिᳬ सर्ववीरं नियच्छतु स्वाहा ॥ ६ ॥

व्वाजस्य नु । प्रसव आबभूवेमा च व्विश्वा भुवनानि सर्वतः । सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं व्वर्द्धयमानो ऽअस्मे स्वाहा ॥ ७ ॥

सोमᳬ राजानम् । अवसे ऽग्निं मन्वारभामहे । आदित्यान्विष्णुᳬ सूर्य्यं ब्रह्माणं च बृहस्पतिᳬ स्वाहा ॥ ८ ॥

अर्य्यमणं बृहस्पतिम् । इन्द्रं दानाय चोदय । व्वाचं व्विष्णुᳬ सरस्वतीᳬ सवितारं च व्वाजिनᳬ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा । वदेह नः प्रति नः सुमना भव । प्र नो यच्छ † सहस्रजित्त्वᳬ हि धनदा असि स्वाहा ॥ १० ॥

---

* सम्राट्'—इति ग सम्राट्'—इति घ ।

† यच्छ'—इति च ङा० वेबरस्य ।

तद्वैके। सम्पद्गणान्यानि सम्भरन्ति सम्पद्गः प्रजापतिरिति * वदन्तस्तद् तथा न कुर्यात् प्रजापतेर्व्वैव सर्व्वं मन्न भनवह्नं क उ तस्मै मनुष्यो य: सर्व्वं मन्न मवरुन्धीत + तस्माद् सर्व्वमेवान्नं यथोपस्मारं सम्भरन्नेक मन्नं न सम्भरेत् ॥ ३ ॥

स यन्न सम्भरति। तयोद्ब्रुवीत तत्र माम्नीयाद्यावत्तीवं तथा नान्न मेति तथा ज्योग्जीवति स एतस्य सर्व्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्याभ्य एवैतद्देवताभ्यो जुहोति ता अस्मै प्रसुवन्ति ताभि प्रसूत उज्जयति तस्माद्वाजप्रसवीयानि जुहोति॥ ४ ॥

स जुहोति। व्याजस्येमं प्रसवः सुषुवे ऽग्रे सोमं राजान मोषधीष्वप्सु ‡ ता अस्मभ्यं मधुमती भवन्तु व्ययं राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ ५ ॥

---

* 'प्रजापतिरिति —ग पुस्तके।

† मवरुन्धति —इति क ख

‡ ०प्सु —इति ग ०प्सु —इति घ।

व्वाजस्येमाम्। प्रसवः शिश्रिये दिव मिमा च व्विश्वा भुवनानि सम्म्राट् *। अदित्सन्त दापयति प्रजानन्त्स नो रयिᳪ सर्व्ववीरं नियच्छतु स्वाहा ॥ ६ ॥

व्वाजस्य नु। प्रसव आबभूवेमा च व्विश्वा भुवनानि सर्व्वतः। सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं व्वर्द्धयमानो ऽअस्मे स्वाहा ॥ ७ ॥

सोमᳪ राजानम्। अवसे ऽग्निᳪ सन्वारभामहे। आदित्यान्विष्णुᳪ सूर्यं ब्रह्माणं च बृहस्पतिᳪ स्वाहा ॥ ८ ॥

अर्य्यमणं बृहस्पतिम्। इन्द्रं दानाय चोदय। व्वाचं व्विष्णुᳪ सरस्वतीᳪ सवितारं च व्वाजिनᳪ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा। वदेह नः प्रति नः सुमना भव। प्र नो यच्छ † सहस्रजित्त्वᳪ हि धनदा असि स्वाहा ॥ १० ॥

---

* सम्प्राट — इति ग सम्प्राट — इति घ।

† यच्छ — इति च दा० वेबरदृष्ट।

प्र नः। यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः। प्र वाग्देवी ददातु नः स्वाहेति * ॥ ११ ॥

अथैनं परिशिष्टेनाभिषिञ्चति। अन्नाद्येनैवैन मेतदभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद् दधाति तस्मादेनं परिशिष्टेनाभिषिञ्चति † ॥ १२ ॥

सो ऽभिषिञ्चति। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मिति देवहस्तैरेवैन मेतदभिषिञ्चति सरस्वत्यै वाचो यन्तुर्यन्त्रिये ‡ दधामीति वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रिये दधाति ॥ १३ ॥

तदु हैक ऽआहुः। विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामीति सर्व्वे वै विश्वे देवास्तदेनए सर्वेषामेव यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रिये दधामीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं वाच एव यन्तुर्यन्त्रिये दधाति बृहस्पतेष्ट्वा साम्राज्येनाभि-

---

* स्वाहेति—इति क। स्वाहेति ख ङ।

† ०सिञ्चति—इति ग घ।

‡ यन्तुयन्त्रो—इति भा सम्मत इति डा० वेवर।

विश्वाभ्यसाविति नाम गृह्णाति तद् बृहस्पते-र्वैवैन मेतत्सायुज्यए सलोकतां गमयति ॥ १४ ॥

अथाह । सम्राडय मसौ सम्राडय मसाविति निवेदित मेवैन मेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो ऽभ्यषेचीत्ययं युष्माकैको ऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि यज्ञः * ॥ १५ ॥

अथोविजती । जुहोति वा व्याचयति वा यदि जुहोति यदि व्याचयति समान एव बन्धुः ॥ १६ ॥

स व्याचयति । अग्निरेकाक्षरेण प्राण मुद-जयत्त मुज्जेयं प्रजापतिः सप्तदशाक्षरेण सप्त-दशए स्तोम मुदजयत्त मुज्जेष मिति तद्यद्देवै-ताभिरेता देवता उदजयंस्तद्देवैष एताभिरुज्ज-यति सप्तदश भवन्ति सप्तदशो वै प्रजापति-स्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति । तद्य-

---

* यज्ञ — इति ग, 'यज्ञ — इति घ ।

† 'मुज्जयति — इति क ।

प्र नः । यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहेति * ॥ ११ ॥

अथैनं परिशिष्टेनाभिषिञ्चति । अन्नाद्येनै-वैन मेतदभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद् दधाति तस्मादेनं परिशिष्टेनाभिषिञ्चति † ॥ १२ ॥

सो ऽभिषिञ्चति । देवस्य त्वा सवितुः प्र-सवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मिति देवहस्तैरेवैन मेतदभिषिञ्चति सरस्वत्यै त्वाचो यन्तुर्यन्त्रिये ‡ दधामीति व्वाग्वै सरस्वती तदेन व्वाच एव यन्तुर्यन्त्रिये दधाति ॥ १३ ॥

तदु हैक ऽआहुः । व्विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामीति सर्व्वं वै व्विश्वे देवा-स्तदेनᳫं सर्वस्यैव यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा व्वाचो यन्तुर्यन्त्रिये दधा-मीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं व्वाच एव यन्तुर्यन्त्रिये दधाति बृहस्पतेष्ट्वा साम्राज्येनाभि-

* स्वाहेति—इति क। 'स्वाहेति ख, म।

† ॰सिञ्चति'—इति ग, घ।

‡ यजुष्कृत्यै'—इति मा-मध्यात इति डा॰ वेबर॰।

धिष्ण्याभ्यसाविति नाम गृह्णाति तद् बृहस्पते-र्वैवैन मेतत्सायुज्यए सलोकतां गमयति ॥ १४ ॥

अथाह। सम्राडय मसौ सम्राडय मसाविति निवेदित मेवैन मेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो ऽभिषेच्यय युष्माकैको ऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि यज्ञः * ॥ १५ ॥

अथोज्जितीः। जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान एव बन्धुः ॥ १६ ॥

स वाचयति। अग्निरेकाक्षरेण प्राण मुद-जयत्त मुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्त-दशए स्तोम मुदजयत्त मुज्जेष मिति तद्यदेवै-ताभिरेता देवता उदजयंस्तदेवैष एताभिरुज्ज-यति सप्तदश भवन्ति सप्तदशो वै प्रजापति-स्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति। तद्य-

* 'यज्ञः'—इति ग, 'यज्ञः'—इति घ।

† 'वाचयति'—इति क।

दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत एवैतत् प्रजापति मुज्जयति तस्मादन्तरेणाहुती ऽएतत् कर्म क्रियत * ऽथाश्राव्याहाग्निए स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ १८ ॥

अथेडा मादधाति। उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्र मुपाकरोति तए स्तोत्राय प्रमीवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ १९ ॥

तद्धैके। एतत् कृत्वाथैतत् कुर्वन्ति तदु तथा न कुर्यादात्मा वै स्तोत्रं प्रजा शस्त्र मेतस्माद्ध स यजमानं प्रच्यावयति। स जिह्म एति स ह्वलति तस्मादेतदेव कृत्वाथैतत् कुर्यात् ॥ २० ॥

अथेडा मादधाति। उपहूतायामिडायामप

* क्रियत —इति ख।

उपसृप्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तत् स्तोत्राय प्रसौवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २१ ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२.१.] ॥

अथ नैवारचरुप्रचारं विधत्ते—"बार्हस्पत्येनेति *। अथाग्नि-नैवाराहुतेरनन्तरं कर्त्तव्यं वाजप्रसवीयहोमं विधातुं कालं विधत्ते— "तस्मिन्निष्ट एवेति। 'तस्य' नैवारस्य 'स्विष्ट-कृत्' 'अनिष्टः' अनिष्टकृत् 'भवति', अथानयायागात्पूर्वं स्विष्ट-कृतः प्रागित्यर्थः। होमार्थं अन्नसम्भरणं विधत्ते— "अथास्मा इति। 'अस्मै' यजमानाय तु अभिषेकार्थम् 'अन्न' सम्भरेत् ॥ १ ॥

अन्नसम्भरणार्थं पात्रविशेषं विधत्ते— "औदुम्बर मिति †। तत्र प्रथम मपां सम्भरणं विधत्ते— "सोऽप एवेति। प्रथमम् 'अप' अन्नानि सम्भरेत्। 'अप पय.' क्षीरं तदनन्तरम्। 'यथोपस्मारम्' उपस्मृति मनतिक्रम्य 'अन्नानि' सम्भरेत्, यानि तदा स्मृतिपथ मवतरन्ति तानीत्यर्थः ‡। तत्र ग्राम्यारण्य-भेदेन चतुर्दशान्नान्यापस्तम्बेन सूचितानि, तान्यपि यथो-पस्मारपदेन ग्राह्याणि— "तिलमाषा व्रीहियवाः प्रियङ्ग्वणवो

* 'नैवारेण प्रचरति'—इति का० श्रौ० सू० १४ ५ १६ ।

† का० श्रौ० सू० १४ ५ २० ।

‡ का० श्रौ० सू० १४ ५ २१ क। 'सप्त ग्राम्या ओषधयः, सप्तारण्या'—इति च तै० ब्रा० १ ३ ८ १ द्रष्टव्यम् ।

विधत्ते— "स एतस्येति। मिलितस्य 'एतस्य' 'सर्वस्य' अन्नस्य * एकदेशं 'स्रुवेण' 'उपघातम्' उपहत्योपहत्य गृहीत्वा 'वाजप्रसवीयानि जुहोति' वाजप्रसवशब्दयुक्तमन्त्रकरणकहोमान् कुर्यादित्यर्थः †। "तद्यास्य इति। मान्त्रवर्णिकाभ्यो 'याभ्यः' अन्नादिदेवताभ्यो हूयते तदेव। 'ताः' 'सर्वाः' यजमानाय एत-द्यागफलभूतं अन्नं अवरोद्धुं 'प्रसुवन्ति' अनुजानन्ति, ताभि-रनुज्ञातः अन्नम् स्वाधीनं करोतीत्यर्थः ॥ ४ ॥

होमं मन्त्रान् विधत्ते— "स जुहोति वाजस्येम-मिति। सर्वत्र 'स्वाहा' शब्दो हवनलिङ्गम्। प्रथमस्याय-मर्थः ‡;— 'अग्रे' पूर्वं 'वाजस्य' अन्नस्य 'प्रसवः' उत्पादकः परमेश्वरः 'ओषधीषु' 'अप्सु' च सारभूतम् 'इमं' सोमवल्ली-रूपं 'राजानं' 'सुषुवे' उत्पादयामास, 'ताः' ओषधय आपश्च 'अस्मभ्यम्' अस्मदर्थं 'मधुमतीः' माधुर्योपेता भवन्तु। 'वयम्' अपि अस्मिन् 'राष्ट्रे' 'पुरोहिताः' यागानुष्ठानादौ पुरोगामिनो 'जागृयाम' जागरूका भूयास्मेति ॥ ५ ॥

अथ द्वितीयः §;— "वाजस्येमा मिति। 'वाजस्य प्रसवः' ईश्वरः 'इमां' भूमिं 'दिवम्' इमानि अन्यानि सर्वाणि 'भुवनानि' 'सिषिवे' आश्रितवान्। स च 'सम्राट्' सर्वेषां भुवनानां भूत्वा 'अदित्सन्तं' दातुमनिच्छन्तं भोज्यं 'प्रजानन्' 'दापयति' 'रयिं' धनं नियच्छतु' ददातु ॥ ६ ॥

---

* 'अन्नाद्यस्य'—इति क।

† का० श्रौ० सू० १४ । ५ । २३ ।

‡ वा० सं० ९. २३ १।

§ वा० सं० ९. २४ १।

अथ तृतीयं *,— "वाजस्य न्विति। 'वाजस्य प्रसव' 'नु' खलु 'इमा' इमानि 'विश्वा' सर्वाणि 'भुवनानि' सर्वत 'आ बभूव' व्याप्नोत्। 'सनेमि'-इति पुराणवचनम् †। 'स' चिरन्तनो 'राजा' 'परियाति' सर्वत सञ्चरति। 'विद्वान्' अनुद्धीयमानं कामं प्रजानन्। 'अस्मे' अस्मदर्थे 'प्रजां' 'पुष्टिं' च 'वर्द्धयमान' परियातीति सम्बन्ध ॥ ७॥

अथ चतुर्थं ‡,— "सोम मिति। वयं सोमादीन् देवान् 'अवसे' रक्षणाय, तर्पणाय वा 'अन्वारभामहे', ते सर्वे अनु रक्षन्त्विति वाक्यशेष ॥ ८॥

अथ पञ्चमं §,— "अर्यमण मिति। हे वाजस्य प्रसव! त्वं अर्यमादीन् 'दानाय चोदय' अस्मभ्य धनदानाय प्रेरय। वाक्‌सरस्वत्योरीषद्भेदो द्रष्टव्य ॥ ९॥

अथ षष्ठं ‖,— "अग्ने अच्छेति। हे 'अग्ने!' 'इह' अस्मिन् कर्मणि 'न' अस्माकम् 'अच्छ' अभिमुख्येन 'वद' वित्त वाचय। 'न' अस्मान् प्रति 'सुमना' कारुण्यार्द्रचित्तो भव। हे 'सह स्रजित्!' सहस्रस्य धनस्य जेत। 'हि' यतो। यत 'त्व' स्वभावतो 'धनदा असि', अत 'न' अस्मभ्य प्रयच्छ, धन मिति शेष ॥ १०॥

अथ सप्तमं ¶,— "प्र न इति। अर्यमादयो 'न' अस्मभ्य धन प्रयच्छन्तु। पूषादिदेवतान्तरवाचकपदेऽपि क्रियापदस्यानु

---

* वा० सं० ९. २५ १।

† निघ० २ २८ ४। ‡ वा० सं० ९ २६ १।

§ वा० सं० ९ २७ १। ‖ वा० सं० ९ २८ १।

¶ वा० सं० ९ २९ १।

षड्' श्रीतयितु पृथक् पृथक् प्रोपसर्गप्रयोगे , 'प्र' 'ददातु' प्रकर्षेण यच्छत्विति ॥ ११ ॥

हुतशेषस्यान्नस्य विनियोगं दर्शयति— "अधीन मिति। 'एनं' सुब्रह्म यजमानं 'परिशिष्टेन' अन्नेन अभिषिञ्चेत् हुतशेषाभिषेकेण यजमानो अन्न मेव विहितवान् भवति * ॥ १२ ॥

अभिषेके मन्त्रं विधत्ते— "स इति। "देवस्य त्वेति †, व्याख्यातः। 'सरस्वत्यै' पञ्चमी चतुर्थी। सरस्वत्या 'वाच', 'यन्तु' अन्तर्यामिणः 'यन्तेः' ‡ नियमे साम्राज्यायां 'नि दधामि' इति ॥ १३ ॥

अत्र तु 'सरस्वत्यै वाच'-इत्यस्य § स्थाने 'सरस्वत्यै त्वा वाच' इति शुक्लयजुः प्रक्षिप्य प्रयोक्तव्य मिति विधातुं पूर्वं पक्ष मौपपत्तिकं सूत्रयति— "तद् हैक इति। केचिच्छाखिन 'आहुः'। किमिति। 'सरस्वत्यै वाच'-इत्यस्य स्थाने 'विश्वेषां त्वा देवानाम्'-इति प्रक्षिप्य 'यन्तु'-इत्यादि पूर्ववद् वक्तव्य मिति स्वमतं दर्शयितुं मुख्यम्। परमतं निराकरोति— 'तद् तथेति। अत एव कात्यायनः— "सरस्वत्यै वाच स्थाने विश्वेषां त्वा देवानां, सरस्वत्यै त्वेति वा"-इति ‖। इष एतं'-इत्यादि पूर्वोक्तं मन्त्रशेषं। मन्त्रान्ते अमावित्यस्य स्थाने यजमानस्य नाम सम्बुद्ध्यन्तं गृह्णीयात् ॥ १४ ॥

* का॰ श्रौ॰ सू॰ १४ । ५ । २४ ।
† वा॰ सं॰ ९ । ३० । १ ।
‡ यन्तिये—इति मद्गृहीत पुस्तकपाठः ।
§ वा॰ सं॰ ९ । ३० । १ ।
‖ का॰ श्रौ॰ सू॰ १४ । ५ । २१ । २६

आवेदनं विधत्ते— "अथाह सम्राडिति। अत्रापि अभि-षिक्तस्य स्थाने प्रथमान्तं यजमाननाम ग्रहीतव्यम्। एतन्नामाय अभिषिक्तः सम्राट् महावीर्यो जात इति वदेत्। आवेदनवाक्याहृतेरभिप्राय माह— "निवेदित मिति। एवं नामग्रहीत्वा प्रथमं मनुष्येभ्यो 'निवेदित मेव सन्तम्' 'एनम्' तदेतेन द्वितीयेन सम्राडय महावीर्येनेन 'देवेभ्यः' 'निवेदयति' ज्ञापयति। किमिति। 'य.' यजमान' 'अभ्यषेचि' 'अयं महावीर्यः' सम्राट् इति। वाक्यस्य पर्यवसित मर्थ माह— "अयं युष्माकेति। 'अयम्' अभिषिक्तो यजमानः युष्माकं मध्ये 'एक.' 'अभूत्', देवानां मानवानित्यर्थः, हे देवा"। तं गोपायतेति॥ अत्र सूत्रम्— "सम्राडय महावित्याह नामग्राह मित्यर्थे"-इति *। तदेतत् त्रिस्त्व विधत्ते— "त्रिष्कृत्व इति। यज्ञस्य त्रिवृत्वं सवनत्रयात्मकत्वात्॥ १५॥

विधत्ते— "अथोक्थिनीरिति। उक्थ्यलिङ्गयुक्तमन्त्रकरणिका † आहुतय उक्थिनयः, ता जुहुयात्, यजमानस्य तन्मन्त्रेण ग्रावर्ण वा कार्य मित्यर्थः ‡। 'वधुः' इत्यवाचनसाधकार्थवादवाक्यशेषः, आश्रावयमाणः समान इत्यर्थः॥ १६॥

वाचन मनूद्य मन्त्रान् विधत्ते— "स वाचयतीति। संहितायाम् "अग्निरेकाक्षरेण"-इत्यनुवाके सप्तदश मन्त्राः पठिता' §, अत्र अग्निरेकाक्षरेणेति प्रजापतिः सप्तदशाक्षरे-

* का० श्रौ० सू० १४ ५ २७।

† 'उक्थ्यलिङ्गयुक्ता मन्त्रकरणिका'—इति ग, ङ।

‡ का० श्रौ० सू० १४ ५ २८।

§ वा० सं० ९. ३१—३४ कण्डिका द्रष्टव्याः।

चेत्याद्यन्तयोर्ग्रहणेन ( सप्तदश मन्त्राः * ) सर्वेऽपि गृह्यन्त इत्यभिप्रायः। तेषां सङ्ख्येयाय मर्थं ;— "ओ श्रावयेति चतुरक्षर मस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिः —इति †, सप्तदशाक्षराणि विद्यन्ते। तत्राग्न्यादिसप्तदशदेवाः एकाक्षरप्रभृत्येकैकाक्षरवृद्धियुक्तैः प्राणमनुष्यादीन् जितवन्तः। तानग्न्यादिभिर्जितान् नरप्राणादीनह मिदानीम् 'उज्जेषम्' उज्जीयासम्। अग्निदेवतादिभिर्मन्त्राक्षरसङ्ख्यानुसारेण द्विपान्मनुष्य-त्रिलोकादेर्जयो विज्ञेयः। त्रिवृत्स्तोमवतामत्र ऋचा मवसङ्ख्योपेतत्वात् ‡ नवाक्षरेण तज्जयो द्रष्टव्यः। त्रयोदशस्तोमादावपि तिसृणां स्तोत्रियाणां ऋचा मावृत्तिविशेषेण तत्सङ्ख्या द्रष्टव्या §। इम मेव तात्पर्यं प्रतिपादयति— "तद्देवताभिरिति। 'यताभिः' जितितिभिः। तेषां मन्त्राणां सप्तदशसङ्ख्या सम्भूय प्रजापत्यात्मना स्तौति—"सप्तदशेति ॥ १७ ॥

नैवारचरुविधिः प्रधानस्विष्टकृतोर्मध्येऽनुष्ठेयं कर्मजात मुपदर्श चोदकप्राप्तं स्विष्टकृद्यागादिक मनुसन्धत्ते— "पयाइत्यादि। "अग्नये स्विष्टकृतेऽनुब्रूहि"—'इति' अध्वर्युर्वदेत्। 'अनुब्रूहि' अनुवाक्यां पठेत्यर्थः। अत्र सम्बोध्यो होता ||।

---

* क पुस्तकमात्रे सप्तोऽधिक. पाठः।

† तै० सं० १. ६. ११. २ पुरस्तादिह च १. ५. २. १६. १७।

‡ ता० ब्रा० २. १. १—३ तात्र ८ अथ, सा० वे० सर्वेषु सं० उत्त० आ० १. १. १—३ सूक्तेष्वाम्नाता। द्रष्टव्यम्।

§ ता० ब्रा० त्रिवृत्स्तोमविधायकवचनेभ्योऽनन्तरम्।

|| 'अनुब्रूहि' अनुवाक्यां पठेति सम्बोध्यो होता'—इति क।

न्वदन्तरेत्यस्याय अर्थः— नैवारहवि'-स्विष्टकृद्यागाद्युत्थोर्मध्ये क्रियमाणेन अवसम्भरण-वाजप्रसवीय होमादिना यज्ञरूपं प्रजापतिं जितवान् भवतीति ॥

अनुवचनानन्तरं आश्रावणादिकं प्रकृतिवत् स्विष्टकृतः कार्यमित्यनुक्रामति— "आश्राव्येति। 'वषट्कृते' होत्रा याज्यान्ते वषट्कारे प्रयुक्ते सति 'जुहोति' सौविष्टकृतं हविः ॥ १८ ॥

अथ स्विष्टकृदनन्तरभावीनि कर्माण्याह— "अथैषा मिति। माहेन्द्रग्रहणानन्तरं * तदीयं एव 'स्तोत्रम्' 'उपाकरोति' आरम्भयेदित्यर्थः। 'तम्' आसन्द्या मधिष्ठित मभिषिक्तं यजमानं 'स्तोत्राय' 'प्रणीयति' प्रापयेत्, आह्वयेदित्यर्थः। अत्र सूत्रम्— "अवरुह्य गच्छति स्तोत्राय प्रहितः"—इति †। 'सः' स्वयम् 'उपावरोहति' आसन्द्याः सकाशात् 'सः' एवं स्तोत्रशस्त्रयो. 'अन्ते' समीपे स्थितो भवेत् ॥ १९ ॥

अथ केचिदुक्तिविधानानन्तरं माहेन्द्रग्रहणं स्तोत्रशस्त्रे च कृत्वा स्विष्टकृदादिकं यजमानस्य पयादवरोहण मिच्छन्ति, तद् दूषयितु मनुवदति— "तद्वैक इति। 'एतत्' माहेन्द्रग्रहणादि होमान्तं तत् सर्वं कृत्वा 'अथ' अनन्तरम् 'एतत्' उक्त स्विष्टकृदिडाभक्षणान्तं कर्म कुर्वन्ति। अतएव सूत्रकृता शाखान्तरीयं पक्ष मङ्गीकृत्योक्तम्— "उक्थितिभ्यो थोहरो माहेन्द्रः"—इति ‡ ॥

तद् दूषयति— "तदु तथेति। यथासन्द्या मासीन एव

---

* 'माहेन्द्रग्रहणानन्तरं'—इति ग।

† का० श्रौ० सू० १३ ४ ३०।

‡ का० श्रौ० सू० १३ ४ ३१।

यजमाने सत्येव आत्मप्रजारूपे स्तोत्रशस्त्रे कुर्यात्, नहि 'यजमानम्' आत्मप्रजाहीनं कुर्यात्; यथाविध्यकरणेनेत्यर्थः। 'जिह्मः' कुटिलो गच्छति। 'ह्वलति' यथाप्रयात् भ्रंशति ॥ २० ॥

अत उक्तं एव पथः श्रेयानिति दर्शयितुं पुनः पठति—"यदेवेडा मित्यादि। पूर्ववत् * ॥ २१ ॥ १ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् । )

पूर्णाहुतिं जुहोति। सर्व्वं वै पूर्णꣳ सर्व्वं परिगृह्य सूयाऽइति तस्या व्वरं ददाति सर्व्वं वै व्वरः सर्व्वं परिगृह्य सूयाऽइति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत † ॥ १ ॥

अथ श्वो भूते ‡। अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्व्वपति स ये जघनेन शम्यां पिष्ट

---

* इह का॰ श्रौ॰ सू॰ १४ । ४ । २२—२६ पर्य्यन्त सूत्राणि द्रष्टव्यानि।

† 'नाद्रियेत'—इति क।

‡ 'भूते'—इति ग, घ।

माणाना मवशीयन्ते पिष्टानि वा तण्डुला * वा तान्त्स्रुचि सार्द्धं समवपत्यन्वाहार्यपचनादुल्मुक मादत्ते तेन दक्षिणा यन्ति स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्रदरं वा ॥ २ ॥

तदग्निं समाधाय जुहोति। एष ते निर्ऋते भागस्तं जुषस्व स्वाहेतीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्यदेवास्या अत्र नैर्ऋतं रूपं तदेवैतच्छमयति तथो हैनं सूयमानं निर्ऋतिर्न गृह्णात्यथ यत् स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वैतद्ध्यस्यै निर्ऋतिगृहीतम् ॥ ३ ॥

अथाप्रतीत्तं पुनरायन्ति। अथानुमत्या ऽष्टाकपालेन पुरोडाशेन प्रचरतीयं वा अनुमतिः स यस्तत् कर्म शक्नोति कर्तुं यच्चिकीर्षतीयं हास्मै तदनु मन्यते तदिमामेवैतत् प्रीणात्यनयानुमत्यानुमतः सूया ऽइति † ॥ ४ ॥

अथ यदष्टाकपालो भवति। अष्टाक्षरा वै

* 'तण्डुलानि'—इति ख।

† 'इति'—इति क पुस्तके, 'इति'—इति ख॰पुस्तके।

गायत्रो गायत्री वा ऽइयं पृथिव्यथ यत्समानस्य हविष उभयत्र जुहोत्येषा ह्येवैतदुभयं तस्य ख्यासो दक्षिणा यद्वै सवासा भरण्य नोदाभरु-सते निधाय वै तद्वासो ऽतिसृज्यते तथो हैनरु सूयमान मासङ्गो न च्छिन्दति * ॥ ५ ॥

अथ श्वो भूते। आग्नावैष्णव मेकादश-कपालं पुरोडाशं निर्व्वपति तेन यथेष्टेवं यजते तद्यद्देवादः प्रजात माग्नावैष्णवं दीक्षणीयरु हवि-स्तदेवैतदग्निर्व्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुहत्यग्निर्व्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्व्वाश्चैवैतद्देवताः परिगृह्य सर्व्वं च यज्ञं परिगृह्य सूया ऽइति तस्मादाग्नावैष्णव एका-दशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै विष्णुः स यज्ञो ऽग्निरु वै यज्ञ एव तद् तदाग्नेय मेव तस्माद्धिरण्य दक्षिणा † ॥ ६ ॥

---

* 'च्छिन्दति'—इति क।  † 'दक्षिणा'—इति क  ग।

अथ श्वो भूते *। अग्नीषोमीयमेकादश-
कपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजत
ऽएतेन वा ऽइन्द्रो वृत्रमहन्नेतेनो ऽएव व्यज-
यत यास्येयं विजितिस्तां तथो ऽएवैष एतेन
पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो ऽएव
विजयते विजिते ऽभये ऽनाष्ट्रे स्या इति
तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो
भवति तयोरुत्सृष्टो गौर्दक्षिणोत्सृजं वा ऽअमुं
चन्द्रमसं घ्नन्ति पौर्णमासेनाह घ्नन्त्यामावास्ये-
नोत्सृजन्ति तस्मादुत्सृष्टो गौर्दक्षिणा † ॥ ७ ॥

अथ श्वो भूते। ऐन्द्राग्नं द्वादशकपालं
पुरोडाशं निर्वपति तेन यथेष्ट्यैव यजते यत्र
वा ऽइन्द्रो वृत्रमहंस्तदस्य भीतस्येन्द्रियं ‡ वीर्य-
मपचक्राम स एतेन हविषेन्द्रियं वीर्यं पुन-
रात्मन्नधत्त तथो ऽएवैष एतेन हविषेन्द्रियं वीर्य-
मात्मन्धत्ते तेजो वा ऽअग्निरिन्द्रियं वीर्यमिन्द्र
उभे वीर्ये परिगृह्य स्या ऽइति तस्मादैन्द्राग्नो

* 'भूत'—इति ग, घ। † 'दक्षिणा'—इति क, ख।
‡ भूतभीतस्येन्द्रियं—इति ख।

द्वादशकपालः पुरोडाशो भवति तस्यऽर्षभोऽनड्वान् दक्षिणा स हि वहेनाग्नेय आण्डाभ्यामैन्द्रस्तस्मादृषभोऽनड्वान् दक्षिणा * ॥ ८ ॥

अथाग्रयणेष्ट्या यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यदाग्रयणेष्टिरनया मे ऽपीष्टमसदनयापि सूया ऽइति तस्मादाग्रयणेष्ट्या यजत ऽओषधीर्वा ऽएष सूयमानो ऽभिसूयते तदोषधीरेवैतदनमीवा अकिल्विषाः कुरुते ऽनमीवा अकिल्विषा ओषधीरभि सूया ऽइति तस्य गौर्दक्षिणा † ॥ ९ ॥

अथ चातुर्मास्यैर्यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएष यज्ञक्रतुर्यच्चातुर्मास्यान्येभिर्मे ऽपीष्टमसदेभिरपि सूया ऽइति तस्माच्चातुर्मास्यैर्यजते ॥ १० ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२.३.] ॥

---

* दक्षिणा—इति क, ख । † °गौर्दक्षिणा इति क, ख ।

ब्राह्मणचतुष्टयोभयकर्तृकसंस्थारूपो * वाजपेय उक्तः, अथैक-कर्तृको विकृतिभूतो राजसूयो विधास्यते। तत्र च कृत-वाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारः, न तु तेनेष्टवतः, राज्य-फलादपि साम्राज्यफलस्यातिशयितत्वेन उत्तमफलसाधनयागानन्तर-मवरफलहेतुक्रतुकरणस्यायुक्तत्वात्। अत एव कात्यायनः— "राज्ञो राजसूयोऽनिष्टिनो वाजपेयेन"—इति †।

इष्टि पशु सोम-दर्विहोमैः शतप्रधानो ‡ राजसूयः। तत्र "अग्नीभूते-ऽनुमत्यै पुरोडाशमष्टाकपालम्"—इत्यादिना विहिता इष्टयः §, "अथ श्येनीं विषितस्तुकां अदित्यै आलभते"—इत्यादिना विहिताः पशवः ‖, पवित्राभिषेचनीय दशपेय केशवपनीय व्युष्टि द्विरात्र क्षत्रधृति सञ्ज्ञका षट् सोमयागाः, पञ्चवातीयादयो दर्वि-होमाः ¶। तत्र पवित्रनामके प्रथमसोमयागे प्रकृतिसमानत्वेन वक्तव्याभावात् तं परित्यज्य तदवसाने कर्त्तव्यं पूर्णाहुति-प्रभृति वैशेषिकं सूत्रजातं अभिधीयते **।

पूर्णाहुतेः कालं कात्यायनः सूचयामास— "पवित्रचतुर्दीक्ष ,

---

* '°कर्तृकमध्यारूपो वा (?)'—इति क।

† का० श्रौ० सू० १५ १ १ २।

‡ कर्मविकारांशप्रधानत्वविवक्षयात्., स्यात्तु 'राजप्रधानो'—इति।

§ पूर्वस्मादिहैव (२ ३ २—१३१ पृ०) द्रष्टव्यम्।

‖ अवसानादिहैवाध्याये (५ २ ८) द्रष्टव्यम्।

¶ इत उत्तरस्यां कण्ड्यां (१ ३ ४) द्रष्टव्यम्।

** "इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात्"—इति का० श्रौ० सू० १५ १ ३। तत्र "आग्नेय्यादय इष्टयः, पवित्रादयः सोमाः, ऐन्द्राद्यश्च पशवः"—इति कर्कः। 'अग्नेः शतिमा, सोमस्वग्रुतिकर्तः'—इति तै० ब्रा० १ ८ १३ (=तै० सं० १ ८ ३ मा० भा०।

सहस्रदक्षिणः, साद्यःक्रयणीये दीक्षा, तदन्ते पूर्णाहुति-र्द्वैधिष्कृतः”–इति * ॥

तद् विधत्ते—“पूर्णेति। आज्यपूर्णया स्रुचा हूयत इति पूर्णाहुतिः। सा समाम्नातमन्त्रत्वात् प्राजापत्या; “यत् पूर्णं तत् प्राजापत्यम्”–इति श्रुतेः †। तां जुहुयात्। पूर्णाहुतिकरणस्य कामनाधीनत्वं विधत्ते—“सर्वं मिति। पूर्णपदेन सर्वं गृह्यते। ‘सर्वं’ जगत् ‘परिगृह्य’ स्वाधीनं कृत्वा, यथाप्राजपत्यानुष्ठानेन ‘मूर्धे’ अभिषिक्तो भूयासम् ‘इति’ अभिप्रायेण पूर्णाहुतिं कुर्यादित्यर्थः॥

तस्या इतिकां विधत्ते—“तस्यामिति। ‘तस्यां’ हुतायामित्यर्थः। पूर्णाहुतेरितराश्चेद् अवश्यकर्तव्यत्वे प्राप्ते कामनानुसारेणैव कर्तव्यत्वमाह— “स यदि कामयेतेति। पूर्णाहुतिकरणेच्छायां सत्यां तदनुष्ठानविपर्यये तद्विपर्यय इत्यर्थः॥ १॥

प्रारम्भणीयस्थानीयात् ‡ पवित्राख्यादग्निष्टोमादङ्गः § परस्मिन्नहनि कर्तव्यं विधत्ते—“अथ श्वोभूत इति। सूत्रकृता पवित्रादनन्तर सूत्रम्— “श्वः प्रभूतमन्वं पञ्चोत्तराण्यष्टा-

---

* का॰ श्रौ॰ सू॰ १५. १. ४—७।

† ऐ॰ ब्रा॰ २. ४. ७, ३. ३. ६ व्याख्यानं द्रष्टव्यम्। शत॰ ब्रा॰ ‘अग्निवत्’ वा उपांशु’ ६. ३. ५. १०. ६. २. २. २०, ‘अग्निवत् हि सर्वो अग्निवत् हिरण्यं यत् तृतीयं’ १४. ॥ ५।

‡ आरम्भः प्रयोजनं यस्या इति विग्रहे ‘अनुप्रवचनादिभ्यश्छः’ —इति (पा॰ ५. १. १११) छः। प्रायणीयाया एव नामान्तर मारम्भणीयेति। प्रायणीया-लक्षणन्तु ऐ॰ ब्रा॰ १. २. १ द्रष्टव्यम्।

§ राजसूये प्रथमं पवित्रनामा सोमयागो भवतीति सर्वेषां पार्षदम्।

तत्र मन्त्रं विधत्ते— "एष ते इति *। 'निर्ऋते' पाप-देवते। 'एषः' तण्डुलपिष्टभाग 'ते' तव 'भागः', 'तं' भागं 'जुषस्व' सेवस्व। 'स्वाहा'-शब्दो हवननिमित्तम् 'इति'।

भूमिर्द्विविधा; शालिगोधूमादिभिर्वसस्याढ्या, तच्छून्या च। तत्र आद्यभूमिरूपा अनुमतिः, द्वितीयभूमिरूपा निर्ऋतिः †; सैषानिष्टकारिणी पापदेवता,— तथा भूमिः आविष्टं जनं पीडयितुं शक्नोति। 'तत्र' तथा सति 'अस्याः' भूमेः 'यत्र' यस्मिन् राजसूयानुष्ठानदेशे 'नैर्ऋतं रूपम्'; एतेन होमेन शमितवान् भवतीति। "तयो दैनम्"-इत्यादिना नैर्ऋतहोमस्य प्रयोजनकथनम्। "एतद्वा अस्या इति। 'एतत्' एव इरिणप्रदरात्मकं स्थानं अस्याः भूमेः सम्बन्धि 'निर्ऋतिगृहीतम्' निर्ऋत्याख्यया पापदेवतया आश्रयत्वेन स्वीकृतम्; अतः तत्र नैर्ऋतहोमानुष्ठानं युक्त मिति ॥ १ ॥

पुनरागमनं विधत्ते— "अप्रतीक्ष मिति। 'अप्रतीक्ष' यत्र निर्ऋत्यै होमः कृतः, तं प्रदेशम् अनवेक्षमाणा एव पुनर्गच्छेयुः। अथानुमतस्य हविषः प्रचारं विधत्ते— "अनुमत्या इति। "प्रचरन्तीति। आनुमतहविषः संवपनादिकं कुर्युरित्यर्थः। तथैवाम्नात मुदाहृतम्— "इयं वा अनुमति रिति ‡। भूमिरूपा अनुमतिः; तत्र यत् कर्म करोति, यत् कर्तुं मिच्छति, तत् सर्वं भूम्यात्मिका अनुमतिर्देवता अनुजानाति, तथा 'अनुमत्या' अनुज्ञातः 'सुवे' राजसूयाख्यं कर्म

* का० सं० ५. १४. १।

† तै० सं० १. ८. १ = तै० ब्रा० १. ६. १ भा० भा० द्रष्टव्यम्।

‡ पुरस्तादिदमेव द्वितीयकाण्डभाष्ये ( १२८ पृ० ७ पं० ) द्रष्टव्यम्।

करवाणि, इत्यनेनाभिप्रायेणानुमतहविर्निर्वाप। 'तत्' तेन हविषा भूमिं मेव प्रीणितवान् भवति ॥ ४ ॥

इयं प्रपणसाधनकपालगता अष्टसङ्ख्या गायत्रीद्वारा पृथिवी योग्यत्वेन प्रशंसति— 'अथ यदष्टेति *। 'अथ यत् समान स्थेति। अस्यार्थः,— 'समानस्य' एक मेव सन् उभयत्र' अनुमत्यै निर्ऋत्यै च क्रियते, उभयोरपि पृथिव्यात्मकत्वादिति। तस्य दक्षिणां विधत्ते— 'तस्य वास इति †। तत् प्रशंसति— 'यद्वै सवासा इति। यथा लोके पुरुषो वस्त्रसहितः सन् रक्षणाय चोरादिभयात् न कामयते, तद् वस्त्रं भयरहिते स्थाने 'निधाय' चेद् गच्छति, तदा 'अतिमुच्यते' भयाद् विमुक्तो भवति, तद्वद् वासोदानेन 'स्वयमानम्' 'एनं' यजमानम् 'पाप्मा' भय 'न' प्राप्नोति ॥ ५ ॥

तदनन्तरदिवसेऽनुष्ठेयं कर्म विधत्ते—"अथ श्वोभूत इति ‡। अग्निर्विष्णुश्चोभौ देवता यस्य हविषः, तं निर्वपेत्। "तेन यजेतेति। प्रकृतौष्टिवदेवेष्टि § कार्या। तेन अनुमतीष्टिवत् तन्मध्ये वैकृतं तस्य किञ्चिदपि न विद्यत इति भावः। "तद् यदेवेति। 'अद' अमुष्मिन् विप्रकृष्टे सोमप्रकरणे 'मन्त्रात'

---

* 'अष्टाकपालोऽनुमत्यै—इति का० श्रौ० सू० १५ १ ६। पुरोडाश इति शेष। तै० सं० १ ८ १ १ २।

† का० श्रौ० सू० १५ १ १२।

‡ फाल्गुनशुक्लदशमी मारभ्य प्रतिदिन मेकैक मेव हवींषि भवन्ति। तत्र प्रथम दशम्यां सानुमतम् तत उत्तरं सिद्ध माग्नावैष्णवम् इत्यादिक्रम मिति।

§ प्राकृतीष्टि०—इति क च छ।

'दीक्षणीयं' दीक्षायां निरुप्तम् 'आग्नावैष्णवं हविः', 'तदेव' इदानीं निरुप्यमाणं हविरिति तत्तादात्म्येन प्रशंसा। हविषो देवतासम्बन्धं प्रशंसति— "अग्निर्वा इति। अग्नेः सर्वदेवतात्मकत्वं प्रतिपादयति— "अग्नौ हीति। अग्नौ हि सर्वा देवता हूयन्ते, अतः सर्वदेवतार्थहविर्होमाधिकरणत्वादग्निः सर्वदेवतात्मकः। सः 'अग्निः' 'यज्ञस्य' 'अवरार्धे' आदौ स्थितः, 'विष्णुः परार्धे' यज्ञस्य चरमभागेऽवस्थितः। तथाहि प्रकृतिभूतस्याग्निष्टोमस्य आदौ दीक्षणीयायाम् आग्नावैष्णवे हविषि अग्नेः प्रथमदेवतात्वेन सम्बन्धः, अवसाने चोदवसानीयेष्टिस्थाने विष्णुदेवताका पूर्णाहुतिर्हूयते। यद्वा, आज्यशस्त्रे प्रथमे "भूरग्निर्ज्योतिः"-इति * अग्नेः प्राथम्यम्, चरमशस्त्रे आग्निमारुते 'विष्णोर्नु कम्"-इति † अवसाने विष्णोश्चरमत्वम्। एतदेवाभिप्रेत्यैतरेयकम्— "अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता"-इति ‡। "तत् सर्वा इत्यादि। तस्मात् तन्मध्यवर्तिनीः वक्ष्यमाणाः 'सर्वाः' सोमदेवताः अग्नि आद्य विष्ण्वात्मकं सर्वं यज्ञम् 'एतेन' आग्नावैष्णवेन हविषा 'परिगृह्य' परिवेष्ट्य स्वाधीनं कृत्वा 'सुवे' राजसूयाख्यं कर्म करवाणि 'इति' ईक्षोर्वैश्यादेव तस्मादित्यन्वयः ॥

दक्षिणा विधत्ते— "तस्य हिरण्यमिति §। "आग्नेयो

---

* ऐ० ब्रा० २ ५ ५, २ ४ ७ खण्डौ द्रष्टव्यौ।

† ऋ० सं० १० १५४ १। 'वैष्णवीं शंसति'—इति च तद्विधायकं ब्राह्मणम् ३ ३ १४। ‡ ऐ० ब्रा० १ १ १।

§ "हिरण्यमाग्नावैष्णवे"—इति का० श्रौ० सू० १५ १ ११। तै० सं० १ ८. १ ४। 'वामनो वही दक्षिणा'।

वा इति । अस्यायमर्थः ;— यज्ञोऽग्निदेवत्यः खलु , न अन्त-रेण यज्ञनिष्पत्तेरभावात् । 'हिरण्यम् अग्नेः रेतः' ; विष्णोर्यज्ञा-त्मकत्व श्रुतिप्रसिद्धम् * ; विष्ण्वात्मकस्य यज्ञस्य चाग्निसाध्य-त्वात् तद्रूपत्वम् ; तस्मात् परम्परया 'तदु' तद् विष्णुदेवत्य मपि कर्म, 'तदाग्नेयम्' अग्निदेवत्य मेव जातम् । तस्मादाग्ना-वैष्णवस्य हविषः 'आग्नेयं हिरण्यं' दक्षिणात्वेन भवितु युक्त मिति ॥ ६ ॥

तस्मात् पौर्णमासेष्टिविधौ(?) कर्म विधत्ते—, "अथ बीभूत इति † । 'तेन' आग्नीषोमीयेण हविषा यजेत । "यथेष्टीति । सर्वेष्टीनां पौर्णमासेष्टिः प्रकृतिभूता ; तद्वदत्रापि तदीय मन्त्र-जातं कुर्यादित्यर्थः । "एतेन वा इत्यादि । 'एतेन' हविषा हते वृत्रे विजितवतः 'अस्य' इन्द्रस्य 'इयं' परिदृश्यमाना 'या' 'विजितिः' अस्ति , 'ताम्' 'इन्द्रो व्यजयत' इति सम्बन्धः । 'तथा' 'एष' अपि अनुष्ठाता 'एतेन' हविषा सर्वान् अमून् जयति ॥

तस्य दक्षिणां विधत्ते— "उत्सृष्टो गौरिति ‡ । कियन्तं कालं शकटवहनादौ विनियोज्य पश्चाद् य उत्सृज्यते , स 'उत्सृष्टः' । तां दक्षिणां प्रशंसति— "उत्सर्जं मिति । 'अमुम्' अन्तरिक्षे दृश्यमानं 'चन्द्रमसम्' उत्सृज्योत्सृज्य 'घ्नन्ति' । तदेव

---

* अग्नैकत्वेन तृतीये काण्डे अस्मदादाम्नातं द्रष्टव्यम् ( ३ ५ ३ ९ , ६, ५ ३ १, १६ ) । तै० ब्रा० १ ३ ८ ५ 'यज्ञो वै विष्णुः' ।

† द्वादश्या मिति यावत् ।

‡ 'पुनरुत्सृष्टो गौरग्नीषोमीयः'—इति का० श्रौ० सू० १५ १ १४ । तै० सं० १ ८ १ ५ = तै० ब्रा० १ ६ १ हिरण्यं दक्षिणा ।

विहृणोति— "पौर्णमासीमेवेति। पौर्णमासी मारभ्य खलु देवाः 'घ्नन्ति', प्रतिदिवस मेकैककलापचयार * एव तस्य हनन मित्यर्थः। अमावास्याकाल मारभ्य 'उत्सृजन्ति' प्रतिदिवसं तथैकैककला-वृद्धेः। 'तस्मात्' अस्य हविषः सोमदेवतासम्बन्धादेव तादृशो गौर्द्विविधत्वेन युक्त इत्यर्थः ॥ ७ ॥

तदनन्तरदिनसकर्त्तव्य मिष्ट्यन्तरं विधत्ते— "यत्र श्रीभूत इति †। पुरा वृत्रहननाद् भीत इन्द्रोऽपक्रान्तं स्वकीयम् 'एतेन हविषा' 'पुनः' आत्मन्यधारयत्; एवम् 'एष' अपि यजमान 'एतेन' हविषा। यदिदं तेजः, स एवाग्निः; यदिदम् 'इन्द्रियम्' इन्द्रस्यासाधारणं सत्त्वं, स एवेन्द्र; धर्म-धर्मिणोरभेदोपचारात् तादात्म्यम्। ते 'उभे' तेजोवीर्ये 'वीर्ये' 'परिरक्षन्' 'सूर्य' 'इति' अभिप्रायेण ऐन्द्राग्नहविः प्रचार कर्त्तव्यः ॥

दक्षिणां विधत्ते— "तस्य ऋषभ इति ‡। ऐन्द्राग्नस्य हविषो दक्षिणात्वेन विहितस्य साण्डस्यानडुहो देवताद्वययोग्यतां दर्शयति— "स हि वहेनेति। वह नाम युगवहनदेशः, ककुत्प्रदेशः। तस्य दग्धप्रदेशवत् कृष्णवर्णत्वादाग्नेयत्वम्' आण्डा-भ्याम् ऐन्द्र' मेवनसमर्थत्वादिति § ॥ ८ ॥

तदनन्तरकर्त्तव्य मिष्ट्यन्तरं विधत्ते— "अथापयद्येति। सा आग्रयणेष्टि द्वितीयकाण्डेऽभिहिता ‖, तस्या अत्र काल-

---

* '०कलापचयात्'—इति च। † त्रयोदश्या मिति यावत्।
‡ आ० श्रौ० सू० १९. २. १५। चतुर्दश्या मिति यावत्।
§ तै० सं० १, ८, १ ८ इत्यपि दक्षिणाम्नायम्।
‖ २ का० ३ प्र० ५ अ० (२ भा० २१४—२२० पृ०) द्रष्टव्यम्।

सूयाङ्गत्वेन प्रयोगः। "सर्वान् वा इत्यादि। इष्टिपशुसोमदर्विहोमात्मकत्वाद्राजसूयस्य, तदनुष्ठानेन यज्ञक्रत्वादयः सर्वेऽनुष्ठिता भवन्ति। आग्रयणेष्टिरपि दैवहविष्ट्वेन प्रशस्तत्वादस्यावरोद्ध्या। अत्र, 'अनया' आग्रयणेष्ट्या 'अपि' 'मे' मम 'इदम् अभूत्' यागः कृतो भवतु; 'अनयापि' इष्ट्या 'सुवे' अभिषिक्तो भूयासम् 'इति' अनेनाभिप्रायेण आग्रयणेष्टिः कार्येत्यर्थः॥

तस्या इष्टेः प्रयोजनमाह— "ओषधीर्वा इति। 'एषः सूयमानः' यजमानः 'ओषधीः' परिपक्वा व्रीहियवाद्याः 'अभि' लक्ष्य 'सूयते' अभिषिच्यते। 'तत्' तथा सति 'अनया' आग्रयणेष्ट्या ता एव 'ओषधीः' 'अनमीवाः' रोगरहिताः आरोग्यकारिणीः, 'अकिल्बिषाः' पापरहिताश्च 'कुरुते'। आग्रयणेष्टेरेवाद्यभोजनार्हत्वात् तदकरणे भोक्तुः रोगः पापं च स्यात्; इह तु तदनुष्ठाने तादृग्दोषरहिताः ओषधीरभिलक्ष्य राजसूयाख्यं कर्म करवाणीति यजुराशयः॥

दक्षिणां विधत्ते "तस्य गौरिति *। 'तस्य' आग्रयणस्य† ॥ ८ ॥

अथ चातुर्मास्यानि विधत्ते— "अथ चातुर्मास्यैरिति। तेषां कालः सूचितः उक्तमपि पञ्चाहादनन्तरम्— "चातुर्मास्यप्रयोगः फाल्गुन्याम्"—इति ‡। "सर्वाण्वा इत्यादि। सर्वक्लृप्तेष्टिदर्विहोमावरोधकराजसूयमध्ये चातुर्मास्याख्यो यज्ञक्रतु-

---

* का० श्रौ० सू० १५ १ १६। 'नात्र यवाग्रयणं व्रीह्याग्रयणं विधीयते, न सौम्याग्रयणम्—इति तत्र कर्कः।

† 'आग्रयणं भवति हुतादाय—इत्यादि तै० ब्रा० १ ६ १।

‡ का० श्रौ० सू० १५ १ १७।

रथ्यवरीत्य इत्यनेनाभिप्रायेण तदनुष्ठानम्। अन्यत् पूर्ववत् योज्यम् * ॥ १० ॥ २ [ २. ३ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम्. )

वैश्वदेवेन यजते। वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूयाऽइति तथोऽएवैष एतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूयाऽइति * ॥ १ ॥

अथ वरुणप्रघासैर्यजते। वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात् प्रामुञ्चत् ता अस्यानमीवा अकिल्विषाः प्रजाः प्राजायन्तानमीवा

---

* अत्र प्रयुक्तचातुर्मास्यशब्दो धर्मातिदेशार्थः नैतानि चातुर्मास्यानि, अपि त्वेते चातुर्मास्यवदनुष्ठेया राजसूययागविशेषाः। अतो नित्यान्यपि चातुर्मास्यानां क्रियाणुक्तिः भवन्त्येव नैतैः एतच्च चातुर्मास्यत्वादिति।

1 इति—इति क, ख। "इति"—इति ग पुस्तके।

जुहोति व्विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहेत्यथोत्तरार्द्धे जुहोति मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहेत्यथ मध्ये जुहोति सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहेति * ॥ ५ ॥

अथ सार्द्धᳪ समुह्य जुहोति। ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहेति तद्यदेवं जुहोति ॥ ६ ॥

यत्र वै देवाः। साकमेधैर्व्यजयन्त येयं तेषां व्विजितिस्तां तद्वोवृत्तिमयन्त य ऽइमानि दिक्षु नाष्ट्रा रक्षाᳪसि हन्तैभ्यो वज्रं प्रहरामेति वज्रो वा ऽआज्यं त ऽएतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाᳪस्यवाघ्नंस्ते व्यजयन्त येयं

---

* 'स्वाहेति'—इति क, 'स्वाहेति' इति ख, 'स्वाहेति'—इति ग।

मेषां व्विजितिस्तां तथोऽ एवैष एतेन सर्व्वे-णाज्येन दिक्षु नाष्ट्रा रक्षांस्यपहन्ति तथो ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे सूया ऽइति * ॥ ७ ॥

अथ यदेता अपराः पञ्चाहुतीर्जुहोति । स्रवन्ति वा ऽएतदग्नेर्व्विहरन्ति यत् पञ्चधा हवनीयं व्यूहन्ति तदेवास्यैतेन सन्दधाति तस्मादेता अपराः पञ्चाहुतीर्जुहोति ॥ ८ ॥

तस्य प्राष्टिवाहनो ऽश्वरथो दक्षिणा । त्रयो ऽश्वा द्वौ सव्यष्टसारथी ते पञ्च प्राणा यो वै प्राणः स वातस्तद्यदेतस्य कर्म्मण एषा दक्षिणा तस्मात् पञ्चवातीयं नाम ॥ ९ ॥

स हैतेनापि भिषज्येत् । अयं वै प्राणो योऽयं पवते यो वै प्राणः स आयुः सोऽय मेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा व्विहितो दश वा ऽएता आहुती-र्जुहोति तदस्मिन् दश प्राणान् कृत्स्न मेव सर्वं

* इति—इति क   इति—इति ग घ ।

मायुर्दधाति स यदिहापि गतासुरिव भवत्या हैवैनेन हरति * ॥ १० ॥

अथेन्द्रतुरीयम्। आग्नेयो ऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनडुह्यै वहलाया ऐन्द्रं दधि तेनेन्द्रतुरीयेण यजत ऽइन्द्राग्नी ऽउ हैवैतत् समूदाते ऽउत्तिमवन्तो वा ऽइमानि दिक्षु नाष्ट्रा † रक्षांसि हन्तैभ्यो वज्रं प्रहरावेति ॥ ११ ॥

स हाग्निरुवाच। त्रयो मम भागाः सन्त्वेकस्तवेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यपाहतां तौ व्यजयेतां यैनयोरियं व्विजितिस्ता तयोऽएवैष एतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यपहन्ति तयो ऽएव व्विजयमनु व्विजिते ऽभये नाष्ट्रे भूया ऽइति ॥ १२ ॥

स य एष आग्नेयो ऽष्टाकपालः पुरोडाशो भवति ‡। सो ऽग्नेरेको भागो ऽथ यद् वारुणो यवमयश्चरुर्भवति यो वै वरुणः सो ऽग्निः सो

* 'हरति'—इति क, ख। † 'नाष्ट्राः'—इति ग।

‡ भवति—इति क, ख। 'भवति' इति ग, घ

ऽग्नेर्द्वितीयो भागो ऽथ यद्रौद्रो गावेधुकश्चरु-
र्भवति यो वै रुद्रः सोऽग्निः सो ऽग्नेस्तृतीयो
भागो ऽथ यद्गावेधुको भवति वास्तव्यो वा
ऽएष देवो वास्तव्या गवेधुकास्तस्माद् गावे-
धुको भवत्यथ यदनडुह्यौ वहलाया ऽऐन्द्रं दधि
भवति स इन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं
तत्तुरीयं तस्मादिन्द्रतुरीयं नाम तस्यैवानडुही
वहला दक्षिणा सा हि वहेनाग्नेय्यग्निदग्ध-
मिव ह्यस्यै वहं भवत्यथ यत् स्त्री सती वहत्य-
धर्मेण तदस्यै वारुणं रूपमथ यद् गौस्तेन
रौद्र्यथ यदस्या ऽऐन्द्रं दधि तेनैन्द्री ह
वा ऽएतत् सर्व्वं व्यश्नुते तस्मादेवैवानडुही वहला
दक्षिणा * ॥ १३ ॥

अथापामार्गहोमं जुहोति। अपामार्गैर्वै देवा
दिक्षु नाष्ट्रा रक्षाᳬस्यपामृजत ते व्यजयन्त
येयं मेषा व्विजितिस्ता तथो ऽएवैष एतदपा-
मार्गैरेव दिक्षु नाष्ट्रा रक्षाᳬस्यपमृष्टे तथो

* दक्षिणा इति क ग ।

ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे सूयाऽइति ॥ १४ ॥

स पालाशे * वा स्रुवे व्वैकङ्कते वा। अपामार्गतण्डुलानादत्ते ऽन्वाहार्यपचनादुल्मुकमादत्ते तेन प्राञ्चो व्वोदञ्चो वा यन्ति तदग्निꣳ समाधाय जुहोति ॥ १५ ॥

स उल्मुकमादत्ते। अग्ने सहस्व पृतनाऽइति युधो वै पृतना युधः सहस्वेत्येवैतदाहाभिमातीरपास्येति सपत्नो वा ऽअभिमातिः सपत्नमपजहीत्येवैतदाह दुष्टरस्तरन्नरातीरिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्व्वꣳ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति व्वर्चोधा यज्ञवाहसीति साधु यजमाने दधदित्येवैतदाह ॥ १६ ॥

तदग्निꣳ समाधाय जुहोति। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपाꣳशोर्व्वीर्येण जुहोमीति यज्ञमुखं वा ऽउपाꣳ-

* पलाशे इति क।

शुर्यज्ञमुखेनैवैतत्प्राट्रा रक्षाꣳसि हन्ति इतः रक्षः खाहेति तत्प्राट्रा रक्षाꣳसि हन्ति ॥ १७ ॥

स यदि पालाशः स्रुवो भवति। ब्रह्म वै पलाशो ब्रह्मणैवैतत्प्राट्रा रक्षाꣳसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतत्प्राट्रा रक्षाꣳसि हन्ति रक्षसां त्वा स्वधायेति तत्प्राट्रा रक्षाꣳसि हन्ति ॥ १८ ॥

स यदि प्राङ्‌ङित्वा जुहोति। प्राञ्चꣳ स्रुवमत्यति यद्युदङ्ङित्वा जुहोत्युदञ्चꣳ स्रुवमत्यत्यवधिष्म रक्ष इति तत्प्राट्रा रक्षाꣳसि हन्ति ॥ १९ ॥

अथाप्रतीक्ष पुनरायन्ति। स हैतेनापि प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत् प्रतीत्य जुहोति प्रतीचीनफलो वा ऽअपामार्गः स यो हास्मै तत्र किञ्चित् करोति त मेव तत् प्रत्यग्धूर्वति तस्य नामादिशेदवधिष्ममुममौ हस इति तत्प्राट्रा रक्षाꣳसि हन्ति ॥ २० ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [२.४.] ॥

एवं चातुर्मास्यानि सामान्येन विधाय वैश्वदेवाख्यं प्रथमं पर्व विधत्ते— वैश्वदेवेनेति। वैश्वदेव मित्याग्नेयादिहविरष्टकरूपप्रथमपर्वणो नामधेयम्। यत्र वैश्वदेवादीनां चतुर्णां पर्वणामपेक्षितान्यङ्गानि मासाग्निहोत्रब्राह्मणेन नामातिदेशाद‌तिदिष्टानि। तदुपदेशस्तु द्वितीयकाण्डे पञ्चमेऽध्याये समाम्नातः— "वैश्वदेवेन वै प्रजापतिरिति *। यत्र वैश्वदेवयागेन प्राजापत्यस्य प्रसिद्धिः द्योत्यते। तथाच तैत्तिरीयके— "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत"-इति †। 'भूमानं' ( प्रजापतिः ‡ ) भूयसीः प्रजा इत्यर्थः। "तथो एवैष इति। यथा पुरा प्रजापतिं वैश्वदेवयागेन भूयसीः प्रजाः सृष्टवान्, एष सर्वं यजमानोऽपि तेन यागेन तथाविधाः 'प्रजाः' 'सृजते' सृजति। ताः 'सृष्टाः' प्रजाः अभिलक्ष्य 'ऋतुं' सर्वं यज्ञं करवाणीति ॥ १ ॥

द्वितीयं पर्व विधत्ते— "अथ वरुणेति। 'अथ' वैश्वदेवानन्तरं चतुर्षु मासेषु व्यतीतेषु 'वरुणप्रघासैः' यजेत। तान् वरुणपाशमोचनसाधनत्वेन प्रशंसति— "वरुणप्रघासैर्वा इति। 'ता यस्येति। वरुणप्रघासयागेन पाशविमोचनस्य ज्ञातत्वात् 'यस्य' प्रजापतेः 'ताः' वैश्वदेवेन सृष्टाः 'प्रजाः' रोगपापरहिताः सत्यः पुत्रपौत्रादिरूपेण प्रजायन्ते। यत मन्यत। दार्ष्टान्तिके योजयति— "तथो एवैष इति। "ता यस्येति। 'यस्य' यजमानस्येत्यर्थः ॥ २ ॥

---

* ३ भा० २७२ पृष्ठा द्रष्टव्या। वस्तुतोऽध्यायारम्भात एव चातुर्मास्योपदेशारम्भः ( ५प्र० १ब्रा० २य०ए० )।

† तै०ब्रा० १ ६ २ १। ‡ च-छ पुस्तकयोरिदं अधिकम्।

तृतीयं पर्व विधत्ते— "अथ साकमेधैरिति। 'अथ' वरुणप्रघासानुष्ठानानन्तरं चतुर्षु मासेषु साकमेधाख्या यागाः कार्याः। तान् पापरूपमलुजयसाधनत्वेन सदृष्टान्तं प्रशंसति— साकमेधैर्वा इति। 'वृत्रं' वृत्रासुरम् 'अघ्नन्' हतवन्तः। 'एषां' देवानां 'येयं विजितिः' इदानीं दृश्यते, 'ताम्' 'एतैरेव' साकमेधैः 'व्यजयन्त' प्राप्नुवन्। "तथो एवेत्यादि, सिद्धम् ॥ ३ ॥

अथ चतुर्थं पर्व विधत्ते—"अथ शुनासीरीयेणेति *। शुनो वायुः, सीर आदित्यः, तद्देवत्यं हविः शुनासीरीयम्; तस्मात् चतुर्थं पर्व शुनासीरीयमित्युच्यते †। "उभौ रसाविति। शुनासीरयो रसरूपत्वं हि द्वितीये काण्डे स्पष्टं श्रुतम्— "अथ यस्माच्छुनासीरीयेण यजेत या वै देवानाᳪ श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत् तत् सीरᳪ सा या चैव देवानाᳪ श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां यश्च संवत्सरस्य प्रजितस्य रस आसीत् तमेतदुभयं परिगृह्यात्मन् कुरुते"— इति ‡। शुनासीरीयप्रयोगकालः सूत्रितः— "पवित्रदीक्षाप्यामे शुनासीरीयम्"—इति §। पवित्राख्यस्य सोमयागस्य संवत्सरे यस्यां तिथौ दीक्षा कृता, तस्यां फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व कार्यम्। अर्थात् पवित्रशुनासीरीययोर्मध्ये वैश्वदेवादीनि त्रीणि पर्वाणि क्रमेण चतुर्षु मासेषु कार्याणीत्युक्तं भवति ॥

---

* 'शुनासीर्येण'—इति मूलपाठः।

† का० श्रौ० सू० १५ १ १८। तै० सं० १ ८ ७ द्रष्टव्यम्।

‡ २ ६ ३ ॥ (२भा० ४०४पृ० १०पं०) द्रष्टव्यम्।

§ का० श्रौ० सू० १५ १ १६।

पञ्चवातीयहोमं * विधत्ते— "अथ पञ्चेति †। 'पञ्च-वातीयम्' इति कर्मनामधेयम्। 'आहवनीयम्' अग्निं 'पञ्चधा' 'व्युह्य' प्रतिदिशं मध्ये च पृथक् कृत्वेत्यर्थः। आज्यस्थाल्याः 'स्रुवेण' 'उपघातम्' उपहत्योपहत्य गृहीत्वा 'जुहोति' ॥ ४ ॥

तत्र पूर्वादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनं विधत्ते— "स पूर्वार्धे इत्यादिना। पूर्वार्धे भवः 'पूर्वार्धः' अग्निः। "अग्निनेत्रेभ्य इत्यादि ‡। अग्निः 'नेत्रं' नयनस्थेष्टप्राप्तेः साधनं येषां तेभ्यः। 'पुरःसद्भ्यः' पूर्वस्यां दिशि सीदन्तीति तथोक्ताः, तेभ्यः 'देवेभ्यः' 'स्वाहा' सुहुतं अस्तु। एवं मुत्तरत्रापि योज्यम्। 'दुवस्वद्भ्यः' दुव इत्यन्नाम §; हविर्लक्षणान्नयुक्तेभ्यः ॥ ५ ॥

इत्थं पञ्चभिर्मन्त्रैः पञ्चस्वग्निषु हुत्वा पुनस्तानग्नीनेकीकृत्य तैरेव मन्त्रैरेकं विधत्ते— "अथ सार्धं मिति ‖। पञ्चाप्य-ग्नीन् 'सार्धं' 'समुह्य' समस्य जुहुयात्। तानेव मन्त्रान् ¶ पुनः पठति— "ये देवा इति **। पर्यन्तं पूर्ववत् ॥ ६ ॥

पञ्चवातीयहोमस्य द्रव्यं विधातुं माह— "एष वै देवा

---

* तै० सं० १ ८ ७ 'पञ्चेध्मीयमन्त्राः'।

† का० श्रौ० सू० १५ १ २०।

‡ वा० सं० ९ ३५, ३—६।

§ 'दुवस परिचरणे परितापे च' कण्ड्वादिः। 'दुवस्यति'—इति परिचरणकर्मसु पठितम् (निघ० ३ ५ ४)। 'दुवस्यति, दुवस्यती रा'श्नोतिकर्मा'—इति च निरु० १० २ ७।

‖ का० श्रौ० सू० १५ १ २१

¶ तैरेव मन्त्राणां पुरस्तात् 'ये देवाः'—इति पदस्य सर्वत्र प्रयोगेऽत्र विशेषः। संहितायां तु प्रयोगेनाम्नानात्।

** वा० सं० ९ [illegible] १—५।

इति। "तद्दोसुरिति। 'तत्' तत्र विजितप्रदेशे देवाः 'ऊषुः' उषितवन्तः। किम्? इति। 'इमानि' 'नाष्ट्रा' नाशकारीणि 'रक्षांसि' 'दिप्सु' 'उत्थितवन्तो' उत्कटं पिबन्ति, प्राणिनो भक्षयन्ति। 'हन्त' इति हर्षे। 'एभ्य' रक्षोभ्यः 'वज्रं प्रहराम' 'इति' विचार्य, आज्यरूपेण वज्रेण तान् राक्षसान् एव अघ्नन्। श्रूयते हि आज्यस्य वज्रत्वम्। "घृतं वै देवा वज्रं कृत्वा"-इति *। "तथो एवैष इत्यादिना इदानीं अनुष्ठातुरपि तथाविधफलप्राप्तिदर्शनम् ॥ ७ ॥

पत्नीनां समावेशेन कृतं आहुतिपञ्चकं प्रशंसति— "पञ्च वा एता इति। पूर्वं आहवनीयस्य पञ्चधा व्यूहनेन तं अग्निं 'क्षण्वन्ति' हिंसन्ति। "क्षणु हिंसायाम्"-इति धातुः †। तथा तस्य 'अग्नेः' अवयवान् 'विवृहन्ति' विश्लेषयन्ति। "वृह उद्यमने"-इति धातुः ‡। तं अनेन पुनः समस्य पञ्चाहुतिकरणेन धिनितवान् भवतीति ॥ ८ ॥

तस्य होमस्य विमुक्त अध्वरर्थं दक्षिणाग्नेन विधत्ते— "तस्य प्रविशाहव इति §। "अक्ष इति। रथस्य अक्षभागे तिष्ठन्तः, सारथिरेक इति द्वौ, पक्षगतौ मिलकद्वयं सारथिगता विव-घट्टाश्च मिलिताः पञ्चप्राणात्मना प्रशंसति— 'ते पञ्चेति। प्राणवाततयोरैक्यात् पञ्चवातीयहोमस्य तद्द्वारा प्राणात्मकत्व तयो दक्षिणाग्नेन युज्यते। 'तस्मात्' वायंशोऽपि पञ्च वाताः प्राणा अस्मिन् सन्तीति 'पञ्चवातीयं नाम' सम्पन्नम् ॥ ९ ॥

---

* तै० सं० ६ २. १ ७ द्रष्टव्यम्।

† भ्वा० प० ३ धा०। ‡ तु० प० ५६ धा०।

§ का० श्रौ० सू० ॥ १ २३।

आरोग्यकामस्यापीमं होमं विधत्ते— "स ऐतेनापीति। 'एतेन' होमेन 'भिषज्येत्' चिकित्सेत्। "भिषज् चिकित्सायाम्" -इति धातुः *। अत एव सूत्रितम्— "व्याधितस्याप्येव मिति †। प्राणस्यायुष्ट्वं शरीरधारकत्वात्। 'सः' प्राणरूपेण 'एकः' अपि पुरुषशरीरेऽनुप्रविष्टः सन् वृत्तिभेदात् दशसु चक्षुः-श्रोत्रादिविवरेषु सञ्चरन् 'दशधा विहितः' भवति। अत एता-दशाहुतिकरणात् 'दश प्राणान्' व्याधितं 'पुरुषे' 'कृत्स्नं' सम्पूर्णं 'सर्वं मायुः' वि-'दधाति'। 'अः' तु 'गतासुः एव भवति' तम् 'अपि' अनेन होमेन 'आहरति एव' पुनर्जीवयत्येवेत्यर्थः ॥ १० ॥

यागान्तरं विधत्ते— "अथेन्द्रेति। 'अथ' दशहोतीयहोमा-नन्तरम्, इन्द्रस्तुरीयश्चतुर्थो हविर्देवता यस्मिन् कर्मणि, तत् 'इन्द्रतुरीयं' कर्म भवतीत्यर्थः ‡। तस्य हविश्चतुष्टयं विधत्ते— "आग्नेय इत्यादि §। 'गवीधुकाः' आरण्य-गोधूमाः ||। 'वहिन्यै' वहं नाम ककुत्प्रदेशः, तद्वत्यै 'अन-डुह्यै' षष्ठ्यर्थे चतुर्थी, तस्याः। 'दधि' 'ऐन्द्रम्' इन्द्रदेवत्यं कुर्यात्। अथ विधत्ते— 'ऐन्द्रतुरीयेणेति।

यागमेन्द्रतुरीयाख्यमाख्यायिकया दर्शयति— "इन्द्राग्नी ह वैवैतदिति। 'समूदाते' संवादं कृतवन्तौ ॥ ११ ॥

---

* काशकृ० प० ३३ धा० ।

† का० श्रौ० सू० १५ १ २१। 'राजसूयाद् बहिः'—इति कर्कः।

‡ का० श्रौ० सू० १५ १ [illegible]। एतस्य काण्वानां व्योभंत पठन्ति। तै० सं० १ ८ ७।

§ का० श्रौ० सू० १५ १ २४।

|| गवेधुका सदृशी वन्यधान्यां कृष्यामि चोमानि भवन्ति'—इति देव०।

"स आग्निरित्यादिना, अग्नेस्त्रयो भागाः, इन्द्रस्य तुरीय एको भाग इति यागस्यार्थात् इन्द्रतुरीय मिति नाम निरुक्तम्। स्पष्ट मन्यत् ॥ १२ ॥

अग्नेर्भागत्रयं स्फुटमेव प्रतिपादयति—"स य आग्नेय इति *। "यो वै वरुण इत्यादि। वरुणो रुद्रश्चोभावप्यग्निरेव। तथाच तैत्तिरीयके— 'ते देवा अग्निं मह्यमविति प्रस्तुत्य "स त्रेधात्मानं व्यकुरुताग्निं' तृतीयं रुद्रं तृतीयं वरुणं तृतीयम्"— इति †। "वास्तव्य इति। रुद्रः खलु वास्तुभवः। ग्रामाद् बाह्यो यज्ञभूमिश्मशानादिर्वास्तुः। 'गवीधुकाः ‡' अपि 'वास्तुभवाः'। अतो गावीधुकहविषो § रुद्रदेवत्यत्वं युक्त मिति। "अथ यदनड्वान् इत्यादि। स्पष्टार्थम् ॥

तस्य दक्षिणां विधत्ते—"तस्मादेवेति ॥। दक्षिणात्वमाया अनड्वान् अग्निवरुणरुद्रेन्द्रदेवताकामौचित्यं दर्शयति— "स हि वहतीति। युगवहनस्कन्धैकदेशस्यारक्तवर्णत्वात् अग्नेः सम्बन्धिनी। स्त्रीत्वे सत्यपि, 'अधर्मेण' क्रियया अधोग्रबन्धनेनोपलक्षणेन वारुणी; वरुणो हि स्वपाशैः सर्वान् बध्नाति। गवां रुद्रदेवत्यत्वाद् 'तेन रौद्री'। यत्तदीयस्य दण्ड ऐन्द्रत्वात् 'तेन' 'ऐन्द्री' इन्द्रदेव-

---

* 'आग्नेयः, वारुणो यवमयश्चरुः, रौद्रश्च गावेधुकः, वहिर्गोर्धेन्वगुः'—इति का० श्रौ० सू० १५. १. १५, १६. १८, १९।

† तै० ब्रा० १ ७ १। इदं उत्तरं तत्र सैव माम्नातम्— "सोऽमन्यत, क इदं तुरीय मिति। अह मित्यौष्णोऽब्रवीत्। —। स इन्द्रस्तुरीय मभवत्। यदिन्द्रस्तुरीय मभवत्, तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम्"—इति।

‡ 'गवेधुकाः'—इति मूलपाठः।

§ 'गावीधुकहविषः'—इति च।

॥ 'तस्यैवेवेति'—इति मूलपाठः।

ताका *। एतादृशी 'अनडुही' एतस्येन्द्रतुरीयकर्मणो दक्षिणात्वेन संयुज्यत इत्यर्थः † ॥ १३ ॥

विधत्ते— "अथापामार्गैर्ति ‡। तं राज्ञो विजितिसाधनत्वेन प्रशंसति— "अपामार्गैर्वै देवा इति। 'अपाम्रजत' अपमार्जनं कृतवन्तः। "अपघ्नन्त इति। इदानीं सम्यपमार्जनं करोति § ॥ १४ ॥

तस्यानुष्ठानं सविशेषं माह— "स पालाशे वेति। पलाशवैकङ्कतयोरन्यतरनिर्मिते 'स्रुवे' अपामार्गतण्डुलानाधाय अन्वाहार्यपचनाग्नेरुल्मुकमादाय प्राङ्मुखो उदङ्मुखो वा 'यन्ति'। तत्राग्निं प्रतिष्ठाप्य होमः कर्त्तव्यः ‖ ॥ १५ ॥

उल्मुकादानमनूद्य मन्त्रं विधत्ते— "स उल्मुकमिति ¶। हे 'अग्ने!' 'पृतनाः' सङ्ग्रामान् 'सहस्व', 'अभिमातीः' अभिमन्यमानान् शत्रून् 'अपास्य' अपक्षिप। "अथ दक्षिणे" **। एव मनिष्टनिहन्तिं सुखोष्टमासिं प्रार्थयते— 'दुष्टः'

* "वहिनीदक्षिणेन्द्रम्"—इति का० श्रौ० सू० १५ १. ३४। 'वहिन्या तोर्वेधि वहिनीत्यपि। अनीवहतीति वहिनी गौः'—इति तत्र कर्कः।

† का० श्रौ० सू० १५. १. ३०। 'वहिनी धेनुर्दक्षिणा'—इति तै० सं० १.८.७ १। "यद् वहिनी, तैनाग्नेयी, यद् गौः, तेन रौद्री, यद्धेनुस्तेनैन्द्री, यत स्त्री सती दान्ता, तेन वारुणी सम्बद्धो"—इति च तत्र तै० ब्रा० १ ७ १।

‡ तै० सं० १. ८ ७=तै० ब्रा० १ ७ १।

§ का० श्रौ० सू० १५. २ १। 'इन्द्रतुरीयान्ते चोभूते कारणं पर्वात'—इति तत्र कर्कः।

‖ का० श्रौ० सू० १५ २ २।

¶ का० श्रौ० सू० १५ २ ३। ** दि० प्र० ५ ब्रा०।

पश्चेस्तरीत् सामर्थ्यः स्वयम् 'घरातीः' शत्रून् 'तरन्', 'यज्ञ-पाहुसि' यजमाने 'वर्षाः' धनं 'धाः' धारयसि ॥

मन्त्रं प्रतिपाद्य समूह्य व्याचष्टे—"धन्ये सहस्रेति * । वर्षःपरस्य श्रेयःपरत्व माह—"साधु यजमान इति । 'दधत्' धारयमित्यर्थः ॥ १६ ॥

हवन मनूद्य मन्त्रं विधत्ते—"तदग्नि मिति † । "दिवस्य लेति ‡, व्याख्यातम् । "उपांशोरिति । 'उपांशुः' नाम 'यज्ञमुखं' प्रथमो ग्रहः, तस्य 'वीर्येण' 'जुहोमि' । तेन हवनेन 'रक्षः' हतं निहतं नष्टं भवतु । 'स्वाहा' इदं हविः सुहुत मस्तु इति ॥ १७ ॥

पात्रासमेकस्तयोरेकतरस्य हवनोपयुक्तस्य स्रुवस्य क्षेपणं सार्थवादं विधत्ते—"स यदि प्राङ्मन इति § । क्षेपणमन्त्रं पठति—"रक्षसा मिति ‖ । हे स्रुव ! 'रक्षसां वधाय' 'त्वा' त्वाम्, अस्यामीति शेषः ॥ १८ ॥

"स यदीति । 'यदि' अध्वर्युः 'प्राङ्' प्राङ्मुखः पूर्वस्यां दिशि गत्वा जुहुयात्, तर्हि 'स्रुवं' 'प्राञ्चं' प्रागुदिक्सम्मुखम् 'अस्यति' क्षिपति । तदविदुव्यादावप्येवं योज्यम् । हवनप्रदेशात् सन्निवर्तनं विधित्सुरादौ तन्मन्त्रं ¶ पठित्वा व्याचष्टे— "अवधि-

---

* वा० सं० ६ ३७ १ ।
† का० श्रौ० सू० १५ १ ६ ।
‡ वा० सं० ६ ३८ १ ।
§ का० श्रौ० सू० १५ २ ७ ।
‖ वा० सं० ६ ३८ १ ।
¶ वा० सं० ६ ३८ २ ।

घेति। अनेनापामार्गहोमेन 'रक्षः' 'अवधिषम्' वधं कृत-वानस्मि। भूते लुङ्॥ १८॥

एतन्मन्त्रकरणकं पुनरागमनं विधत्ते— "अथाप्रतीक्ष मिति *। 'अथ' 'अप्रतीक्षं' तं प्रदेशं प्रतिनिरीक्ष्य, अनवेक्ष्ये-त्यर्थः। अभिचर्यमाणस्यापि स्वोपद्रवपरिहारार्थं होमं विधत्ते— "स हैतेनापीति। 'एतेन' अपामार्गहोमेन 'अपि', न केवलं पञ्चवातीयहोमेन, एतेनापि 'प्रतिसरं' स्वरक्षां अभिचर्यमाणः कुर्यात् †। अत्रैव कश्चिद् विशेषं विधत्ते— "स यस्यां मिति। अभिचारको यस्यां 'दिशि' भवेत्, तां दिशं 'प्रतीत्य' गत्वा जुहुयात्। "प्रतीचीनफल इति। अपामार्गमञ्जर्यो ‡ यतः प्रतीचीनफलाः §, स्वाग्रं प्रतिगतैरवाङ्मुखैः फलैर्युक्ताः ||; अतोऽभिचारकः 'यदि' यजमानाय 'किञ्चिद्' पीडादिकं कुर्यात्। 'त मेव' एतेनापामार्गहोमेन प्रतिमुखं 'धूर्नति' हिनस्ति, तत्कृतोऽभिचारः तं मेव प्रतिनिहत्य हिनस्तीत्यर्थः। निवर्तनमन्त्रेण शत्रुनामादेशनं विधत्ते— "तस्य नामेति ¶। "अवधिषमसु मिति। 'अमुम्'-'असौ'-इति पदयोः स्थाने अभि-चारकनामधेयं द्वितीयान्तत्वेन प्रथमान्तत्वेन चादिशेदित्यर्थः॥

अत्र सूत्रम्— "दिवस्त्वेति जुहोति, रक्षसां त्वेति स्रुव मस्यति, तां दिशं यस्यां जुहोत्यवधिषम् रक्ष इत्यायन्त्य

* का० श्रौ० सू० १५ ९ ८।

† का० श्रौ० सू० १५ ९ ९।

‡ नास्त्येतत् पदं च पुस्तके।

§ 'प्रतीचीनफलाः'—इति क।

|| 'फलैर्युक्ताः'—इति च। ¶ का० श्रौ० सू० १५ ९ १०।

त्रयीव अभिचर्यमाणोऽपि त्रा दिवं गत्वाभिचरतो नामादि-शेत्"–इति * ॥ २० ॥ ३ [ २. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् . )

आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते पुरुषान्वै तद्देवा उपायंस्तथो एवैष एतत् पुरुषानेवोपैति ॥ १ ॥

स यदाग्नावैष्णवः † । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता वैष्णवाः पुरुषास्तदस्मा अग्निर्दाता पुरुषान् ददाति ॥ २ ॥

अथ यदैन्द्रावैष्णवः । चरुर्भवतीन्द्रो वै

---

* 'सोमस्तुष्वत्राम्नागमनेषु'—इति तत्रैव । का० श्रौ० सू० १५. २ ६–१० ।

† 'कः'—इति क, 'व'—इति ग, घ ।

यजमानो वैष्णवः पुरुषास्तदस्मा अग्निर्दाता पुरुषान् ददाति तैरेवैतत्संस्पृशते तानात्मन् कुरुते * ॥ ३ ॥

अथ यदपरं † । त्रिकपालो वा पुरोडाशो भवति चरुर्वा यानेवास्मा ‡ अग्निर्दाता पुरुषान् ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवाग् कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तत् पुरुषानेवैतदुपैति पुरुषवान्भूया ऽसानीति सर्व्वामनो गौरिविता स हि वैष्णवो यज्ञा-मनः § ॥ ४ ॥

अथापरेण त्रिपर्युक्तेन यजते । स आग्ना-पौष्णमेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिपर्युक्तेन यजते पशू-नेव तद्देषा उपायंस्तथो ऽएवैष एतत् पशू-नेवोपैति ‖ ॥ ५ ॥

---

* 'कुरुते'—इति क, ख ।

† ०षः'—इति ग, घ ।

‡ 'स यानेवास्मा —इति क, ख ।

§ '०मः'—इति ग, घ ।　‖ ०पैति"—इति ख ।

स यदाग्नापौष्ण * । एकादशकपाल पुरोडाशो भवत्यग्निर्वै दाता पौष्णाः पशवस्तदस्मा ऽअग्निरेव दाता पशून् ददाति † ॥ ६ ॥

अथ यदैन्द्रापौष्ण । श्चरुर्भवतीन्द्रो वै यजमान पौष्णाः पशव स यानेवास्मा ऽअग्निर्दाता पशून् ददाति तैरेवैतत्सꣳस्पृशते तानात्मन् कुरुते ‡ ॥ ७ ॥

अथ यत् पौष्ण । श्चरुर्भवति यानेवास्मा ऽअग्निर्दाता पशून् ददाति तेष्वेवैतदन्तत प्रतितिष्ठति यद्वै पशुमान् कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तत् पशूनेवैतदुपैति पशुमान्सूया ऽइति तस्य श्यामो गौर्दक्षिणा स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुन प्रजनन प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजनन मिथुन मेवैतत् प्रजनन क्रियते तस्माच्छ्यामो गौर्दक्षिणा ॥ ८ ॥

---

* ०ष्ण—इति ग. घ. † ०ाति—इति ख. घ.

‡ कुरुत—इति ग. ग.

अथापरेण त्रिषंयुक्तेन यजते * । सोऽग्नीषोमीय मेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रासौम्यं चरुं सौम्यं चरुं तेन त्रिषंयुक्तेन यजते व्वर्चं एव तद्देवा उपायंस्तथो ऽएवैष एतद्वर्च पशोपैति ॥ ९ ॥

स यदग्नीषोमीयः । एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता व्वर्चः सोमस्तदात्मा ऽअग्निरेव दाता व्वर्चो ददाति † ॥ १० ॥

अथ यदैन्द्रासौम्यः । चरुर्भवतीन्द्रो वै यजमानो व्वर्चः सोमः स यदेवात्मा ऽअग्निर्दाता व्वर्चो ददाति तेनैवैतत्सꣳस्पृशते तदात्मन् कुरुते ‡ ॥ ११ ॥

अथ यत् सौम्यः । चरुर्भवति यदेवात्मा ऽग्निर्दाता व्वर्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति यद्वै व्वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तद्वर्च एवैतदुपैति व्वर्चस्वी भूया ऽइति नो ह्यवर्चसो व्याप्त्या चनार्थो-

* 'यजत'—इति ग, घ।  † 'ददाति'—इति क।
‡ कुरुत—इति क, ख।

ऽस्ति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुः * ॥ १२ ॥

अथ प्रचो भूते। वैश्वानरं द्वादशकपालं पुरोडाशं निर्व्वपति वारुणं यवमयं चरुं ताभ्या मनूचीनाह्न वैकाभ्यां यजते समानबर्हिर्भ्यां वा ॥ १३ ॥

स यद्वैश्वानरो भवति। संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिः प्रजापतिरेव तद् भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा भूया ऽइति तथो ऽएवैष एतद् भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा भूया ऽइति † ॥ १४ ॥

अथ यद् द्वादशकपालो भवति। द्वादश वै मासाः संवत्सरस्य संवत्सरो वैश्वानरस्तस्माद् द्वादशकपालो भवति ‡ ॥ १५ ॥

अथ यद्वारुणो यवमयश्चरुर्भवति। तत्सर्व्वस्मा देवैतद् वरुणपाशात् सर्व्वस्माद् वरुण्यात् प्रजाः प्रमुञ्चति ता अनमीवा अकिल्विषाः प्रजाः

---

* 'यद्बभ्रुः'—इति ग।

† 'इति'—इति क।

‡ भवति—इति क।

प्रजायन्तेऽनमीवा अकिल्विषाः प्रजा अभि सूयाऽइति ॥ १६ ॥

ऋषभो व्वैश्वानरस्य दक्षिणा। संवत्सरो वै व्वैश्वानरः संवत्सरः प्रजापतिरृषभो वै पशूनां प्रजापतिस्तस्मादृषभो व्वैश्वानरस्य दक्षिणा कृष्णं व्वासो व्वारुणस्य तद्धि व्वारुणं यत् कृष्णं यदि कृष्णं न व्विन्देदपि यदेव किञ्च व्वासः स्याद् ग्रन्थिभिर्हि व्वासो व्वारुणं व्वरुण्यो हि ग्रन्थिः ॥ १७ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [२.५.] ॥

अथ त्रिषंयुक्तेष्टित्रयं विधित्सुः प्रथमं त्रिषंयुक्तं मनुक्रामति— "आग्नावैष्णव मिति। तद् विधत्ते— "तेन त्रिषंयुक्तेनेति *। त्रिभिस्त्रिभिः संयुक्तं [कर्म त्रिषंयुक्तम्], तेन यजेत। पुरुषप्राप्तिहेतुत्वमाह— "पुरुषानेवैतदिति। यतो देवा एतेन त्रिषंयुक्तेन सहायभूतान् कर्मकरान् पुरुषान् प्राप्तवन्तः, तथा यजमानोऽपि तथाविधान् पुरुषान् अनेन यागेन प्राप्नोतीत्यर्थः ॥ १ ॥

त्रीणि हवींषि विभज्य स्तौति— "स यदाग्नावैष्णव इति। 'वैष्णवाः पुरुषा इति। विष्णोरवतारस्वीकारेण मनुष्यसम्ब-

* का० श्रौ० सू० १५ २ १।

न्मात् मनुष्याः सर्वे 'वैष्णवाः' विष्णुधिष्ठिता इत्यर्थः । 'तत्' तथा सति 'अग्नि' यजमानाय आग्नावैष्णवयागेन 'दाता अग्निः' विष्णुाश्रयाम् 'पुरुषान्' ददातीत्यर्थः ॥ २ ॥

प्रयोजन माह—'अथ यदैन्द्रावैष्णव इति ० ॥ ३ ॥

"अथ यद् मैन्द्र इति । "तेष्वेवैतदन्तत इति । 'अन्ततः' अवसाने केवलवैष्णवयागेन 'तेषु' अग्निदत्तेषु स्वसम्बद्धेषु विष्णुात्मकेष्वेव पुरुषेषु प्रतिष्ठितो भवति । अथ पुरुषप्राप्तेः फल माह— "यद्वै पुरुषवानिति । यतः पुरुषमवायवानेव 'कर्म' कर्तुं मिच्छति, 'शक्नोति' च ; अतः 'तत्' तेन प्रथमेन त्रियंशुक्तेन 'पुरुषानेव' प्राप्नोति । तस्य दक्षिणां विधाय स्तौति— "तस्य वामन इति । 'वामनः' ह्रस्वाङ्गः । यतो वामनो विष्णुसम्बन्धी, अतो वैष्णवयागे दक्षिणात्वेन भवितुं युज्यत इत्यर्थः † ॥ ४ ॥

द्वितीय निरुक्तिं विधत्ते— "अथापरेणेति । अस्य निर्युक्तस्य पशुप्राप्तिहेतुता माह— "पशूनेवेति । पूर्ववद् योज्यम् । अत्र विष्णुस्थाने पूषैव विशेष ॥ ५ ॥

"स यदाग्नापौष्ण इति । "पौष्णाः पशव इति । पूषा हि पशूना मुत्पादकः, अतस्ते पौष्णाः । श्रूयते हि—"पूषा पशूनां प्रजनयितेति ‡ ॥ ६ ॥

"अथ यत् पौष्ण इति । "अथैतस्य दक्षिणां विधत्ते—

---

* तै० सं० १ ८ ८, तै० ब्रा० १.७ २ ।

† "आग्नावैष्णव ऐन्द्रावैष्णवो वैष्णवो वामनो दक्षिणा"—इति का० श्रौ० सू० १५ १ १२ ।

‡ तै० ब्रा० १ ७ २ १ द्रष्टव्यम् ।

"तस्य श्याम इति। श्यामो गौरिति * 'यत्', स हि 'पौष्णः' पूषदेवतात्मकः। तदेवोपपादयति— "द्वे वा इति। श्यामवर्णस्य शुक्लकृष्णात्मकद्विरूपयोगात्। द्वित्वसङ्ख्याद्वारा पूषरूपता माह— "इमे वा इति। लोके हि स्त्रीपुरुषात्मकं 'द्वन्द्वं' 'मिथुनं' परस्परं संसृष्टं तत् 'प्रजननं' प्रजोत्पत्तिकारणम्; पूषाऽपि तदेव स्वरूप मिति तत्सृष्टाः पशवोऽपि पूषैव। यतः पूषात्मकाः 'पशवः', तेऽपि 'प्रजननं' प्रजोत्पत्तिनिमित्तम्; अतः शुक्लकृष्णात्मकस्य श्यामस्य गोर्दानेन पश्वुत्पत्तिनिमित्तं मिथुन मेव सम्पादितं भवतीत्यर्थः; अतः पशुकामो यागे दक्षिणात्वेन युज्यत इत्यर्थः. † ॥ ८ ॥

तृतीयं त्रिषंयुक्तं विभजते— "अथापरेणेति। तस्य वर्णसाधनतामाह— "बभ्रुं एतेनादिति। 'बभ्रुः' सारः' तेजः। अस्य धिष्ण्यस्थाने सोमो विशेष. ॥ ९ ॥

"स यदाग्नीषोमीय इति। "बभ्रुः सोम इति। सोमस्य यागद्वारा ब्रह्मवर्चसनिमित्तत्वात् तादात्म्यव्यपदेश। अन्यत् पूर्ववद् योज्यम् ॥ १० ॥ ॥ ११ ॥

"अथ यत् सौम्य इति। "नो ब्रह्मवर्चस इति। 'ब्रह्मवर्चस' शब्दस्य यद्यपि 'ख्यातिः' सर्वपदार्थव्यापकत्वस्तीरस्ति, 'धन' शब्दोऽप्यर्थे, तथापि तया 'ख्याता' यदि 'न' खलु

* "अनिरुक्तपशुर्गौ, सर्वत्र"— इति का० श्रौ० सू० १५ २ १६। 'यत्र जातिरूपं लिङ्गं न गृह्यते तत्र सर्वत्र गोशानिर्देशः'— इति भाष्य कर्काचार्य.।

† "श्यामगौः ऐन्द्रापौष्णः पौष्णः श्यामो दक्षिणा"— इति का० श्रौ० सू० १५ २ १८

'अर्थं' प्रयोजनं विद्यते इति। तस्य दक्षिणां विधत्ते— "बभ्रुर्दक्षिणेति*। 'स हि सौम्य' इति 'बभ्रु' भवत्येव, "एतद्वै सोमस्य रूपम्"-इति श्रवणात् † ॥ १२ ॥

अथानन्तरदिवसकर्त्तव्यं हविर्द्वयेन यागं विधत्ते— "अथ श्वोभूत इति। 'अनूचीनाह्नमिति। अनूचीने पूर्वापरीभूते अहनी 'अनूचीनाहम्', क्रियाविशेषणमेतत्। वैश्वानरेष्ट्या पूर्वस्मिन् दिने यजेत, वारुण्या अपरस्मिन् दिने। एवं भिन्नतन्त्रावेतौ यागौ कार्यौ। एकस्मिन्नेवाहनि वा समानतन्त्राभ्यां यष्टव्यमित्याह— "समानबर्हिर्भ्यामिति। बर्हिरुपलक्षितं ज्ञातं तन्त्रं समानं साधारणं ययोः ते समानबर्हिषी ॥ अत्र सूत्रम्— "श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे, द्वौ वैके"-इति च ॥ १३ ॥

प्रथमस्य हविषो वैश्वानरदेवताकत्वं प्रशंसति— "स यद् वैश्वानर इति। अग्नेः संवत्सरात्मकस्य मुख्याग्नेः संवत्सरत्वादिति षष्ठे काण्डे समाम्नास्यते §। भूमानं प्रजा इति। भूयसीं प्रजां इत्यर्थः ॥ १४ ॥

कपालसङ्ख्यां प्रशंसति— "अथ यद् द्वादशकपाल इति। वैश्वानराग्नेः संवत्सरात्मकत्वात् तस्य मासद्वादशकरूपत्वात् तदीयस्य हविषः कपालेषु द्वादशसङ्ख्या युज्यत इत्यर्थः ॥ १५ ॥

---

* "वास्नाषोमीय ऐन्द्रासौम्य सौम्यो बभ्रुर्दक्षिणा" इति का० श्रौ० सू० १५ २ १५ तै० स० १ ८ ८ तै० ब्रा० १ ७ २।

† तै० स० २ १ ३ १०। सप्तम्यो—इति तत्रैव।

‡ का० श्रौ० सू० १५ २ १८ १९। तत्रैको वाक्य।

§ संवत्सरोऽग्निः -इत्यादिकं ६का० ३अ० ४ब्रा० १२क० द्रष्टव्यम्।

द्वितीयं हविः प्रशंसति— 'अथ यद् वारुण' इति। "तत्सर्वस्मादिति। 'तत्' तत्र 'एतत्' एतेन वारुणयागेन सर्वस्मादेव 'वरुणपाशात्', तथा 'वरुण्यात्' वरुणपाशप्रसक्तात् सर्वस्माद् दुःखात् 'प्रजाः' 'प्रमुञ्चति' ॥ १६ ॥

अनयोर्हविषोः क्रमेण दक्षिणा अभिधाय प्रशंसति— "ऋषभ इति। "ऋषभो वै पशूनां प्रजापतिरिति। यतो वैश्वानरः परम्परया 'प्रजापतिः', ऋषभोऽपि पशूनां पतित्वात् प्रजापतिः ; अतो वैश्वानरदेवताकयागस्य दक्षिणात्वेन युज्यत इत्यर्थः। "तद्धि वारुण मिति। रात्र्यभिमानिदेवता वरुणः, रात्रिश्च कृष्णवर्णा, अतो लोकेऽपि यत् कृष्णं तद् वारुण मित्याह। कृष्णवस्त्राभावे वर्णान्तरयुक्तं 'वास' एव मिष्टतम् *। तस्योपाध्यन्तरेण वरुणसम्बन्धित्व मुपपादयति— 'ग्रन्थिभिरिति। ग्रन्थिमान् पाशः, पाशो हि वरुणस्येति तस्योग्यत्वम्। अत्र दक्षिणाभेद इष्ट्योर्भिन्नतन्त्रत्वे वेदितव्यः। समानतन्त्रत्वे हि एकेनैव द्रव्येण परिक्रीता ऋत्विजः कृत्स्नं प्रयोगजातं कुर्वन्तीतीतरवैयर्थ्यम्। तदुक्तं कात्यायनेन— "तन्त्रभेदे चैतद् भवति, एकतन्त्रे तु चोदकपरिमाणोऽन्यार्थे"—इति † ॥ १७ ॥ ॥ [ २ ५ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥

---

* "ऋषभः पूर्वस्य दक्षिणा कृष्णं वास उत्तरस्य, अभावे इतरत्म्"—इति का० श्रौ० सू० १५ २ १०।

† १५ २ १० सूत्रमिदम्

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् * पञ्चसीरीं-†-सिद्धशतकल्पताधेनुसौवर्णभूमीः ।
रत्नोस्रा हेमवाजिद्विपसहितरथौ साधयित्वा ‡ सिद्धपात्रीं §,
छायापौटिमचक्रं ग्रथितविधिमहाभूतघटं च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुल, स्वर्णकं वर्णमुख्य.,
कार्पासीयं क्षमायाम् गुडकृत मजडो ‖ राजत राजपूज्यः ।
माण्डौत्थ प्राज्यजन्मा ¶ लवणज मकृत: शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिद्धपार्थः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥

---

* 'सप्ताम्भोन्'—इति ट (१) । † 'सप्तसीरीं'—इति ढ ।
‡ 'साधयन्' स्यात् । § स्यात् 'सिद्धपात्रीं' ?
‖ 'मण्डं'—इति ढ । ¶ 'शाल्यद्रिर्'—इति ढ ।
(१) ढ इति प्रथमकाण्डीयमध्याध्यायोत्तरं लिखितं द्रष्टव्यम् ।

(अथ तृतीयाध्याये प्रथमं ब्राह्मणम्।)

अरण्योरग्नी समारोह्य। सेनान्यो गृहान् परेत्याग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निर्व्वै देवतानामनीकꣳ सेनाया वै सेनानीरनीकं तस्मादग्नयेऽनीकवत एतद्वा अस्यैकꣳ रत्नं यत् सेनानीस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा * ॥ १ ॥

अथ श्वो भूते। पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्व्वपति बृहस्पतिर्व्वै देवानां पुरोहित एष वा एतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा अस्यैकꣳ रत्नं यत् पुरोहितस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऊर्ध्वा बृहस्पतेर्दिगेतदेष उपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा † ॥ २ ॥

* १ 'दक्षिणा'—इति क, ख।

अथ श्वो भूते। सूयमानस्य गृह ऽऐन्द्र मेकादशकपालं पुरोडाशं निर्व्वपति क्षत्रं वा ऽइन्द्रः क्षत्रᳪ सूयमानस्तस्मादैन्द्रो भवति तस्य ऽर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः * ॥ ३ ॥

अथ श्वो भूते †। महिष्यै गृहान् परेत्य आदित्यं चरुं निर्व्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा ऽएतस्य पत्नी भवति तस्मा-दादित्यो भवत्येतद्वा ऽअस्यैतᳪ रत्नं यन्महिषी तस्या ऽएवैतेन सूयते ताᳪ स्वामनपक्रमिणीं कुरुते तस्यै धेनुर्दक्षिणा धेनुरिव वा ऽइयं मनु-ष्येभ्यः सर्व्वान् कामान् दुहे माता धेनुर्मातेव वा ऽइयं मनुष्यान् बिभर्ति तस्माद्धेनुर्दक्षिणा ‡ ॥ ४ ॥

अथ श्वो भूते। सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्व्वपति सवो वै सूतः सवो वै देवानां वरुणस्तस्माद्वारुणो भवत्येतद्वा ऽअस्यैकᳪ रत्नं यत् सूतस्तस्मा ऽएवैतेन सूयते

* यदृषभ.'—इति ग। 'यदृषभ.'—इति घ।
† 'भूते—इति ख। भृत'—इति ग।
‡ दक्षिणा'—इति क, ख।

तं स्वमनपक्रामिणं कुरुते तस्याश्वो दक्षिणा स हि वारुणो यदश्वः* ॥ ५ ॥

अथ श्वो भूते । ग्रामण्यो गृहान् परेत्य मारुतं सप्तकपालं पुरोडाशं निर्व्वपति विशो वै मरुतो वैश्यो वै ग्रामणीस्तस्मान् मारुतो भवत्येतद्वा ऽअस्यैकं रत्नं यद् ग्रामणीस्तस्मा ऽएवैतेन सूयते तं स्वमनपक्रामिणं कुरुते तस्य पृषन् गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत् पृषतो गोर्भूमो वै मरुतो भूमो वै विट् तस्मात् पृषन् गौर्दक्षिणा† ॥ ६ ॥

अथ श्वो भूते । क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात् सावित्रो भवत्येतद्वा ऽअस्यैकं रत्नं यत् क्षत्ता तस्मा ऽएवैतेन सूयते तं स्वमनपक्रामिणं कुरुते तस्य श्येतो ऽनड्वान् दक्षिणैष वै सविता य एष तपत्येति वा ऽएष एत्यनड्वान्

---

* 'यदश्वः'—इति क, यदश्वः—इति ग, 'यदश्वः'—इति घ।

† 'दक्षिणा'—इति क, ख।

युक्तस्तद्यच्छ्वेतो भवति श्वेत इव ह्येष उद्यं-श्चास्त च यन् भवति तस्माच्छ्वेतो ऽनड्वान् दक्षिणा * ॥ ७ ॥

अथ श्वो भूते। सङ्ग्रहीतुर्गृहान् परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति सयोनी वा ऽअश्विनौ सयोनौ सव्यष्टृसारथी समानं हि रथ-मधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वा ऽअस्यैकं रत्नं यत् सङ्ग्रहीता तस्मा ऽएवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनौ यद्यमौ यदि यमौ न विन्देदु-प्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ता ऽउ ह्यपि समानयोनी ॥ ८ ॥

अथ श्वो भूते। भागदुघस्य गृहान् परेत्य पौष्णं चरुं निर्वपति पूषा वै देवानां भाग-दुघ एष वा ऽएतस्य भागदुघो भवति तस्मात् पौष्णो भवत्येतद्वा ऽअस्यैकं रत्नं यद्भागदुघस्तस्मा ऽएवैतेन सूयते तं स्वमनपक्रमिणं कुरुते तस्य

---

* दक्षिणा—इति क ख।

श्यामो गौर्दक्षिणा तस्यासावेव बन्धुर्यो ऽसौ त्रिषं-
युक्तेषु * ॥ ९ ॥

अथ श्वो भूते †। अक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्व्वपति ते वा ऽएते द्वे सती `ले ऽएकं करोति सम्पदः कामाय तद्यदेतेन यजते यां वा ऽइमाᳪ सभायां घ्नन्ति रुद्रो हैनामभिमन्यते ऽग्निर्व्वै रुद्रो ऽधिदेवनं वा ऽअग्निस्तस्यैते ऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वा ऽएषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतदा- ऽमप्येकं रत्नं यदक्षावापश्च गोविकर्त्तश्च ताभ्या मेवैतेन सूयते तौ स्वावनपक्रमिणौ कुरुते तस्य द्विरूपो गौर्दक्षिणा शितिबाहुर्वा शितिवालो वासिर्नखरो वालदामाक्षावपनं प्रबद्ध मेतद्ध्वि मयोर्भवति ‡ ॥ १० ॥

---

* 'त्रिषयुक्तेषु'—इति क त्रिषंयुक्तेषु'—इति ग त्रिषयुक्तेषु'—इति घ।

† 'भूते'—इति क, ख। 'भूते'—इति ग।

‡ भँवति—इति क।

अथ श्वो भूते। पालागलस्य गृहान् परेत्य चतुर्गृहीतमाज्यं गृहीत्वाध्वन आज्यं जुहोति जुषाणो ऽध्वाज्यस्य वेतु स्वाहेति प्रहेयो वै पालागलो ऽध्वानं वै प्रहित एति तस्मादध्वन आज्यं जुहोत्येतद्वा ऽअस्यैकए रत्नं यत् पालागलस्तस्माऽएवैतेन सूयते तए स्वमनपक्रमिणं कुरुते तस्य दक्षिणा पृष्ठावेष्टितं धनुश्चर्ममया वाणवन्तो लोहित उष्णीष एतद्धि तस्य भवति ॥ ११ ॥

तानि वा ऽएतानि *। एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुब् वीर्यं त्रिष्टुब् वीर्यमेवैतद्रत्नान्यभिसम्पादयति तद्यद्रत्निनाए हविर्भिर्यजत ऽएतेषां वै राजा भवति तेभ्य एवैतेन सूयते तान्स्वाननपक्रमिणः कुरुते † ॥ १२ ॥

अथ श्वो भूते। परिवृत्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्वपति या वा अपुत्रा पत्नी

* 'रत्नानि—इति म 'एतानि—इति च।

† कुरुत'—इति म, च।

सा परिवृक्ती स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुᳪ श्रपयति स जुहोत्येष ते निर्ऋते भागस्तं जुषस्व स्वाहेति या वा ऽअपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवास्या ऽअत्र नैर्ऋतᳪ रूपं तदेवैतच्छमयति तथो हैनᳪ सूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह मा मे ऽद्योशायां वात्सीदिति तत् पाप्मान मपादत्ते ॥ १३ ॥ ५ ॥

॥ इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् [३. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयाध्याये * प्रथमब्राह्मणे द्वादश रत्नहवींष्यनुदिनं क्रमेण कर्तव्यान्युच्यन्ते †। तत्र कात्यायनो नैर्ऋतहविषा द्वादश हवींषीति सूत्रितवान्— "द्वादशोत्तराणि रत्नहवींषि, प्रतिरुह

---

* एतत् पदं नास्ति क पुस्तके ।

† "रत्निनामेतानि हवींषि भवन्ति एते वै राष्ट्रस्य प्रदातारः"—इत्यादि तै० ब्रा० १. ७. ३ द्रष्टव्यम्

मेकैकं च: प्र., समारूढेऽग्नौ निर्मथिते ऽग्नये ऽनीकवते"– इत्यादि * । तत्र प्रथमं हविर्विधत्ते— "अरण्योरग्नी इति । 'अग्नी' गार्हपत्याहवनीयौ 'अरण्योः' पृथक् पृथक् 'समारोप्य' † प्रतिदिवसं तत्तद्गृहं गत्वा तत्र तत्र निर्मथ्य यष्टव्य मिति सर्वेष्टिसाधारण मिदम् ‡ ।

'सेनान्यः' सेनापतेः 'गृहान्' 'परेत्य' प्रथमं गत्वा 'अनीकवते' अनीकवद्गुणकाय 'अग्नये' अष्टाकपालेन पुरोडाशेन प्रयजेत् । सेनानीगृहे अनीकवद्गुणकाग्निदेवत्यहविरनुष्ठाने कारण माह— "अग्निर्वा इति । देवानाम् 'अनीकं' मुखम् 'अग्निः', 'सेनाया' 'अनीकं' मुखं 'सेनानीः' । अस्य रत्न हविष्ट्व मुपपादयितु माह— "एतद्वा इति । "सेनानीरिति । 'एतत्' खलु 'अस्य' राज्ञो यजमानस्य 'एकं' 'रत्नं' रत्नवत् प्रशस्तं हविर्यजनीयं वस्तु, 'एतेन' तस्य गृहेऽनुष्ठितेनाग्नेय-यागेन 'तस्मै' सेनान्ये 'सूयते', तेनानुज्ञायत इत्यर्थः । तद्-गृहगमनेन 'तं' सेनान्यं 'स्वम्' आत्मीयम् 'अनपक्रमिणम्' अनतिक्रामिणं कृतवान् भवतीति । एव मुत्तरत्रापि व्याख्येयम् § ।

दक्षिणां विधत्ते— "तस्य हिरण्य मिति ‖ । 'तस्य' अग्निदेवताकस्य यागस्य अग्निरेतोरूपं 'हिरण्यं' दक्षिणात्वेन युक्त मित्यर्थः । हिरण्यस्याग्निरेतस्त्व माम्नायते— "आपो वरु-

---

* का० श्रौ० सू० १५ ३ १, २, ३ ।

† 'संरोप्य'—इति च । 'समारोह्य'—इति मूलपाठः ।

‡ इष्टेवात्रपदपस्सास्यानां सर्वेष्वेवं बोध्य मिति भावः ।

§ तै० सं० १ ८, ९ ४ विशेषत व्याख्यातम् ।

‖ का० श्रौ० सू० १५ ३, १० ।

यस्य पत्नय आसन् , ता अग्निरभ्यध्यायत् , ता समभवन् , तस्य रेत परापतत् , तद्धिरण्यमभवत्"–इति * ॥ १ ॥

द्वितीयदिवसेऽनुष्ठेय रत्नहवि विधत्ते— "अथ श्वोभूत इति । पुरोहितस्य गृहे बार्हस्पत्यचरुप्रचारे † उपपत्ति माह— "बृहस्पतिर्वै देवाना मिति । बृहस्पतेर्देवपुरोहितत्वात् तद्देवत्यो याग पुरोहितगृहे कर्त्तुं मुचित इत्यर्थं । "एताः इत्यादि , गतम् ॥

दक्षिणां विधत्ते— "तस्य शितिपृष्ठ इति । श्वेतपृष्ठ । तत् प्रशंसति—"ऊर्ध्वे ति । 'ऊर्ध्वा दिक्' बृहस्पतिदेवताका , तस्या उपरिभागे 'अर्यम्ण ' सूर्यस्य 'पथ ' परिदृश्यमान 'पन्था ' मार्गं । स च निरन्तरमस्मात् श्वेत । यतो ह्यत्र अतिवागदक्षिणाभूतस्य गो श्वेतपृष्ठत्व युक्तम् ‡ ॥ २ ॥

तृतीयदिवसे कर्त्तव्यं याग विधत्ते— "अथ श्वोभूते इति । "सूयमानस्येति । सुन्वतो यजमानस्यैव 'गृहे'। अत एवा स्मिन् पर्याये यतश्च यपीत एतम्"–इत्यादिवाक्यानुपन्यास § । सूयमानपद यजमानवाचक मित्यभिप्रेत्य सूत्रकृता यजमानपद मेवोक्तम्— "ऐन्द्रो यजमानस्य"–इति ‖ । "क्षत्र वा इत्यादि ।

---

* तै० ब्रा० १ १ ३ ८ । 'आपो •—• परापतत , तद्धिर अभ वत् –इति तु मै० स० १ ५ ३ १ ।

† "बार्हस्पत्यश्चरु पुरोहितस्य"–इति का० श्रौ० सू० १५ ३ ७ ।

‡ का० श्रौ० सू० १५ ३ १८ । तै० स० १ ८ ९ १ ।

§ स्मिन्नेव ब्राह्मणे पुरस्ताद् (१८३पृ० ४प० ) द्रष्टव्यम् ।

‖ का० श्रौ० सू० १५ ३ ५ ऐन्द्र एकादशकपाल –इत्यादि कल । तै० स० १ ८ ९ १ ।

इन्द्रयजमानयोरेकजात्यभिसम्बन्धात् यजमानस्य गृहे ऐन्द्रस्य हविषो निर्वापो युक्त ॥

दक्षिणां विधत्ते— "तस्य ऋषभ इति*। "स ह्यैन्द्र इति। "वागृषभ्या ऐन्द्र"-इति† भाग्यात्मकत्वात् तस्य ऋषभस्यैन्द्रत्व प्रसिद्ध मिति 'हि' शब्दस्यार्थः ॥ ३ ॥

चतुर्थदिवसकर्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति। "महिष्या इति‡। कृताभिषेकस्य राज्ञो मुख्या स्त्री महिषी, तस्या गृहे। षष्ठ्यर्थे चतुर्थी। "इयं वै पृथिवीति। देवानां हविषामादानद्वारा भोग्यत्वात् पृथिव्यात्मिकाया अदितेर्देवपत्नीत्वम्। "तस्मादिति। यस्माददितेर्देवपत्नीत्वम्, 'तस्मात् तद्देवत्यहविषः पत्नीगृहे निर्वापो युक्त इत्यर्थः ॥

दक्षिणां विधत्ते— "तस्यै धेनुरिति§। 'तस्यै' अदित्यै, तद्देवत्यस्य यागस्येत्यर्थः। 'धेनुरिव वा इति। यथा 'धेनु' क्षीरादिकयान् सर्वान् कामान् दोग्धि, एवम् 'इयं' पृथिव्यात्मिका अदिति 'मनुष्येभ्य' सर्वान् 'कामान्' 'दुहे' दुग्धे। दुहि "लोपस्त आत्मनेपदेषु"-इति|| तलोपः। 'धेनु' हि 'माता' वत्सप्रसूतत्वात्, तथा 'इयं' भूमिरपि 'माता' 'मनुष्यान्' 'बिभर्ति' धारयति। 'तस्मात्' उक्तोक्तरीत्या अदितिर्देवता, तत्सम्बन्धात् आदित्यचरौ धेनुर्दक्षिणात्वेन युज्यते¶ ॥ ४ ॥

---

* का० श्रौ० सू० १५ ३ १८।
† पुरस्तात् ( २६४पृ० ३पं० ) द्रष्टव्यम्।
‡ का० श्रौ० सू० १५ ३ ६
§ का० श्रौ० सू० १५ ३ २०। || पा० सू० ७ १ ४१।
¶ तै० ब्रा० १ ८ ३ ७ अप्यत्र ज्ञेयं।

पञ्चमदिवसे कर्त्तव्या मिष्टिं विधत्ते — × × × ॥ ५ * ॥

[ षष्ठदिवसे कर्त्तव्या मिष्टिं विधत्ते † — ] "अथ ग्रामण्य इति । 'ग्रामण्यः' ग्रामं नयतीति ग्रामणीः, वैश्यानां महत्तरः तस्य 'गृहान्'। मरुतां सप्तगणात्मकत्वात् तद्देवत्यहविषः सप्तसु कपालेषु श्रपणं युक्त मित्याह— "सप्तकपाल मिति। ग्रामणी-गृहे मारुतकरणे युक्तवैश्यत्वनिबन्धनत्व मित्याह— "विशो वा इति। 'विशः' प्रजाः देवाना मिति शेषः ॥

मारुतस्य दक्षिणा विधत्ते— "तस्य पृषन्निति ‡। 'पृषन्' बिन्दुमान्, श्वेतरक्तादिबिन्दुयुत इत्यर्थः। पृषत्वं प्रशंसति— "भूमा वा इति। 'पृषत'-इति पञ्चम्यन्तं गोविशेषणम्। पृषतो गोर्यदस्ति एतद् रूपाणां भूमा इति पदयोजना। तादृश्यां गवि नानाविधवर्णानां सद्भावात् रूपबाहुल्य मित्यर्थः। भूमान-मेवावरुन्ध्य विचित्रवर्णस्य गोर्मारुतहविर्योग्यता माह— "विशो वा इति। "भूमो वा इति। भूमा वै इति। भूमरूपैव खलु वैश्यजाति ॥ ६ ॥

सप्तमदिवसकर्त्तव्या मिष्टिं विधत्ते— "अथ क्षत्तुर इति §।

---

* मत्सम्पादितानां चतुर्णां भाष्यपुस्तकानां मेकतमेऽपि एत दनतरस्य पाठः पञ्चमकण्डीव्याख्यानस्यो नावलोक्यते, लिपिकरप्रमाद एवात्र हेतुः स्यात्।

† का० श्रौ० सू० १५ । ३ । ८ सूत्रे षष्ठदिवसे ग्रामण्यो विहित इतीयमिष्टिः षष्ठदिवसे पूर्वपूर्वक्रमया सम्भाव्यते, व्याख्याने तु नास्ति।

‡ का० श्रौ० सू० १५ । ३ । २२। 'पृषन् = विपिनो गौः षष्ठे'— इति च तत्र कर्क.। तै० स० १ । ८ । ९ । ७ ।

§ का० श्रौ० सू० १५ । ३ । ९ ।

"क्षत्तुर्गृहानिति । क्षत्ता नाम अधिकृतोऽन्तःपुराध्यक्षः, सर्वेषां नियन्ता, प्रतिहारापरपर्यायः * । 'सावित्रं' सवितृदेवत्यम् । क्षत्तुः सवितुश्च प्रसवितृत्वं साधारणो धर्म इत्याह— "सविता वै देवानामिति ॥

द्वितीयां विधत्ते— "तस्य श्वेत इति । 'श्वेतः' † शुक्लवर्णः 'अनड्वान्' ‡ । श्वेतस्यानडुहः सवितृसम्बन्धं आह— "एष वा इति । 'यः' 'एषः' सूर्यः 'तपति', 'एषः' 'वै' खलु 'सविता', स च सूर्यः, 'इति' प्रकर्षप्रकाशादिना जगन्निर्वाहं कुर्वन् सर्वदा सञ्चरति; 'अनड्वान्' अपि शकटरथवहनादौ 'युक्तः' सन् सर्वत्र गच्छति, अतो गन्तृत्व मुभयोः साम्यहेतुः साधारणो धर्मः । श्वेतत्वमनूद्य स्तौति— यच्छ्वेत इति । 'एषः' सूर्यात्मकः सविता 'उद्यन्' उदयम् 'अस्तं यन्' च' उदयास्तमयकालेषु 'श्वेतः' शुक्लो वर्णः 'इव हि भवति' ॥ ७ ॥

अष्टमदिवसकर्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति । "संग्रहीतुर्गृहानिति § । संग्रहीता नाम रथयोजयिता । 'आश्विनम्' अश्विदेवत्यम् । संग्रहीतृगृहे आश्विनहविषो निर्वापे कारणं आह— "सयोनी इति । 'हि' यस्मात् 'सव्येष्ठ-सारथी' सव्येष्ठृपदेन संग्रहीतोच्यते, 'स' च सारथिश्च 'सयोनी' समानस्थानौ, एवम् 'अश्विनौ' अपि 'सयोनी' सहोत्पन्नौ । तौ

---

* 'अन्तर्वेश्मिके । क्षत्ता दूतौ च । अभिसार्यां शूद्राज्जातः क्षत्ता'—इत्यादिः कोशीयप्रतिपत्तयः ।

† अत्र श्वेतश्चेव श्वैतेति मूलपाठः श्वेतेति भाष्यस्येति ।

‡ का० श्रौ० सू० १५. ३. ११ । तै० सं० १. ८. ९. ८ ।

§ का० श्रौ० सू० १५. ३. १० । तै० सं० १. ८. ९. ९ ।

द्विविधौ 'समानम्' एकं 'रथम्' 'अधितिष्ठतः'; "युवं कवी ष्ठः पर्यश्विना रथम्"—इति श्रवणात् * ॥

आश्विनस्य हविषो योग्यदक्षिणां विधत्ते— "तस्य यमाविति। यमौ सहैवैकस्या मातुर्गर्भादुत्पन्नौ †। यमयोरभिमान्य माह— "तौ हि सयोनी इति। यमयोरलाभे पश्चात् आह— "यदि यमाविति। 'अनूचीनगर्भौ' अनुक्रमेण पौर्वापर्येण जातगर्भौ। तयोरपि समानयोनित्वं दर्शयति— "ता उ हीति। यौ क्रमेणोत्पन्नौ 'तौ उ अपि हि' 'समानयोनी' मध्ये गर्भान्तरेणाव्यवहितत्वात् ‡ ॥ ८ ॥

नवमदिवसकर्तव्यां इष्टिं विधत्ते— "अथ श्वोभूत इति। "भागदुघस्य चरुमिति §। यो राज्ञः भाग्यं ‖ षष्ठं भागं प्रजाभ्यो गृहीत्वा राज्ञे दोग्धि प्रयच्छति, स भागदुघः ¶। "पूषा वा इति। 'पूषा' नाम मार्गसंरक्षको देवः, 'देवानां' 'भागदुघः' भागं दोग्धि, स हि यजमानदत्तानि हवींषि मार्गे रक्षोभ्यः संरक्ष्य तान् ** देवान् प्रापयतीत्यर्थः †† ॥

पौष्णं चरुयागे श्यामवर्णां गां दक्षिणां विधत्ते— "तस्य

---

* ऋ० सं० १० ४० ६।

† का० श्रौ० सू० १५ ३ २४। 'यमजातौ द्वौ गावौ'—इति कर्कः।

‡ का० श्रौ० सू० १५ ३ २५।

§ का० श्रौ० सू० १५ ३ ११।

‖ 'ग्राम'—इति च, ज।

¶ 'भागदुघो भोजयिता। परिवेष्टा, भाग अंशं दोग्धीति'—इति च का० द०।

** 'सांख्यान्'—इति च।

†† इहैव पुरस्तात् २ प्र. ८ (१५४पृ० द्रं) द्रष्टव्यम्।

श्याम इति *। श्यामलश्यावक मतिदिशति— "तस्यासा विति। 'मन्त्रं' वाक्यशेष। का पुनरसाविति॥ माह— "यो ऽसौ विषमुक्तेष्विति। विषमुक्तानि उक्तानि तत्र द्वितीये पौष्णचरोर्दक्षिणात्वेन विहितस्य यो श्यामलश्यावक, 'स हि पौष्णो यच्छ्यामो है वै श्यामस्य रूपे इत्यादि †' यो वाक्यशेष, सोऽत्रापि समान इत्यर्थ ॥ ८ ॥

यजमानगृहे कर्त्तव्य दशम रत्नहविर्विधत्ते— "अथ ग्रो भूत इति ‡। अक्षावाप नाम अक्षाणां वेप्ता, अक्षगोप्ता वा द्यूतकार, 'गोविकर्त्त' सगयासहायभूतो यो-हिंसको व्याध, तयोरुभयोर्गृहेभ्यो 'गवीधुका' § आरण्यगोधूमान् 'सम्भृत्य' तैं रुद्रदेवत्य चरु 'भूयमानस्य' यजमानस्य 'गृहे' निर्वपेद् ॥। उभयोर्गृहेभ्यो गवीधुकानां युगपत् सम्भरण प्रशसति— 'ते वा इति। अक्षावाप गोविकर्त्त रूपयोर्द्वयो रतोरुभयोरेकत्रकारण सम्पदेतुरित्यर्थ। 'सम्पद' कामाय' सम्पद्रत्नसिद्ध्यर्थ मिति। अक्षावाप गोविकर्त्तसम्भृतेरेवा रण्यगोधूमै रौद्रचरु कर्त्तव्य इत्यत्रोपपत्ति माह— "स वा

---

* का० श्रौ० सू० १५ ३ ११ तै० स० १ ८ ६ १०।

† इहैव पुरस्तात् २ ३ ८ ( पृ १४४ १२प० ) द्रष्टव्यम्।

‡ तै० स० १ ८ ६ ११।

§ गवेधुका —इति मूलपाठ।

॥ 'द्यूतकारक —इति द्यूताध्यक्ष —इति च एव 'गोविकर्त्त कण्टक अथवा गोहिंसको व्याध —इति च तथा 'गवधुकाशीर्ष्टि मथो ठयविशीर्षे ब्राह्मणादि गोधूमप्रायाणि फलानि कर्षता लोक प्रसिद्धानि —इति चैतत् सर्व का० श्रौ० १५ ३ १२ सूत्रव्याख्यायाम्।

इमा मिति। 'सभायां' सभास्थले द्यूतस्थाने 'याम् इमाम्' पणत्वेन कृत्वा या 'घ्नन्ति' जितवा *। अत एव चतुर्थाध्याये आम्नास्यते— "एतैश्चैवाह गा दीव्यध्व मिति"–इति †। तत्र सूत्रम्— "गा अस्थानीय घ्नन्ति"–इति ‡। तत्र ताम् 'एता' 'रुद्र अभिमन्यते', क्रूरकर्मत्वात्। स तत्र रुद्र परम्परया § अधिदैवतात्मक ‖ इत्याह— "अग्निर्वै इति। अग्निरेव खलु रोदनाद्रुद्रनामा सम्पन्न। अतएव तैत्तिरीयके अग्नि मधुत्पत्यातम्— "सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्"–इति ¶। स च 'अग्नि' 'अधिदेवम्' द्यूताधिकरण स्थानम्, अधिदेवनात्मकत्वात्। अक्षावापद्वारा 'स एव' अधिदेवनात्मक रुद्रम् 'एतेन' अक्षावापस्य गृहादानीतगवीधुक निष्पन्नहविषा 'प्रीणाति' तर्पयति। "तस्य ह वेत्यादि। 'यो राजसूयेन यजते', 'यो वा' 'एतम्' एतं राजसूयप्रयोग 'वेद', 'तस्य रुद्रेषु' 'अनुमता' अध्वर्युप्रभृतिभिरनुज्ञाता सती 'गौ हन्यते' गोविकर्त्तेन हिंस्यते, अतो गोविकर्त्तगृहादानीतगवीधुका इमनाभिमानिनो रुद्रस्य हविर्द्रे योग्या इत्यर्थः॥

तस्य रौद्रहविषो दक्षिणां विधत्ते— "तस्य द्विरूप इति **। 'मितिबाहु' श्वेतबाहु 'वा' भवेत्, श्वेतवालो 'वा', आशी

---

* ६ ५ २३ द्रष्टव्यम्।

† उपरिष्टात् ४ ४ २२ द्रष्टव्यम् "गो दीव्यध्व मित्याह"–इति च का० श्रौ० सू० १५ ३. १०।

‡ का० श्रौ० सू० १५ ७ १०।

§ परम्परा–इति च च। ‖ अधिदेवतात्मक–इति च।

¶ तै० स० १ ५ १ १। ** तै० स० १ ८ ६ ११।

वाले ■ श्वेतत्वम् , सर्वाङ्गे कृष्णवर्णं इति विकल्पत्वम् । दक्षिणा- न्तरं विधत्ते— "असिरिति । 'नखरो' ऽसि कोष' 'असि.' कृपाणः । 'वालदाम्ना रोमच्छेत्रा 'प्रवदम्' 'पक्षावपनं' पात्रम् ; यदा छम्यन्ते पक्षिमिति 'पक्षावपनम्' पक्षस्थानावपनं पात्रम् । एव गौ , असि , पक्षावपन मिति चीण्यपि समुदित्य दक्षिणेत्यर्थं । तथैव कात्यायन — "विदक्षिणो रौद्र , शिति- बाहुर्शितिवालयो रन्यतरः , असिर्नखरो , वालदामवद्ध पक्षा- वपनम्"–इति * । किमर्थं नखरोमाद्यपात्रदय दक्षिणात्वेनो- क्तं ? इति । तत्राह— "एतद्धु होति । 'तयो.' पक्षावाप नीविकर्तया तद् द्वय स 'भवति' एकैकस्यैकैक मस्ति ; अतोऽत्र तदुभयसम्बन्धात् तद् द्वयं दक्षिणात्वेन प्रयुज्यत इत्यर्थं. ॥ १० ॥

पूतक्रते कर्तव्य माज्यहोमरूप मेकादशं रत्नहविर्विधत्ते— "अथेति । पालागलो नाम दूत । तथैव कात्यायन. पाला- गलस्थाने दूतमन्द प्रयुक्तवान्— "चतुर्गृहीतं जुहोत्यध्वाध्वन्य वेत्विति दूतस्य"–इति † । आपस्तम्बेन तु यूपविधेयपरत्वेन व्याख्यात — "अध्वनी स्वाहेति पालागलस्य गृहे जुहोत्यनृत- दूत द्रुवते"–इति ‡ । 'पालागलम् अनृतवादिनं दूत मिति ब्रुवते आचार्या इत्यर्थं । अध्वदेवत्यचतुर्गृहीताज्यहोम एवैका- दश हविरित्यर्थं ॥

मन्त्रस्यार्थ ;— 'आज्यं जुषाण.' आज्यभागं सेवमान.

---

* का० श्रौ० सू० १५ । ३०–३१ ।

† का० श्रौ० सू० १५ ३ १३ ।

‡ आप० श्रौ० सू० १८ १० २५ । तत्र 'पालागलस्य —इति च पाठ. ।

'पथ्या' देवता 'आज्यस्य वेतु' आज्यं पिबतु । 'स्वाहा' सुहुत मस्तु 'इति' । द्वितयहेऽध्वदेवत्यहोमस्य उपपत्ति माह— "प्रहेय इति । 'पालागल.' दूत' 'प्रहेय" राज्ञा प्रेष्यः, प्रस्थापनीयः । प्रेष्यत्व मेवाह— "पथ्यान मिति । यर्हि तः प्रेषितः प्रस्थापितः सन् पन्थानं गच्छति, यतोऽध्वसम्बन्धात् तदुद्देशे होमः कार्यं इत्यर्थः ॥

तस्य होमस्य दक्षिणा विधत्ते— "तस्य दक्षिणेति । 'उष्ण-वेष्टितम्' 'उष्ण'-शब्देन * क्षाप्यभिधीयते, तन्निकारैः क्षायुभिः 'वेष्टितं' ग्रथितं 'धनुः', 'चर्ममयाः वाणवन्तः' इषुधयः, 'लोहित.' लोहितवर्णः 'उष्णीष' शिरोवेष्टनम् । एतत् सर्वं दक्षिणेत्याह— "एतद् होति । एतावदेव हि 'तस्य' दूतस्य स्वं 'भवति' † ॥ ११ ॥

एतेषां रत्नहविषाम् एकादश सङ्ख्या प्रशंसति— "तानि वा एतानीति । सङ्ख्यासाम्यात् त्रिष्टुप्त्वम् । त्रिष्टुभो वीर्यत्व मिन्द्रेण सहोत्पत्तेरित्यवगन्तव्यम् । 'एतत्' एतेन रत्नहविर्गुणा नेन यजमाने वीर्यं मेव सम्पादितवान् भवति । प्रकारान्तरेण तदेव प्रशंसति— "यद्वदिति । यथोक्ता सेनानीपुरोहित-महिष्यादयो रत्निनः ; तदभिमानिदेवताना भित्यर्थे तानि हवींषि ; यानस्तद्गृहेष्वेव कर्त्ता गत्वा निर्वपेत् । एतैः

* 'उष्णशब्देन'—इति घ। 'प्युष्य वेष्टित'—इति का० श्रौ० सू० १५. ३ ३१। 'प्युष्णशब्देन क्षायुभिधीयते, धनुगारचर्मत्सरे'—इति कर्कः । 'प्युष्णवेष्टितं कोशकारवेष्टितम् ( कोशकारः = धनुष' कोठीरचयिता ), मधुरपुष्पकोटि भिति केचित्—इति का० श्रौ० सू० दृत्तान्तरम् ।

† का० श्रौ० सू० १५ ३ ३१, ३९, ३२ ।

'रत्निना' हविर्नियोगेन सेनानी प्रभृतीनां रत्नानां स्वयं 'राजा' भवेत्। 'तस्य.' तत्सङ्ग्रहार्थम् 'एतेन' रत्नहविरनुष्ठानेन 'सूयते' प्रेर्यते ॥ १२ ॥

परिवृक्तिगृहे कर्त्तव्यं नैर्ऋतहविर्विधत्ते— "अथ श्वो भूत इति *। 'परिवृक्ति'-शब्दस्यार्थं माह— "या वा इति। 'अपुत्रा' राजपत्नी केवलं भोगार्था परिवृक्तिः †। हविषो द्रव्यं विदधच्चोदकप्राप्त मवघातं निषेधति— "स कृष्णाना मिति। नखैर्निर्भिन्ना कृष्णव्रीहीणां तण्डुलैः नैर्ऋतं चरुं निर्वपेत्। होमं समन्त्रकं विधत्ते— "स जुहोतीति। जुहोतिचोदितत्वात् स्वाहाकारप्रदानत्वार्थं होमो दर्विहोमः। कात्यायनेन च पदार्थं सूत्रितम्— "दर्विहोम एष ते निर्ऋते इति ‡ जुहोति, वषट्कृते वा"-इति §। परिवृक्तिगृहे नैर्ऋतचर्वनुष्ठानस्योपपत्ति माह— "या वा इति। अपुत्रा स्त्री न निर्ऋतिना ग्रस्तत्वात् भवति ॥

तस्य दक्षिणां विधत्ते— "तस्य दक्षिणा कृष्णा गौरिति। 'परिमूर्णी'। "मुर्छा मोहसमुच्छ्राययोः" ||। अस्मात् क्तिनि 'राल्लोपः'-इति ¶ छस्य लोपे, निष्ठा-नत्वे च कृते रूपम्। परिमूर्णा (पवमा **)। 'पर्यारिणी' पलित वार्त्तिमती,

---

* तै० सं० १. ८. ९. १।

† 'परिवृक्ता परिगता निकृष्टा ईकारश्छान्दसः, पुत्रादिभिः परित्यक्ता'—इति का० श्रौ० १५. ३. १४ सू० टी० देव०।

‡ वा० सं० ९. ३५. १।

§ का० श्रौ० सू० १५. ३. १४ १५। || भ्वा० प० ३० धा०।

¶ पा० सू० ६. ४. २१। ** इद मधिकं पदं न दृश्यते।

व्याधिस्तदीता केन चिदङ्गेन अपहता वा 'कृष्णा गौः, दक्षिणा'। अत्र सूत्रम्— "कृष्णापरिमूर्णपहृतोत्सन्नस्य"—इति *॥

तैत्तिरीयके तु परिवृक्त्यिष्टहकर्तव्यनैर्ऋतचरौ कृष्णा अत्र कूटा गौर्दक्षिणात्वेन युक्ता— "नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा"—इति †। 'कूटा' भग्नशृङ्गा इति हि व्याख्यातम्। दक्षिणाभूताया गोर्निर्ऋतचरुयोग्यता माह— सा ह्यपीति। जीर्णा निकृत्तपक्ष्मा गौः निर्ऋतिगृहीता भवति॥

इत्यन्ते किञ्चित् प्रसज्य विधत्ते— "तां माचेति। 'तां' परिवृक्तिम् 'आह' वदेत्। वाक्यस्याय मर्थः— 'अद्य' इदानीम् इत उप 'मे' मम 'इशायां' आस्ये 'मा वात्सीः' मद्भोग्या मा भूरित्यर्थः ‡। वचनं स्तौति—"तदिति। निर्ऋति गृहीता परिवृक्तिं प्रति एतेन वचनेन 'पाप्मानम् एव' अपा हते' अपगमितवान् भवतीति॥ १२॥ ४ [ ३ १. ]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम्॥

---

* का० श्रौ० सू० १५ ३ ३४।

† तै० स० १ ८ ९ १।

‡ "परिवृक्तिमाह मा मेऽद्यायां वात्सीरिति"—इति का० श्रौ० सू० १५ ३ ३५। 'ततश्चासौ आत्मगृहस्य प्रविशति तस्य राज्ञो न स्राम्य मिति—इति तत्र कर्कः।

(अथ द्वितीयं ब्राह्मणम् ।)

उपरिष्टाद्रत्नानाꣳ सौमारौद्रेण यजते । स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति तद्य-दुपरिष्टाद्रत्नानाꣳ सौमारौद्रेण यजते * ॥ १ ॥

स्वर्भानुर्ह वा ऽआसुरः† । सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रा-वेवैतत्तमो ऽपाहताꣳ स एषो ऽपहतपाप्मा तपति तथो ऽएवैष एतत्तमः प्रविशत्येतं वा तमः प्रविशति यदयज्ञियान् यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् तस्य सोमा-रुद्रावेवैतत्तमो ऽपहतः सो ऽपहतपाप्मैव दीक्षते तद्यत्कृतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमो ऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ २ ॥

स हैतेनापि यजेत । यो ऽलं यशसे सन्न यशो भवति यो वा ऽनूचानः सो ऽलं यशसे सन्न यशो भवति यो न यशो भवति स

* 'यजते'–इति ग । यजन–इति घ ।

† 'आसुर'–इति ग ।

तमसा वै स तत् प्रावृतो भवति तस्य सोमा-रुद्रावेवैतत्तमो ऽपहतः सो ऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति * ॥ ३ ॥

अथ मैत्राबार्हस्पत्यं चरुं निर्वपति। ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञ-पथाद्योऽयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्य-ज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत् पुनर्यज्ञपथ मपि-पद्यते सो ऽपि पन्थेव यज्ञपथं दीयते तस्मान् मैत्राबार्हस्पत्यं चरुं निर्वपति ॥ ४ ॥

तस्यावृत् †। या स्वयम्प्रशीर्णाश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति वरुण्या वा ऽएषा या परशुवृक्णाथैषा मैत्री या स्वयम्प्रशीर्णा तस्मात् स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति ‡ ॥ ५ ॥

अथातञ्च्य दधि। विनाट ऽआसिच्य रथं

* भवति—इति क।

† '०ष्टन' इति ख। 'इन' इति घ।　　‡ करोति—इति क।

युक्त्वावध्य देदीयित वा ऽआह तद्यत् स्वय मुदितं नवनीत तदाज्य भवति व्यक्ष्णं वा ऽएतद्यन् मथित मथेतन् मेव यत् स्वय मुदित तस्मात् स्वय मुदित माज्य भवति ॥ ६ ॥

द्वेधा तण्डुलान् कुर्वन्ति। स ये ऽणीयाएस परिभिन्नास्ते बार्हस्पत्या अथ ये स्थवीयाएसो ऽपरिभिन्नास्ते मैत्रा न वै मित्र क चन हिनस्ति न मित्र कश्चन हिनस्ति नैन कुशो न कण्टको विभिनत्ति नास्य व्रणश्चनास्ति सर्वस्य ह्येव मित्रो मित्रम् * ॥ ७ ॥

अथ बार्हस्पत्य चरु मधिश्रयति। त मैत्रेण पात्रेणापिदधाति तदाज्य मानयति तत्तण्डुलानावपति स एष ऊष्मणैव श्रप्यते व्यक्ष्णो वा ऽएष यो ऽग्निना शृतो ऽथैष मैत्रो य ऊष्मणा शृतस्तस्मादूष्मणा शृतो भवति तयोरुभयोरवदायाह मित्रावृहस्पतिभ्या मनुब्रूहीत्याश्राव्याह मित्रावृहस्पती यजेति वषट्कृते जुहोति ॥ ८ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके षष्ठ ब्राह्मणम् [३ २] ॥

* मित्रम इति ग। मित्रम्—इति घ।

अथ सौमारौद्रयागं विधत्ते — 'उपरिष्टाद्वाना मिति* । पशुविधि मुपरि स्वयमेव सौमारौद्रयागः कर्त्तव्यः । स च कः ? 'श्वेतवत्सायै श्वेतायै' । उभयत्र षष्ठ्यर्थे चतुर्थी । शुक्लवत्सायाः शुक्लाया गोः 'पयसि' 'शृतः' चरुः 'भवति' ॥ १ ॥

पशुविध्यो रनन्तरं विहितं सौमारौद्रयाग मनूद्याख्यायिकया प्रशंसति— "स्वर्भानुर्वेति । 'आसुरः' असुरपुत्रः 'स्वर्भानुः' 'सूर्यं' 'तमसा' 'विध्यत' आच्छादितवान् । 'सः' सूर्यः 'तमसा' 'विद्धः' आच्छादितः 'न व्यरोचत' नातिप्रकाशवान् जातः । 'तस्य' 'तत् तमः' 'सोमारुद्रौ एव' 'अपाहताम्' अपहत-वन्तौ । तत आरभ्य सूर्यो निहततमस्कः सन् 'तपति' नभसि दीप्यते । इदानीं मदनुष्ठातुरपि तमसाच्छादनमाह— "तमो वैव इति । 'अयथाप्रियाम्' अयथार्थान् सेनान्यादीन् 'यज्ञेन' 'प्रसजति' प्रसक्तान् अयथायथानुष्ठानेन सम्बद्धान् करोतीति 'यत्' 'एतत्' एतेन 'एष' अनुष्ठाता राजन्यः 'तथा उ' तथैव सूर्यवदेव 'तमः प्रविशति' । 'तमः वा' आत्मं 'एतं'† तुल्यत्वं 'प्रविशति' । सेनान्यादीना मयथीयत्व प्रसिद्ध मित्याह— "अय-थियाम् वा इति । तां सैव प्रसिद्धिं दर्शयति— "शूद्रानिति । 'त्वत्'-इति एकपर्यायः । एकदा 'शूद्रान्' सेनान्यादीन्, 'त्वत्' एकदा 'यान्' कांश्चन गोविकर्त्तादीन् हीनजातीनपि 'यज्ञे' 'प्रसजति' । तेन अयथाप्रियसम्बन्धेन तमः प्रविशतीति अतः 'तस्य' यष्टुः तथाविधं तमः 'सोमारुद्रौ एव' 'एतत्' एतेन चरुणा प्रीणीतौ 'अपहत' विनाशयत । ततः पाप-

* का० श्रौ० सू० २५ २ ॥ । मै० सं० १ ८ ८, १४ ।

† 'एनं'—इति ख, ग ।

सेनावसृष्टः सन् 'दीयते' दीयार्हो भवतीत्यर्थः । श्वेतापयसि चरुं प्रशंसति—"तद्यदिति । 'तद्' 'यत्' यदि, 'तमो नाम कृष्ण', श्वेतवत्सायाः श्वेतायाः गोः पयसि चरुरेष कृष्णस्य तमसः अपहारित्वात् भवतीत्यर्थः ॥

यस्याः पयसि चरुः पक्वः, तामेव दक्षिणात्वेन विधत्ते —"तस्यैवेति* ॥ २ ॥

(प्रसङ्गात् †) फलान्तरार्थस्य होमस्य ब्राह्मणेन दर्शयति— "स हैतेनापीति । 'अपि' भिन्नक्रम । 'सोऽपि' 'एतेन' सौमारौद्रेण चरुणा 'यजेत' । स इत्युक्तं क इत्याह ‡ — 'य' क्षत्रिय पुरुष 'यशसे' यशसा प्राप्तये 'अलं सन्' समर्थो योग्यो भवन्नपि 'अयशा' कीर्तिरहित 'भवति' । अस्य ह्यर्थे लिङ्गमाह— "यो वा अनूचान इति । साङ्गवेदाध्यायी 'अनूचान', 'स' 'यशसे' 'अलं' योग्यो भवन्नपि 'अयशा' यशोरहितो 'भवति' । 'य' तु यशोरहित, 'स' 'तमसा' 'प्रावृत', 'तस्य' 'एतत्' एतेन हविषा 'सौमारौद्रौ एव' कीर्त्यभावरूपं 'तमः' 'अपहत' § त कीर्तिमन्तं कुरुत इत्यर्थः, 'स' यजमानः अयशोरूपतमसा वियुक्तः सन्, ज्योतिरात्मको भूत्वा 'श्रिया' सम्पदा 'यशसा' चोपलक्षितो भवति ‖ ॥ ३ ॥

---

* का० श्रौ० सू० १५ ३ ३०।

† नास्त्येतत् पदं ख पुस्तकादर्शे ।

‡ स क । — इत्येव ख । § अपहत्य — इति ख ।

‖ अनूचानोऽप्ययशो भवेत् — इति का० श्रौ० सू० १५ ३ ३८ । अत्र उपरत्नेनाह इह सूत्रम् — "किलासी वा यन्तु" — इति । किलास शब्देन व्याधिविशेष उच्यते, तद्बाध भिषज्य यजेति । तु शब्दार्थे — इति तद्वृत्तिः ।

विधत्ते—"अथ मैत्रेति। 'मैत्राबार्हस्पत्यं' मित्राबृहस्पतिदेवत्यं 'चरुं' निर्वपेत *। देवतासम्बन्धं प्रशंसति— "हरति वा इति। यजमानस्य सेनान्यादीनां यज्ञे प्रसक्तम् इव यज्ञपथादपगमन मित्यर्थः। मित्राबृहस्पत्योर्यज्ञपथात्मकत्वं निर्वक्ति— "ब्रह्म हि मित्र इति। 'ब्रह्म' वेदः, तदेव हि 'यज्ञः'; तत्साध्यत्वात् यज्ञ एव पन्थाः। "यज्ञपथ मिति। समासं विवक्षितः, तयोः परम्परया यज्ञरूपत्वोक्तिः। "तत् पुन र्यज्ञेति। 'तत्' तस्मात् यज्ञात्मकमित्राबृहस्पतिदेवत्ययागानुष्ठानात् पुनर्यज्ञपथं प्राप्य 'दीयते' दीक्षां कर्त्तुं मर्हतीत्यर्थः ॥ ४ ॥

तस्य चरोरनुष्ठानप्रकारं वक्तु मतिजानीते— "तस्यावृदिति। 'तस्य' मैत्राबार्हस्पत्यचरोः 'आवृत्' क्रिया, अनुष्ठानप्रकारो वक्ष्यत इति शेषः। 'स्वयम्मूर्णा' स्वय मेव भग्ना, 'प्राची' प्रागायता, 'उदीची' उदगायता 'वा' या 'अश्वत्थी' अश्वत्थस्य 'शाखा' 'भवति', तस्याः शाखायाः 'मैत्रं' मित्रसम्बन्धिचरुपाकार्थं 'पात्रं' कुर्यात् †। स्वयम्भग्नाया मैत्रत्वं व्यतिरेकमुखेनोपपादयति— "वरुण्या वा एषेति। 'या' शाखा 'परशुवृक्णा' छिन्ना भवतीति, सा हिंसितत्वात् 'वरुण्या' वरुणदेवत्या, स्वयम्भग्नया तु मित्रार्हा, हिंसाविरहात्, सर्वसुहृत्त्वान्मित्रदेवस्य परशुच्छिन्नशाखानिर्मितं पात्रं नयोग्य मित्यर्थः ॥ ५ ॥

मैत्रचर्वर्थं माध्यकरणं विधत्ते— "अथातत्येति। पयोविशेषस्तैत्तिरीयके श्रुतः— "श्वेतायै श्वेतवत्सायै दुग्धे स्वय

* का० श्रौ० सू० १५ ३ ४० । तै० सं० १ ८, ८, १२।
† का० श्रौ० सू० १५ ३ ४१ क।

भूर्त्तं"–इति *। तादृशं पय 'पातव' पातवनद्रव्येण 'दधि' कृत्वा 'विनाटे' चर्ममये पात्रे दृतौ 'आसिच्य', 'रथ' 'युक्ता' पक्षे प्रयोज्य, 'आबध्य' दधिपूर्णं विनाटं रथे सम्बध्य, 'दोदीयिसवै' रथधावनाय 'प्राह' नियुञ्जीत। दोधूर्वा गति कर्मणो यङ्लुगन्तात् तुमर्थे तवैप्रत्ययः। तत्र रथधावनेन दध्नो यत् स्वयमुदितम् मथन मन्तरेण निष्पन्नं, नवनीतं, तदेव स्वयमेव विलीनं सत् आज्यं भवति †। आज्य कारणप्रकारस्यापस्तम्बेन विशद उक्तं — "श्वेतां श्वेतवत्सां सामन्ये दृतौ दुहन्ति, तत् स्वयं मूर्त्तं रथेन परिवहन्ति, तत् स्वयं मथितं आतपे विषजन्ति, तत् स्वयं विलीनं आज्यं भवति"–इति ‡। स्वयमुदितान्यस्य निकृष्टत्व व्यतिरेकमुखेन दर्शयति— "असुर्य्य मिति। यन्मन्थननिष्पन्न माज्यं तद् 'असुर्य्यम्' उपद्रवकारिणो असुरस्य योग्यम्, न तु सर्वं सुहृदो मित्रस्य। यत्तु उदीरितरूपं स्वयमुदितं तथान्यगरूपस्य हितस्य मित्रस्य मैत्रम् ॥ ६ ॥

देवताद्वयस्य पृथक् चरौ श्रपणं विधित्सु स्तण्डुलानां द्वेधाकरणं विधत्ते— "द्वेधेति। 'ये' 'अणीयांस' अणुतरा 'परिभिन्ना' छिन्नावयवास्तण्डुला, 'ते' सुहृत्सखित्वान्मित्रस्य कर्त्तव्या। 'ये' 'स्थवीयांस' स्थूलतरा 'अपरिभिन्ना' अच्छिन्नावयवा

* तै० भ० १ ८ ६ १३ ।

† विनाटो दृतिमेषक इति प्रसिद्ध। विनाटे दध्यासेक रथ्य बन्धनम् रथे स्थापनम् रथधावनम् चान्दोलनमात्रेण नवनीत जायते, तदाज्य पक्वाकार्यं ग्राह्यम् —इति टीप्पनी।

‡ आप० श्रौ० सू० १८ ११ २—६।

अपूर्णीकृता, 'वै' मित्रदेवत्या कर्त्तव्या *। मैत्रत्वं प्रशंसति— "न वै मित्र इति। 'मित्रो' देव 'कञ्चन' प्राणिनं 'न हिनस्ति', 'मित्रम्' अपि 'न कश्चन हिनस्ति'। 'एनं' मित्रं 'कुश' दर्भो वा 'कण्टक' वा 'न भिनत्ति' न विध्यति, अत एव तस्य 'व्रण' अपि 'नास्ति'। सर्वस्य मित्रत्वादिति हेतुमाह— 'सर्वस्य ह्येवेति। पुंलिङ्गो मित्र शब्दो देवतावाची, नपुंसकलिङ्गस्तु सुहृद्वचन ॥ ७ ॥

अथ चरुप्रकारं विधत्ते— "अथ बार्हस्पत्य मिति। 'बार्हस्पत्य चरुम्' अधिश्रित्य, अग्निमध्ये स्थाल्या अधिश्रितायां बृहस्पत्यर्थांस्तण्डुलानोप्य, 'तं' चरुम् अश्वत्थशाखाभिर्निर्मितेन 'मैत्रेण पात्रेण' 'अपि'-दध्यात् †। 'तत्' तस्मिन् पात्रे स्वयं मुत्पन्नम् 'आज्यम्' 'आनयति' आसिञ्चेत्। 'तत्' तत्र अविहतान् अपरिभिन्नान् मैत्रान् 'तण्डुलान्' 'आ'-वपेत्। 'स एष ‡ मैत्रश्चरु "जामपीव' 'श्रप्यते' पच्यते §। 'अग्निना' 'शृत' पक्वो 'वरुण्य', दाहप्रयुक्तहिंसासम्बन्धात् 'वरुण्य' वरुणार्हो न मित्रार्हः। अथवा शृत तु 'मैत्र' मित्र दैवत्यो युक्त, दोषविरहात्।

एवं पृथक् श्रपणं अभिधाय देवताप्रदाने साहित्यं विधत्ते —"तयोरुभयोरिति। 'तयोरुभयो' चर्वोर्द्विविधयोर्दीर्घिकयो रिव एकैकस्मात् द्विर्द्विरवद्यन् जुह्वा सहावदानं कुर्वन् "मित्रा

* का० श्रौ० सू० १५ २ ४२ ४३।

† का० श्रौ० सू० १५ २ ४१ ४४।

‡ स एव—इति क

§ का० श्रौ० सू० १५ २ ४२

पति तदेन मिन्द्र एव ज्येष्ठो ज्यैष्ठ्य मभि परि-णयत्यथ यज्ञायज्ञानां भवत्यतिष्ठा वा ऽएता ओषधयो यज्ञायज्ञा अतिष्ठो वा ऽइन्द्रस्तस्माद्यज्ञायज्ञानां भवति ॥ ६ ॥

अथ रुद्राय पशुपतये। रौद्रं गावेधुकं चरु निर्व्वपति तदेनᳪ रुद्र एव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति ॥ ७ ॥

अथ मित्राय सत्याय। नाम्बानां चरुं निर्व्वपति तदेनं मित्र एव सत्यो ब्रह्मणे सुव-त्यथ यन्नाम्बानां भवति वरुण्या वा ऽएता ओषधयो याः कृष्टे जायन्ते ऽथैते मैत्रा यन्नाम्बा-स्तस्मान्नाम्बानां भवति ॥ ८ ॥

अथ वरुणाय धर्मपतये। वारुणं यवमयं चरुं निर्व्वपति तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पति-रसद्यो हि परमतां गच्छति तᳪ हि धर्म ऽउप-यन्ति तस्माद्वरुणाय धर्मपतये ॥ ९ ॥

अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तद्या-
निष्ट एव स्विष्टकृद् भवत्यथैतैर्हविर्भिः प्रचरति
यदैतैर्हविर्भिः प्रचरति * ॥ १० ॥

अथैनं दक्षिणे बाह्वावभिपद्य जपति । सविता
त्वा सवानाꣳ सुवता मग्निर्गृहपतीनाꣳ सोमो
व्वनस्पतीनाम् । बृहस्पतिर्व्वाच ऽइन्द्रो ज्यैष्ठ्याय
रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्म्मपती-
नाम् ॥ ११ ॥

इमं देवाः । असपत्नꣳ सुवध्व मितीमं देवा
अभ्रातृव्यꣳ सुवध्व मित्येवैतदाह महते क्षत्राय
महते ज्यैष्ठ्यायेति नात्र तिरोहित मिवास्ति
महते जानराज्यायेति महते जनानाꣳ † राज्याये-
त्येवैतदाहेन्द्रस्येन्द्रियायेति व्वीर्य्यायेत्येवैतदाह यदा-
हेन्द्रस्येन्द्रियायेतीम ममुष्यै ‡ पुत्र ममुष्यै पुत्र मिति
तद्यदेवास्य जन्म तत एवैतदाहाहैषो व्विश ऽइति
यस्यै व्विशो राजा भवत्येष वोऽमी राजा

* 'प्रचरति'—इति क।

† 'जानानाꣳ'—इति ख। ‡ 'ममुष्य'—इति क, ख।

हस्पतिभ्या मनुब्रूहि"—'इति' एवं संयुज्य * अनुवाक्याप्रैषं ब्रूयात्; एवं 'यजेति' याज्याप्रैषेऽपि 'वषट्कृते' सहैव प्रदेय. † ॥ ८ ॥ ६ [ ३. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम्. )

स वै दीक्षते। स उपवसथे ऽग्नीषोमीयं पशुमालभते तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपति तदनु देवसूनां हवींषि निरुप्यन्ते ॥ १ ॥

सवित्रे सत्यप्रसवाय। द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति आशुकानां व्रीहिणाꣳ सविता वै देवानां प्रसविता सवितृ-

---

* 'संस्तुय'—इति च।

† "एकं दानम्, शौर्दिषिका"—इति का० श्रौ० सू० १५. ९. ३१। 'स चाय मेक एव भागः मैत्रावरुणस्य इति महदायात् सहितोत्पत्तेः, अतश्च एकं प्रदानम्, षड्डौर्हिकस्य चावदानग्रहणम्'—इति तत्र कर्कोपाध्याय.।

प्रसूतः स्तुया ऽऽथ यत् ग्राशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति * ॥ २ ॥

अथाग्नये गृहपतये । अष्टाकपालं पुरोडाशं निर्व्वपत्याशूनाठ् व्रीहीणां गार्हपतं यावतो यावत वृष्टे तदेन मग्निरेव गृहपतिर्गार्हपत मभि परिणयत्यथ यदाशूनां क्षिप्रे मा परिणयानिति † ॥ ३ ॥

अथ सोमाय व्वनस्पतये । श्यामाकं चरुं निर्व्वपति तदेनठ् सोम एव व्वनस्पतिरोषधिभ्यः सुवत्यथ यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकास्तस्माच्छ्यामाको भवति ‡ ॥ ४ ॥

अथ बृहस्पतये व्वाचे । नैवारं चरुं निर्व्वपति तदेनं बृहस्पतिरेव व्वाचे सुवत्यथ यन्नैवारो भवति ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥ ५ ॥

अथेन्द्राय ज्येष्ठाय । हायनानां चरुं निर्व्व-

* 'प्रसुवानिति'—इति क । 'प्रसुवानिति'—इति ग ।

† 'परिणयानिति'—इति क । 'परिणयानिति'—इति ग ।

‡ 'भवति'—इति क । एवं मिहोत्तरत्रापि ।

सोमोऽस्माकं ब्राह्मणानाᳬ राजेति तदस्मा इदᳬ सर्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद् ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥ १२ ॥

एता ह वै देवाः * सवस्येशते । तस्माद् देवस्वो नाम तदेनमेता एव देवताः सुवते ताभिः सूतः श्वः सूयते ॥ १३ ॥

ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्यं वीर्यवत्यः सुवान्ता इति तस्माद् द्विनाम्न्यो भवन्ति † ॥ १४ ॥

अथाग्नये स्विष्टकृतेऽनुब्रूहीति । तदाहुरन्तरेणाहुती एतत् कर्म क्रियत एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्त-

---

* 'देवताः'—इति क, ख।

† 'भवन्ति'—इति क।

रेणाहुती ऽएतत् कर्म क्रियते * ऽथाश्राव्याहाग्नये स्विष्टकृते प्रेष्येति व्वषट्कृते जुहोति ॥ १५ ॥ ७ ॥

॥ इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् [२. ३.] ॥

एवं पवित्राख्यात् प्रथमसोमयागादनन्तरभावीनि चातुर्मास्यादीनि इष्टिदर्विहोमात्मकानि संवत्सरपर्यन्तं अनुष्ठेयानि चातुर्मास्यान्युक्तानि †, अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगोऽभिधास्यते, तत्राभिषेचनीयस्य षोडकपाला दीक्षा माह— "स वै दीक्षत इति। तत्कालः, सूत्रे दर्शितः— "फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते"—इति ‡।

देवसुवां हवींषि विधित्सुस्तेषां अग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तुं माह— "स उपवसथ इति। 'उपवसथ' सुत्यादिवसात् पूर्वं अहः। अग्नीषोमीयं पशुपुरोडाशं निरुप्य, तदनु देवसुवां हवींषि निर्वपेत् §। सुवन्त्यनुजानन्तीति सुवः, देवाश्च ते सुवश्चेति देवसुवः, तेषां 'देवसुवाम्', "ओः सुपि"—इति ‖

---

* 'क्रियत'—इति क. ख।

† पुरस्तात् प्र० प्रपा० ९कण्डिका: (१३१ पृ०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १५ । ३ । ३६ । फाल्गुन्याः पञ्चदश्यां यद् यजनीयम्, तत्र दीक्षा, शुक्लप्रतिपदीत्यर्थः'—इति तद्वृत्तिः।

§ का० श्रौ० सू० १५ । ४ । १—३ । 'देवसुवां एतानि हवींषि भवन्ति"—इत्यादि तै० ब्रा० १ । ७ । ४ द्रष्टव्यम्।

‖ पा० सू० ६ । ४ । ८३ ।

यथादेशं । तथाविधत्वं चैषा समाम्नायते— "देवसुवा मेतानि हवींषि भवन्ति, एतावन्तो वै देवानां सवाः, त एवास्मै सवान् प्रयच्छन्ति, त एनं सुवन्ते"—इति * ॥ १ ॥

तत्र प्रथमं सावित्रं हविर्विधत्ते — "सवित्रे सत्यप्रसवायेति † । 'सत्यप्रसवाय' अमोघाभ्यनुज्ञाय 'सवित्रे' 'आशुकानाम्' प्रकर्षेण पाकं शीघ्रं पच्यमानानां पुनः प्ररूढानां व्रीहीणाम् ‡ । ऐकपद्यं छान्दसो सत्वनिर्देशः । सवितृदेवतासम्बन्धं प्रशंसति — "सवितेति । 'सूयै' मम करवाणि । आशुकव्रीहिसाध्यत्वं प्रशंसति— "अथ यदिति । 'क्षिप्रं' क्षिप्रकाले 'मा' मां 'प्रसुवात्' । सवितृदेवत्या आशुका व्रीहयः, प्रसुवन्तु प्रेरयन्त्विति आशुकत्वम् । प्रसुवादिति, अपूर्वात् सुवतेर्लेट्याडागमे वैदिकारलोपे कृते रूपम् ॥ २ ॥

द्वितीयं हविर्विधत्ते— "अथाग्नय इति । 'गृहपतये' गृहपतित्वगुणकाय 'अग्नये' 'आशूनां व्रीहीणां 'पुरोडाशं' निर्वपेत् । "आशूनामिति § । आशुका पुनःप्ररूढा व्रीहय इत्युक्तम्, ततोऽप्यधिककाले पच्यमानाः षष्टिका व्रीहय आशवः । तेषां आशुत्वं च षष्टिकमासनियतपरिपाकव्रीह्यपेक्षम् । गृहपतिपदं प्रशंसति — "श्रीर्वा इति । 'श्रीः' खलु 'गार्हपतं' गृहपतित्वमेव, तस्माद् यजमानो 'यावत' धनस्य 'इष्टे' ईश्वरो भवति । 'तद्' 'गार्हपतं' गृहपतिसम्बन्धि

* तै० ब्रा० १ ७ ४ । 'देवसाम्' — 'देवसुवाम्' —इति शुक्लकृष्णयोर्भेदः ।

† का० श्रौ० सू० १५ ४ ५ । तै० सं० १ ८ १० १ ।

‡ पूर्वं छिन्नाः सन्तः पुनराशु प्ररोहन्तीति पुनराशुका इत्यर्थे आशुकाः कान्त्याः —इति का० टीप्पनी ।

§ का० श्रौ० सू० १५ ४ ६ । तै० सं० १ ८ १० १ ।

सर्वं यत्स्वजातम् 'अभि' 'एनं' यजमानं गृहपतिगुणकोऽग्निः 'परिणयात्' परिणयति प्रापयति। श्रौतीषा मार्गस्य प्रशंसति— “अथ यदिति। 'श्रिये' श्रियं 'मा' मां परिणयेयु 'इति' अतो हेतोराशुभिरेव हवि कर्तव्य मित्यर्थः ॥ ३ ॥

तृतीयं हविर्विधत्ते— “अथ सोमायेति *। 'वनस्पतये' वनानां मोषधीनां पति मगमसि। पारस्करादित्वात् सुट्। तस्मै 'सोमाय' श्यामाकप्रकृतिकं 'चरु' निर्वपेत्। देवता सम्बन्धं प्रशंसति— “तदेनं मिति। श्यामाकानां सोमार्हत्व मुपपादयति— “अथ यच्छ्यामाका इति। 'श्यामाका इति यत्', 'एते' खलु 'ओषधीनां' मध्ये 'सोमस्य' 'प्रत्यक्षतमम्' अतिशयेन प्रत्यक्षं रूप मित्यर्थः ॥ ४ ॥

चतुर्थं हविर्विधत्ते— “अथ बृहस्पतय इति †। 'वाचे' वाक्पालकत्वेन नैवारचरुणा प्रीतो 'बृहस्पतिरेव' 'एनं' यजमानं 'वाचे' 'सुवति' अनुजानाति। 'अथ यन्नैवारो भवति”-इत्यादि वाजपेये व्याख्यातम् ‡ ॥ ५ ॥

पञ्चमं हविर्विधत्ते— “अथेन्द्रायेति §। ज्येष्ठत्वगुणकाये न्द्राय 'हायनानां' संवत्सरपक्वानां रक्तशालीनां 'चरु' निर्वपेत्। संवत्सरपक्वानां ज्येष्ठगुणकेन्द्रयोग्यत्व मुपपादयति— “अथ यद्धाय नानाम् इति। 'हायना' संवत्सरपक्वा व्रीहय इति। 'यत्'

* का० श्रौ० सू० १५ ४ ८ । तै० सं० १ ८ १० १ ।
† का० श्रौ० सू० १५ ४ ९ । तै० सं० १ ८ १० ४ ।
‡ पूर्वभाग ४१ पृ० १४ प० द्रष्टव्यम् ।
§ का० श्रौ० सू० १५ ४ १० । तै० सं० १ ८ १० २ ।
‖ पा० सू० ४ १ १८८ द्रष्टव्यम् ।

'एता' 'अनिष्ठाः' अनीत्य तिष्ठन्त्य 'ओषधयः' चिरकालेन पाकात् 'इन्द्र' अपि 'अनिष्ठः' * सर्वानतिक्रम्य स्थितः † ॥ ६ ॥

अथ हविर्विधत्ते— "अथ रुद्रायेति ‡। 'पशुपतये' पशुपतिगुणकाय 'रुद्राय'। रौद्र मिति तद्धितेन विहित एव रुद्रसम्बन्धः, पुनः 'पशुपतये'-इति विशेषसम्बन्धार्थं 'रुद्राय'-इति चतुर्थी कृता। पशुपतिपदं प्रशंसति— "तदेन मिति। 'तत्' तेन हविषा एनं सुप्रसन्नं 'पशुपतिः रुद्र एव' 'पशून्' तदर्थं 'सृजति' प्रेरयति, पशुमन्तं करोतीत्यर्थः। 'वास्तव्यः'- इत्यादि पूर्ववद् व्याख्येयम् ॥ ७ ॥

सप्तमं हविर्विधत्ते— "अथ मित्रायेति §। 'सत्याय' सत्यगुणकाय 'मित्राय' 'नाम्बानां' नाम्बा नाम अकृष्टपच्याः स्वयञ्जाता व्रीहयः। नाम्बानां मित्रयोग्यत्व मुपपादयति— "अथ यन्नाम्बाना मिति। कृष्टेषूत्पन्ना 'ओषधयः' 'वरुण्याः' कर्षणादिलक्षणहिंसासम्बन्धात् वरुणार्हाः, अकृष्टपच्यास्तु तद्विरहात् 'मैत्राः' ॥ ८ ॥

अष्टमं हविर्विधत्ते— "अथ वरुणायेति ‖। 'धर्मपतये' धर्मपतिगुणकाय 'वरुणाय' 'यवमयं चरुं' निर्वपेत्। रौद्र

---

* 'अनिष्ठाः'- इति च, ज।

† तिष्ठति'—इति ज।

‡ का० श्रौ० सू० १५ ४ ११। 'गावेधुकश्चरुर्भवति'—इति १ ३८ द्रष्टव्यम्। तै० सं० १ ८ १० ६।

§ का० श्रौ० सू० १५ ४ १२। 'अकृष्टपच्याः'—इति। तै० सं० १ ८ १० ७।

‖ का० श्रौ० सू० १५ ४ १३। 'यवमयश्चरुर्भवतीति शेषः'—इति। २१ द्रष्टव्यम्। तै० सं० १ ८ १० ८।

मितिवद् वारुण मिति व्याख्येयम्। 'तत्' तेन 'एनं' यजमानं साहयो 'वरुण.' 'धर्मस्य पतिं' कुर्यात्। धर्मपतित्वं प्रशं-सति— "परमतेति। 'यः' पुमान् 'धर्मस्य पतिः' 'भसद्' भवेत्, 'सा वै' 'परमता' परमत्वम्। तदेव विवृणोति— "यो हीति। 'तं' परम' 'धर्मो' 'उपयन्ति' प्राप्नुवन्ति ॥ ८ ॥

एतेषां निरुप्तानां हविषां प्रचरणकालं विधत्ते— "अथाग्नी-षोमीयेणेति। चोदकप्राप्तेन अग्नीषोमीयपशुपुरोडाशेन प्रचर्य' तदीयस्विष्टकृत प्राक् एतैर्हविर्भिर्यजेतेत्यर्थः ॥ १० ॥

विधत्ते— "अथैन मिति। 'अथ' देवसुवां हविर्यागानन्तरं स्विष्टकृतः पूर्वम् 'एनं' यजमानं 'दक्षिणे बाहौ' 'अभिपद्य' गृहीत्वा 'जपति', अध्वर्युरिति शेषः। सूत्रम्— "उत्तमेन चरित्वा सविता त्वेत्याह यजमान बाहुं दक्षिणं गृहीत्वा"–इति *।

मन्त्रस्यार्थः †,— हे यजमान! 'त्वा' त्वां 'सविता' 'सवानां' प्रसवानां स्वामित्वेन 'सुवताम्' अनुजानातु। तथा 'अग्नि.' अन्येषां 'गृहपतीनाम्' ईश्वरम् अनुजानातु। 'त्वाम्'-इत्यनु-षङ्गः। एव मुत्तरत्रापि त्वां सुवता मिति योज्यम्। 'यावे', 'ज्येष्ठाय' इत्यादौ तादर्थ्ये चतुर्थी। 'मित्रः सत्य.'-इत्यत्र सत्य-शब्दात् चतुर्थ्येकं सुः, सत्यायेत्यर्थः ‡ ॥ ११ ॥

परोक्षवदुक्ता, अथ प्रत्यक्षवदाह— "इमं देवा इति §। हे 'देवाः!' सवित्रादयः 'इमं' यजमानम् 'असपत्नं' शत्रुरहितं

* का० श्रौ० सू० १५, ३ १४।
† तत्पाठस्तु वा० सं० ९, ३९ १।
‡ पा० सू० ७. १ ३९ द्रष्टव्यम्।
§ वा० सं० ९, ४०, १।

'सुवध्वम्' अनुजानीत। तथा 'महते क्षत्राय' क्षितिप्रभुताय क्षत्रियकुलाय, 'महते ज्यैष्ठ्याय' ज्ञातिश्रेष्ठनियमसामर्थ्यायेत्यर्थः। 'महते जानराज्याय' जनसम्बन्धि यद्राज्यं तत्र सागरपर्यन्तभूमिविषयत्वात्, महत्सार्वभौमत्वाय। 'इन्द्रस्य' सम्बन्धिने 'इन्द्रियाय' वीर्याय 'इमम्' एतन्नामानं यजमानम्, 'अमुष्य' पितुः 'पुत्रम्', 'अमुष्यै' अमुष्या मातुः पुत्रम्, सुवध्व मित्यनुषङ्गः। 'अस्यै' अस्याः 'विशः' प्रजायाः 'राजा', एष यजमान इत्यर्थः। प्रजा अपि सम्बोध्याः— "एष इति। 'अमी'–इति सम्बोधनप्रथमाबहुवचनान्तम्। अदःशब्दस्थाने जनपदनाम सम्बोधनप्रथमाबहुवचनान्तं गृह्णीयादित्यर्थः। तत एवामी इत्यस्य स्थाने भरतपदं प्रक्षिप्य पठितं बौधायनेन— "अथैनं रक्षिभ्य आवेदयति, एष वो भरता राजा"–इति। आपस्तम्बेन तु राजविशेषेण जनपदनामग्रहणं सूत्रम्— "अथैनं रक्षिभ्य आवेदयति, एष वो भरता राजेत्येव व° कुरवो राजेति कौरव्य मेव यः पञ्चाला राजेति पाञ्चाल मेव च कुरुपञ्चाला राजेति वा कुरुपञ्चाल मेव वो जनता राजेत्यन्यान् राज्ञ."–इति *। कात्यायनेन त्विदं सर्वं सङ्गृहीतम्— "यस्याश्च जाते राजा भवति देशस्यानवस्थितत्वात्"–इति †। हे प्रजाः! 'वः' युष्माकम् एष राजा, एनं स्वामिनं यथोचितं सेवध्व मित्यर्थः। 'ब्राह्मणानां अस्माकं' 'सोमः' एव 'राजा', न तु क्षत्रिय इत्यर्थः॥

* आप० श्रौ० सू० १८. १२. ७। 'सोमोऽस्माकं ब्राह्मणानां राजेति जपति'–इति च तत्र तदुत्तरसूत्रम् (८)।

† का० श्रौ० सू० १५ ४. १७। "ये देवा देवसुवः स्थ"– इत्यादि तै० सं० १. ८. १० द्रष्टव्यम्।

मन्त्रभागमोऽनूद्य व्याचष्टे—'इमं देवा इति *। व्याख्यातमनु। "व्यन् मतये"-इति † व्यन् प्रत्ययः। शेषं सुगमम्। यजमानस्य मातापित्रोश्च नामग्रहणस्थानं दर्शयति— "इमममुष्येति। इमं मित्यस्यानन्तरं यजमानस्य नाम, 'अमुष्य'-'अमुष्या'-इत्येतयोः स्थाने तस्य मातापित्रोर्नामनिर्देशः। अत एव सूत्रम्— "नामान्यस्य गृह्णाति मन्त्रे यथास्थानं, मातापित्रोश्च'-इति ‡। मन्त्रभागस्य तात्पर्यमाह— 'तदस्मा इति। 'तत्' तेन, एष वो राजेति स्वामित्वप्रतिपादनेन 'अस्मै' राज्ञे 'इदं' दृश्यमानं 'सर्वं' जगत् ब्राह्मणव्यतिरिक्तम् 'आद्यं' भोग्यं करोति। सोमोऽस्माकमिति मन्त्रभागस्य तात्पर्यमाह— "ब्राह्मणमेवेति। यत सोमोऽस्माकं ब्राह्मणानां राजेति ब्राह्मणजातिं सोमस्वामित्वेन पृथक् कृत्वा, तस्मात् ब्राह्मणं [illegible] आह। 'हि' यस्मात् 'ब्राह्मणः' 'सोमराजा' सोमो राजा यस्येति बहुव्रीहिः, अतएव "राजाहस्सखिभ्यः" इति § टच् समासान्तो न कृतः। यस्मादस्मै [illegible] स्वकीयं राजानं विभज्य निर्दिष्टवान्, तस्माल्लोकेऽपि ब्राह्मणा अग्निष्टोमादियागेषु सोममेव राजानमभ्योदिते 'सोम राजन्नेह्यवरोह मा भैः"-इत्यादिभिर्मन्त्रैरुपचरन्ति ॥ १२ ॥

---

* का० स० १० १८ १।

† पा० सू० ३ १ १४१।

‡ का० श्रौ० सू० १५ ४ १५ १६।

§ पा० सू० ५ ४ ९१

‖ तै० स० १ २ १३ २। तत्रोपावरोहमन्त्रयोर्द्वितीय एव। ताविमौ विहितौ बोधायनेन यथा— "अथैनमच्छमौक्लकयो प्राचीनमीव

स्विष्टकृदाहुत्योर्मध्ये देवसूहविःप्रचारेण यज्ञरूपप्रजापतिमध्ये एव यजमानं निहितवान् भवतीत्यर्थः * ॥ १५ ॥ ७ [ ३. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥

॥ इति पञ्चमकाण्डे द्वितीयः प्रपाठकः † ॥

---

* 'बहुप्रयोजनत्वं प्राधान्यात्, इतरेषां वा भूयस्त्वात्, स्विष्टकृत्तेन'—इति का० श्रौ० सूत्रे (१५ । १८, १९) इह पर्यालोच्ये । 'उभयथा हि स्विष्टकृतिः,—काण्वानां यथाविप्रेष्यः स्विष्टकृत्, माध्यन्दिनानां द्विप्रैष्य इति'—इति भाष्य कर्कः ।

† इत उत्तरं चिह्नं 'कण्डिकाः १०४'—इति क, 'कण्डिकासंख्या ११४'—इति ख, 'कण्डिकासंख्या १०४'—इति ग, घ । तत्र १ब्रा० २१ कं०, २ ब्रा० १० कं०, ३ ब्रा० २० कं०, ४ ब्रा० १७ कं०, ५ ब्रा० १३ कं०, ६ ब्रा० ८ कं०, ७ ब्रा० १५ कं० । सप्तानां ब्राह्मणानामस्मिन् प्रपाठके सप्तसु ब्राह्मणेषु १०४ कण्डिकाः सम्पन्ना इति ज्ञेयम् ।

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ।

॥ हरिः ॐ ॥

स वा अपः सम्भरति । तद्यदपः सम्भरति वीर्यं वा ऽआपो वीर्यमेवैतद्रसमपाᳫं सम्भरति * ॥ १ ॥

औदुम्बरे पात्रे † । अन्नं वा ऽऊर्गुदुम्बर ऊर्जो ऽन्नाद्यस्यावरुध्यै तस्मादौदुम्बरे पात्रे ॥ २ ॥

स सारस्वतीरेव प्रथमा गृह्णाति । अपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदाहोर्जस्वती राजस्वश्चितानाः इति रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति राजस्वश्चि-

---

* 'सम्भरति'—इति क ।

† 'पात्रे'—इति ख । 'पात्रे'—इति ग, घ ।

ताना इति याः प्रज्ञाता राजस्य इत्येवैतदाह यामिर्मित्रावरुणावभ्यषिञ्चन्नित्येताभिर्हि मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रं मनयन्नत्यरातीरित्येताभिर्हीन्द्रं नाष्ट्रा रक्षाᳬस्यत्यनयंस्ताभिरभिषिञ्चति स्वाद्वै सरस्वती व्याचैवैन मेतदभिषिञ्चत्येता वा ऽएषा आपस्ता एवैतत् सम्भरति * ॥ ३ ॥

अथाध्वर्युः । चतुर्गृहीत माज्यं गृहीत्वापो ऽभ्येति तद्या ऽअर्मो व्यहंतः पशौ वा पुरुषे वाभ्यपैते तौ गृह्णाति ॥ ४ ॥

स यः प्राङुदहंति । त गृह्णाति वृषा ऽर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषा ऽर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति † ॥ ५ ॥

अथ यः प्रत्यङुदहंति । तं गृह्णाति ‡ वृषसेनो ऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनो ऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति व्योर्यं वा ऽएतदपा मुदहंति पशौ वा

* 'सम्भरति'—इति क ।

† 'देहीति'—इति क । देहीति इति ख, ग घ, ।

‡ 'गृह्णाति'—इति क ।

पुरुषे वाऽथ्ववेते व्वीर्यमेवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति * ॥ ६ ॥

अथ स्यन्दमाना गृह्णाति । अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्यंय वा ऽएताः स्यन्दन्ते तस्मादेताः स्यन्दमाना न किञ्चन प्रतिधारयते व्वीर्यमेवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति † ॥ ७ ॥

अथ याः स्यन्दमानानां प्रतीपए स्यन्दन्ते । ता गृह्णात्योजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्यंय वा ऽएताः स्यन्दमानानां प्रतीपए स्यन्दन्ते व्वीर्यमेवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ ८ ॥

अथापयतीर्गृह्णाति । आपः परिवाहिणी स्थ राष्ट्रदा [ राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ

---

*, †, ‡ 'सम्भरति'—इति क ।

राष्ट्रदा *] राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चत्ये-तद्वै वा ऽएषापच्छिद्यैव पुनर्भवत्यपि ह वा ऽअस्यान्यराष्ट्रीयो राष्ट्रे भवत्यप्यन्यराष्ट्रीय मवहरते तथास्मिन् भूमानं दधाति भूम्नैवैन मेतदभि-षिञ्चत्येता वा ऽएता आपस्ता एवैतत् सम्भ-रति † ॥ ९ ॥

अथ नदीपतिं गृह्णाति। अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्च-त्यपां वा ऽएष पतिर्यन्नदीपतिर्विशामेवैन मेतत् पतिं करोत्येता वा ऽएता आपस्ता एवैतत् सम्भरति ‡ ॥ १० ॥

अथ निवेष्यं गृह्णाति। अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति गर्भं वा ऽएतदाप उपनिवेष्टन्ते विशामेवैन

---

* वक्रनीचिह्नमध्यस्थपाठो ग-पुस्तके नास्ति।

†, ‡ 'सम्भरति'—इति क।

मेतद् गर्भं करोत्येता वा ऽएता आपस्ता एवै-
तत् सम्भरति * ॥ ११ ॥

अथ यः स्यन्दमानानाᳫं स्थावरो ह्रदो भव-
ति। प्रत्यातपे ता गृह्णाति सूर्यत्वचस स्थ
राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति
स्वर्चसमेवैनमेतदभिषिञ्चति सूर्यत्वचस मेवैनमेतत्
करोति स्वरूपा वा ऽएता आपो भवन्ति याः
स्यन्दमाना न स्यन्दन्ते स्वरूपसवो वा ऽएष
यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएता
आपस्ता एवैतत् सम्भरति † ॥ १२ ॥

अथ या आतपति वर्षन्ति। ता गृह्णाति
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति
ताभिरभिषिञ्चति स्वर्चसमेवैनमेतदभिषिञ्चति
सूर्यवर्चसमेवैनमेतत् करोति मेध्या वा ऽएता
आपो भवन्ति या आतपति वर्षन्त्यप्राप्य

---

*, † °म्भरति—इति क।

हीमां* भवन्त्यथैना गृह्णाति मैध्य मेवैन मेतत् करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति † ॥ १३ ॥

अथ वैशन्तीर्गृह्णाति । मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति विश मेवास्मा ऽएतत् स्थावरा मनपक्रमिणीं करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ १४ ॥

अथ कूप्या गृह्णाति । व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति तद्या इमां परेणापस्ता एवैतत् सम्भरत्यपामु चैव सर्वत्वाय तस्मादेताभिरभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति § ॥ १५ ॥

अथ प्रुष्वा गृह्णाति । वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्र

---

* 'हीमा'—इति च का० वैदरिक उद्ध०।
†, ‡ § 'सम्भरति'—इति क।

ममुष्मै दत्तेति ताभिरभिषिञ्चत्यन्नाद्येनैवैन मेत-
दभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद्दधातीदं वा ऽअसा-
वादित्य उद्यन्नेव यथाय मग्निर्निर्दहेदेव मोष-
धीरन्नाद्यं निर्दहति तदेता आपो ऽभ्यवयत्यः शम-
यन्ति न ह वा ऽअस्याहान्नाद्य परिशिष्यते यदेता
आपो नाभ्यवेयुरन्नाद्येनैवैन मेतदभिषिञ्चत्येता वा
ऽएका आपस्ता एवैतत् सम्भरति * ॥ १६ ॥

अथ मधु गृह्णाति। शविष्ठा स्थ राष्ट्रदा
राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्र
ममुष्मै दत्तेति ताभिरभिषिञ्चत्यपां चैवैन मेत-
दोषधीनां च रसेनाभिषिञ्चत्येता वा एका आपस्ता
एवैतत् सम्भरति † ॥ १७ ॥

अथ गोर्विजायमानाया उल्व्या गृह्णाति।
शक्करी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्करी
स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषि-
ञ्चति पशुभिरेवैन मेतदभिषिञ्चत्येता वा ऽएका
आपस्ता एवैतत् सम्भरति ‡ ॥ १८ ॥

---

*, † °सम्भरति—इति क।

‡ सम्भरति—इति च का॰ वेबर ट्रा॰ पाठः।

अथ पयो गृह्णाति। ऊर्जभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा ऊर्जभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा ऽएता आपस्ता एवैतत् सम्भरति * ॥ १९ ॥

अथ घृतं गृह्णाति। विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशूना मेवैनमेतद्रसेनाभिषिञ्चत्येता वा ऽएता आपस्ता एवैतत् सम्भरति † ॥ २० ॥

अथ मरीचीः। अञ्जलिना सङ्गृह्णाभिसृजत्यापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्येता वा ऽआपः स्वराजो यन्मरीचयस्ता यत् स्यन्दन्त ऽइवान्यो ऽन्यस्या एवैतच्छ्रिया ऽअतिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वा ऽएता आपस्ता एवैतत् सम्भरति ॥ २१ ॥

*, † 'सम्भरति'—इति क।

ता वा ऽएताः । सप्तदशाप सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात् सप्तदशापः सम्भरति ॥ २२ ॥

षोडश ता आपो या अभिजुहोति । षोडशाहुतीर्जुहोति ता दाशिरंशद्धयीषु न जुहोति सारस्वतीषु च मरीचिषु च तायतुस्त्रिंशद्वयस्त्रिंशद्वै देवाः प्रजापतिस्त्रयस्त्रिंशस्तदेन प्रजापतिं करोति * ॥ २३ ॥

अथ यद्हुत्वा हुत्वा गृह्णाति । वज्रो वा ऽआज्य वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति † ॥ २४ ॥

अथ यत् सारस्वतीषु न जुहोति । वाग्वै सरस्वती वज्र आज्यं नेद्वज्रेणाज्येन वाचं हिनसानीति तस्मात् सारस्वतीषु न जुहोति ‡ ॥ २५ ॥

अथ यन्मरीचिषु न जुहोति । नेदनष्टे-

---

* करोति—इति क ।

† गृह्णाति—इति क ।

‡ जुहोति—इति क ।

वैता माहुतिं जुहवानीति तस्मान् मरीचिषु न जुहोति ॥ २६ ॥

ताः सार्द्धं मौदुम्बरे पात्रे समवनयति । मधुमतीर्मधुमतीभिः पृच्यन्ता मिति रसवती रसवतीभिः पृच्यन्ता मित्येवैतदाह महि क्षत्रं क्षत्रियाय वन्वाना इति तत्परोऽक्षं क्षत्रं यजमानायाशिष माशास्ते यदाह महि क्षत्रं क्षत्रियाय वन्वाना इति ॥ २७ ॥

ता अग्रेण मैत्रावरुणस्य धिष्ण्याए सादयति । अनाधृष्टाः सीदत सहौजस इत्यनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह सहौजस इति सवीर्या इत्येवैतदाह महि क्षत्रं क्षत्रियाय दधतीरिति तत्परोऽक्षं क्षत्रं यजमानायाशिष माशास्ते यदाह महि क्षत्रं क्षत्रियाय दधतीरिति ॥ २८ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३. ४.] ॥

चतुर्थब्राह्मणे यजमानाभिषेकार्थं सप्तदशपञ्चकाणां अपां सम्भरण मुच्यते । कात्यायन कश्चिद् विशेष सूत्रयामास— "इडान्तेऽपो गृह्णाति, यूप सुवरेण नैमित्तिकीरसभवाद्,

भक्षेतराः, पृथक् पात्रेष्वौदुम्बरेषु'–इति *। शातपवर्णीया-न्युदकानि यूपस्योत्तरप्रदेशे निधाय गृह्णीयात्। इतराः सप्तविनीरपस्तु तत्र तत्र गत्वा गृह्णीयात्। तदिदं सम्भरणं विधत्ते— "स वा अप इति। उदकसम्भरणं वीर्यात्मना प्रशंसति— "तद्यदिति। अपां वीर्यरूपं रस मेव सम्भृतवान् भवतीत्यर्थः ॥ १ ॥

सम्भरणस्य पात्रविशेषं विधत्ते— "औदुम्बर इति †। 'पात्रे'–इति जात्येकवचनम्। सर्वाणि सप्तदश पात्राणि औदुम्बराणि भवेयुः। तथा च सूत्र मुदाहृतम् ‡। औदुम्बरत्व मन्नावरोधसाधनत्वेन प्रशंसति— "अन्नं वा इति ॥ २ ॥

जलसम्भरणे क्रम विधत्ते— "स सारस्वतीरेवेति। सरस्वत्या नद्या आपः अप. प्रथमं गृह्णीयात् §। 'एव'–शब्दोऽन्ययोग-व्यवच्छेदार्थः। तत्र मन्त्रं विधत्ते— "अपो देवा इति ||। 'मधुमती.' मधुररसवतीः, 'ऊर्जस्वती' विशिष्टान्नरसवतीः। 'राजसूः' राजानं सुवते, जनयन्ति, अनुजानन्तीति राजसूः; ताः 'चितानाः' देवतात्वेन चेतयमानाः, 'अपः' उदकानि 'देवाः' 'अगृभ्णन्' भकारश्छान्दसः। ता अपो विशिनष्टि— 'याभिः' अद्भिः 'मित्रावरुणौ' 'अभ्यषिञ्चन्' देवाः, 'याभिः' च 'इन्द्रम्'। 'अराती.' अदानशीलाः शत्रवः 'अत्यनयन्' अतिक्रम्य नीतवन्तः इति।

---

* का० श्रौ० सू० १५. ४ २१–२४ क।

† का० श्रौ० सू० १५. ४ २६ ख। ‡ प्रथमकण्डिकाभाष्ये।

§ का० श्रौ० सू० १५ ४ २५, २६।

|| वा० सं० १०. १. १।

मन्त्रं प्रतिपाद्य मनूयाचष्टे— "अपो देवा इति। चितानाइत्यस्य व्याख्यानम्— 'मन्नाना:'—इति। शेषं निगदमिदम्।

एतासा मभिषेकार्थत्वं प्रशंसति— "ताभिरभिषिञ्चतीति। यस्मा यपो ग्रहान्ते, ता सरस्वतीं नदीं वागात्मना प्रशंसति— "वाग् वै सरस्वतीति। सारस्वतीभिरद्भिरभिषेकसरणेन वाचैवाभिषेकं कृतवान् भवतीत्यर्थः। "एता वा एका इति। सारस्वत्य, 'आप,' 'एका:' एक मुदकम्। एवं सारस्वतीरपो गृहीत्वा षोडशापो गृह्णीयात् ॥

तत्र विशेषं दर्शयामास कात्यायनः— "सारस्वतीर्ग्रहीत्वापो देवा इति, कुशोत्पुतासु चतुर्ग्रहीतानि हणवर्त्यादिभिः स्वाहाकारान्तैः पूर्वं, पूर्वैः प्रतिमन्त्र मुत्तरैरुत्तरैर्ग्रह्णाति"—इति *। उत्तरासु षोडशासु चतुर्ग्रहीतेनाज्येन पूर्वं स्वाहा-स्तीर्णमन्त्रैर्हुत्वा हुत्वा उत्तरैरुत्तरैस्तास्ता अपो गृह्णीयादित्यर्थः ॥ ३ ॥

तदिदानीं क्रमेण विधास्यति; तत्र प्रथमा मूर्मिग्रहणस्य विधत्ते— "अपाध्वर्युरिति †। चतुर्ग्रहीताज्येन सह 'आपः' अध्वर्युः षोडश 'अभि'-लक्ष्य 'अवैति' गच्छतीति सर्वत्रैव। 'तत्' तत्र नद्या पश्चात्पश्चयोरन्यतरस्मिन् 'अध्यवैते' अवगाढे सति 'यो ऊर्मी' 'व्यूहत' विविधं पूर्वापरीभावेन गच्छतः 'तौ गृह्णीयात्' ‡ ॥ ४ ॥

---

* का० श्रौ० सू० १५ ४ ३२, ३३। अत्र "कात्यायन यथा श्रुति विनियोगक्रमेण च यापो गृहीतवाः'—इति कर्काचार्यः।

† का० श्रौ० सू० १५ ४ २८।

‡ 'ऊर्मी कल्लोली'—इति कर्काचार्यः।

तत्रोर्मिद्वयस्यानियमेन समस्य वाचा ग्रहणे प्राप्ते क्रमं विधत्ते— "स यः प्राङ्ङिति। 'यः' ऊर्मिः 'प्राङ्' प्राङ्मुखः 'उदेति' उद्गच्छेत्, 'तं' गृह्णीयात् ॥

तत्र हवनमन्त्रं ग्रहणमन्त्रं च विधत्ते— "वृष्ण ऊर्मिरिति। स्वाहान्तो हवनमन्त्रः, द्वितीयो ग्रहणमन्त्र इति विभागः। अर्थस्तु— हे ऊर्मे! 'वृष्णः' वर्षितुः सेक्तुर्वा सम्बन्धी 'ऊर्मिः' भवसि। 'राष्ट्रदाः' त्वं तु स्वभावत एव राष्ट्रं जनपदं ददातीति राष्ट्रदाः। अतो 'राष्ट्रं' 'मे' मह्यं 'देहि'। 'स्वाहा' –इति होमार्थः * ॥

द्वितीयोऽप्येवं व्याख्येयः; तत्र 'अमुष्मै'–इति विशेषः। एतन्नामकाय यजमानाय मह्य' देहीति तस्यार्थः † ॥

एवं सुपरिचिता अपि मन्त्रा व्याख्येयाः ॥ ५ ॥

द्वितीयस्योर्मेर्ग्रहणं विधत्ते— "अथ यः प्रत्यङ्ङिति। "वृषसेन इति ‡। 'वृषसेनः' "वृष सेचने", सेना नाम सचति ; वर्षणशीलजलसङ्घो भवसि। शिष्टं पूर्ववत् ॥

ऊर्मिद्वयं जलवीर्यात्मना प्रशंसति— "वीर्यं वा इति। उभयोरप्यूर्म्योरेकत्वेन परिगणनमाह— "एता वा एता आप इति ॥ ६ ॥

---

* वा० सं० १० २ १।

† वा० सं० १०, २ २।

‡ तत्र होममन्त्रः—वा० सं० १०, २ ३। ततो ग्रहणमन्त्रः— वा० सं० १० २ ४। 'पूर्वं मास्य चतुर्गृहीतस्य होमः पश्चात् तासां ग्रहणम्'–इति कात्यः। 'नावस्तीर्य मरीचिषु न होमः प्रतिषेधात्' –इति च तत्रैव (श्रौ० सू०)।

प्रवहन्तीनां अपां ग्रहणं विधत्ते — "अथ स्यन्दमाना इति * । 'स्यन्दमानाः' प्रवहन्तीरपो गृह्णीयात् ॥

तद्वन्त्रस्याप्यय अर्थः — हे आपः । 'अर्षत' अर्थं प्रयोजनं गच्छन्तीति तादृश्य 'स्थ भवथ' । अत्र 'दत्त'-इति विशेषः † । प्रवहन्तीनां अपां वीर्यात्मकत्वमाह— 'वीर्येणेति । यत आपो वीर्येणैव 'स्यन्दन्ते', 'तस्मात्' 'स्यन्दमानाः' 'एनाः' अपः 'किञ्चन' वस्त्वपि 'प्रति'-मुख 'न धारयते' न धृतं भवति । यद्वा, प्रवहन्तीरपो न कश्चिदपि धारयितुं शक्नोतीत्यर्थः ॥ ७ ॥

प्रतिलोमं प्रवहन्तीनां अपां ग्रहणं विधत्ते — "अथ याः स्यन्दमानानामिति । 'स्यन्दमानानाम्' अपां मध्ये 'प्रतीपं' प्रतिकूलं ‡ 'स्यन्दन्ते', 'ताः' गृह्णीयात् § । 'ओजस्वती' बलवत्य 'स्थ' "वीर्येणेत्यादि पूर्ववद् व्याख्येयम् ‖ ॥ ८ ॥

नद्याः प्रवाहात् अपच्छिद्य गच्छन्तीनां अपां ग्रहणं विधत्ते— "अपयतीरिति । 'अपयतीः' नदीप्रवाहं परित्यज्य पृथक्-प्रवाहरूपेण या स्यन्दन्ते अपयत्य, ताः गृह्णीयात् ¶ ॥

---

* का० श्रौ० सू० १५ । ४ । २७ । नद्यादिस्था वहन्त्य आपः स्यन्दमाना उच्यन्ते—इति कर्काचार्यः

† वा० सं० १० । ३ । १ । २ ।

‡ चन्द्राकर्षणात् स्फीता विपरीतवाहिन्य ( ज्वार—इति प्रसिद्धा ) आपः प्रतिलोमा उच्यन्ते ।

§ का० श्रौ० सू० १५ । ४ । २८

‖ वा० सं० १० । २ । ४ ।

¶ का० श्रौ० सू० १५ । ४ । २९ ।

हि 'आपः' आप्नुवन्ति सर्वं मित्यापः, 'परिवाहिणीः' परितः सर्वतो वाहो यासां ताः। यद्वा, 'परिवाहिणीः' परित्यज्य पृथग् वहन्त्यः स्थ। तत्र स्वाहान्तो हवनमन्त्रः, उत्तरो ग्रहणमन्त्र इति प्रागुक्तम्। एवं मुत्तरवाक्यव्याख्येयम् ॥

परिवाहिणीभिरभिषेकं प्रशंसति— "एतस्यै वा इति। 'एषा' परिवाहिणी *, 'एतस्याः' महानद्याः सकाशाद् 'अपच्छिद्य' पृथक्-कृत्य परिवहति, 'एषैव पुनर्भवति'। संसृष्टा परिपदी पुनरेषैव महानदी भवतीत्यर्थः। यथादपच्छिन्ना नदी, पुनस्तां महानदीं प्राप्नोति। तस्मादेताभिरद्भिरभिषिक्तोऽन्यराष्ट्रीयः पुरुषः 'राष्ट्रे' स्वराष्ट्रे भवति, अन्यराष्ट्रीयम् 'अवहरति' वशयति। यथा महानदी परिपदीसंसर्गेण भूयसी जाता, 'तथा' तस्मिन् राजनि अन्यराष्ट्रीयसमवधानेन 'भूमानं' भूयस्त्वं 'दधाति' † ॥ ८ ॥

अथ समुद्रोदकग्रहणं विधत्ते— "अथ नदीपतिं गृह्णाति ‡। नदीपतिसमुद्रस्थितानाम् अपां सन्निधेयेव ग्रहणे प्राप्ते सृतानाम् उच्छलन्तीनां अपां ग्रहणं कर्तव्य मिति विशेषः; "नदीपतेः सृताः"—इति सूत्रकारात् §। सृतु उच्चन्ति ऊर्ध्वं यान्तीति सृताः, ता गृह्णीयादित्यर्थः। अपाम् उदकानां पतिः पालकः ‖ ॥ १० ॥

* 'परिपदी'—इति क, ख, ग। 'परिवाहिणी स्रोतः परिनदीनाम्'—इति चेह आप० श्रौ० सू० १८. १६. ९।

† मा० सं० १० ३ १, ६।    ‡ का० श्रौ० सू० १५ ४. २०।

§ का० श्रौ० सू० १५ ४ २१। 'सृताः वीचिस्थाः'।

‖ अत्र मन्त्रो— मा० सं० १० १ ७, ८।

अथावर्त्तोदकग्रहणं विधत्ते— "अथ निवेष्य मिति * । निवेष्यते † आवर्त्तेऽस्मिन् इत्यादिक मिति 'निवेष्यः' आवर्त्तः । तत्रस्य मुदकं गृह्णीयात् । 'अपाम्' उदकानां 'गर्भः' अपत्यं भवति । "गर्भो वा एतद्"–इत्यादिष्वस्य मर्थः ‡ ॥ ११ ॥

"अथ यः स्यन्दमानाना मिति । हे 'आपः ।' 'सूर्यत्वचस.' सूर्यस्य त्वक् दीप्तिर्यासां ताः, यद्वा, सूर्यस्य त्वक् शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः; तथाविधाः 'स्थ'। "वर्चसैवेति । 'वर्चसा' दीप्त्या अभिषिक्तवान् भवति । 'सूर्यत्वचसं' सूर्यसमानतेजस्कं जातवान् भवति § ॥

"वहस्था इति । स्थावरा आपो वरुणदेवत्या इत्यर्थः ‖ । "वरुणसव इति । 'राजसूयम्'–इति यत् 'एषः वरुणसवः' वरुणाभिषिक्तः; वरुणोऽभिषिच्यते यस्मिन्निति स । अतो वरुणदेवत्याभि. स्थावराभिरद्भिरभिषेकः कर्त्तव्यः ॥ १२ ॥

अथातपवर्ष्योग्रहणं विधत्ते— "अथ या आतपतीति ¶ । सूर्ये आतपति सति या वर्षन्ति, स्यन्दन्ते, ता गृह्णीयात् । "सूर्यवर्चस स्थातपति वर्ष्याणाम्"–इति हि आपस्तम्बः ** ।

---

* का० श्रौ० सू० १५ ४ ३३ ।

† निवेष्यते'–इति च ।

‡ अथ मन्त्री— वा० सं० १० ३ ६ १० ।

§ वा० सं १० ४ १, २ ।

‖ का० श्रौ० सू० १५ ४, ३४ । स्यन्दमानानां मध्ये याः स्थावराः स्थिरा न वहन्ति'–इत्यादिस्तद्वृत्तिरिहाशोध्या ।

¶ का० श्रौ० सू० १५ ४ ३५ ।

** आप० श्रौ० सू० १८, १३ १० ।

भूमेरधस्ताद् विप्रकृष्टे देशे कूपे स्थिताः अपः गृह्णीयात्। किमर्थं भूमिस्थितानामपां ग्रहणम्? तत्राह— "अपां सु चेति। 'अपां सधस्त्वाय' सर्वेषा मुदकानां समष्ट्या इत्यर्थः ॥ १५ ॥

अथ नीहारोदकानां ग्रहणं विधत्ते— "अथ प्रुष्वा इति *। 'प्रुष्वाः' नीहाराः। हे आपः! 'वशाः स्थ'। "वशा वाश्मी" †। सर्वैः काम्यमाना भवथ ‡। यद्वा, वशाः स्थ; नीहारो हि नदीप्रवाहवत् मनुष्यादिगतिं न प्रतिबध्नाति, अतो वश्यत्वम्। प्रुष्वाणां महत्त्वमस्य मुपपादयति— "इदं वा असाविति। 'उद्यन्' 'असौ' अन्तरिक्षे दृश्यमानः 'आदित्यः' 'इदम्' औषधिरूपम् 'अन्नाद्यं' निर्दहति। अन्नं च तदाद्य मदनीयं चेत्यन्नाद्यम्। तत्र दृष्टान्तः— "यथाय मग्निर्निर्दहेदेव मित्यादि। 'तत्' तदा अस्याः आतपजातसन्तापनिमग्नये § नीहाररूपाः 'आपः' 'अभ्यवयन्त्यः'। अत्यतिरेकं दर्शयति— "न ह वेत्यादिना। तस्मादोषधिवर्धनहेतुभूताभिः प्रुष्वाभिरद्भिः अभिषेचेन यजमानं अन्नाद्य मेव निहितवान् भवतीत्यर्थः ॥ १६ ॥

अथ मधुनो ग्रहणं विधत्ते— "अथ मध्विति ‖। हे 'मधु!' द्रवरूपा आपः! 'अपिहिताः' अनवद्यमाः 'स्थ' ¶। "अपाश्वैवेति। 'एतत्' एताभिः मधुद्रवरूपाभिरद्भिः अभि-

* का० श्रौ० सू० १५ । ३८ ।
† छान्दो० प० १८ ख० ।
‡ शा० मं० १०, ४ ८, १० ।
§ ०ग्रमाय (?)"—इति क ।
‖ का० श्रौ० सू० १५ । ३९ ।
¶ शु० मं० १०, ४ ११, १२ ।

मनु संसृजेदित्यर्थः। अत्र सूत्रम्— "आपः स्वराज इति मरीचीर्गन्दौल्वाश्मलिना सर्वासु संसृजति"-इति *॥

हे मरीचिरूपा आपः! 'स्वराजः स्थ' स्वय मेव राजमाना भवथ †। अत्र होमाभावात् स्वाहान्तः पूर्वो मन्त्रो न पठितः ‡। कथं मरीचीनाम् अप्त्वेन परिगणन मिति तदुपपादयति— "एता वा आप इति। 'मरीचयः'-इति 'यत्', 'एताः' 'स्वराजः' स्वय मेव दीप्यमानाः 'आपः'। "ता यत् स्यन्दन्त इति। 'यत्' यस्मात् 'ताः' मरीचयः 'स्यन्दन्त इव' प्रवहन्तीव। 'इव'-शब्दः उपमार्थे §; साक्षात् प्रवहणाभावात्। यथा जलसङ्घा उपर्युपरिभावेन वर्तन्ते, तद्वदेता मरीचयः 'अन्योऽन्यस्य' मरीचेः 'श्रिये' शोभायै 'यतिष्ठमानाः' स्यात् सवद्विषयः 'उत्तराधरा इव भवन्त्यः' 'यन्ति' गच्छन्ति। अतो जलसाम्यादप्त्वेन परिगणन मित्यर्थः ¶। मरीचीनां ग्रहणं स्वाराज्यहेतुत्वेन प्रशंसति— "स्वाराज्य मिति। अतो 'मरीचयः' स्वराज आपः ॥ २१ ॥

---

* का० श्रौ० सू० १५ ४ ३१।

† वा० सं० १० ४ २३।

‡ इह संहितापाठ, आर्तवोऽस्तोऽस्मै वा।

§ 'अत्यर्थे'—इति क।

¶ अपस्वतः, पूर्वौर्म्यः, अपरौर्म्यः, स्यन्दमानाः, प्रतिलोमाः, आपयत्यः, मरुदिषाः (नीविस्थाः, नीराजनाश्च), निवेष्याः, स्थावराः, आतपवर्ष्याः, सरस्याः, कूप्याः, सुम्नाः, प्रप्याः, कोषस्थाः, पयस्याः एतास्विकावयेति सप्तदशविधा आपो भवन्तीति।

|| 'अपोऽभिषिक्ता आपो मरीचयः'—इति का० ख०।

सम्भृतानां मधां सप्तदशसंख्यां प्राजापत्यात्मना स्तौति— "ता वा एताः सप्तदशेति । प्रजापतेः सप्तदशत्वं प्रागुक्तम् * ॥ २२ ॥

अथोक्तानां सारस्वतीप्रभृतिमरीच्यन्तानां मधां आहुतीनां च संख्यां समस्य प्राजापत्यात्मना प्रशंसति— "षोडश ता आप इति । 'याः' 'आपः' अभिलक्ष्य जुहोति, 'ताः' 'षोडश'; ऊर्मिदयस्य विवेके षोडशसंख्याका भवन्ति; आहुतयोऽपि षोडश, आहुतिभिः हविताः सारस्वत्यो मरीचय इति द्वय, ताः सम्भूय चतुस्त्रिंशत् सम्पद्यते। अत्र चतुस्त्रिंशत्सम्पत्त्या चतुस्त्रिंशद्देवतात्मकं प्रजापतिमेव ज्ञातवान् भवतीति तत्कारणं प्रशस्तमित्यर्थः ॥ २३ ॥

होमपूर्वकं ग्रहणं प्रशंसति— "अथ यदहुत्वा जुहोति। आज्यस्य वज्रात्मकत्वस्तुतिः प्रागुदाहृता †। वज्ररूपेण 'आज्येन' 'स्तृत्वा-स्तृत्वा' छित्त्वा-छित्त्वा, तत 'स्वीकृत्य' स्वाधीनं कृत्वा ग्रहणो भवेत्। यथा लोके राजादिः प्रबल शत्रु-प्रभृति जनं प्रथमं बाधित्वा पश्चात् स्वाधीनं करोति, तद्वदित्यर्थः ॥ २४ ॥

सारस्वतीषु मरीचिषु च होमाभावे कारणमाह— 'अथ यदिति ‡। सरस्वत्या वाचाः साक्षात् वाचो वज्रेण हिंसा माभूदिति न होतव्यम् ॥ २५ ॥

---

* इहैव पुरस्तात्— २३ पृ० १ पं० द्रष्टव्यम् ।

† प्रथमकाण्डे— ३६१ पृ० ७ पं० द्रष्टव्यम् ।

‡ सारस्वतीषु मरीचिषु च न होमः, प्रतिषेधात् । अत एव संहितायां अपि एतद्‌द्वयस्य आहुतिमन्त्राम्नानो न श्रूयते ।

"एव यज्ञरीचिष्विति । मरीचिष्वपि 'भनदा' पश्चात्ते मास्तां होमाधिकरणत्वाद्यथायाच होतव्य मित्यर्थः । 'मैत्'-इति निपात परिभवे, 'जुहवानि'-इत्यनेन सम्बध्यते ॥ २६ ॥

विधत्ते— "ता पार्थे मिति । 'ता' विहिता , पृथक् पृथक् पार्थे गृहीता आप 'पार्थ' सम्भृत एकस्मिन् 'पात्रे' 'समवनयति' आसिञ्चेदित्यर्थः * । 'मधुमती' मधुररसवत्य आप 'मधुमतीभि' अद्भि 'पृच्यन्ताम्' । "पृची सम्पर्के †", सम्पृच्यन्ताम् । ता विशिनष्टि— 'महि' महत् 'क्षत्रं' बलं क्षत्रियकुलं वा 'क्षत्रियाय' यजमानाय 'वन्वाना' आतु याचयमाना कामयमाना इति । अत्र मनूक्त ‡ आचष्टे— "मधुमतीरित्यादि । 'महि क्षत्र क्षत्रियाय वन्वाना' इति यदाह', 'तत्' तेन 'यजमानाय' 'परोक्ष' क्षत्र भव्याधक माधा सितवान् भवतीति योजना । 'क्षत्रियाय'-इति तारस्वाभि धानात् , 'वन्वाना' इति याचनाभिधानात् , आशिष परोक्षत्व मित्यर्थः ॥ २७ ॥

सहष्टाना मपां निधानस्थापिधानस्य पुरोदेशे सादन स मन्त्रक विधत्ते— "ता अपेधेति § । हे आप ! 'अनाधृष्टा' रक्षोभिरपराधिता , 'सहोजस' ओजसा बलेन सहिता , अवीर्या 'सीदत' उपविशत । 'महि' महत् , 'क्षत्र' बल क्षत्रियत्वं वा , 'क्षत्रियाय' 'दधती' दधत्य , धारयत्य ,

* का० श्रौ० सू० १५ । ४ । ४६ ।
† धात० चा० १० धा० ।
‡ मा० सं० १ । १० ।
§ का० श्रौ० सू० १५ । ५ । ३

प्रथमपुरुषस्य इति । मन्त्रं व्याचष्टे— "घनाघृष्टा इति *। 'दधती' -इति प्रदानस्य साक्षादुक्तेः प्रत्यक्षत्वं साधितं, 'सीदत'-इति मध्यमपुरुषप्रयोगादेति वेदितव्यम् ॥ २८ ॥ १ [ ३ ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् )

तं वै माध्यन्दिने सवने ऽभिषिञ्चति । एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति † ॥ १ ॥

षण्डौसि माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्य मेव स्तोत्र निष्केवल्यं शस्त्र मिन्द्रो वै यजमानस्-

---

* वा० सं० १० । ७ ।
† 'सुवति'—इति क ।

देनए स एवायतने ऽभिषिञ्चति तस्माद्गृह्णीते माहेन्द्रे * ॥ २ ॥

अथैष मैत्रावरुणस्य धिष्ण्याए। शार्दूलचर्मोपस्तृणाति सोमस्य त्विषिरसीति यत्र वै सोम इन्द्र मत्यपवत स यततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषि मेधाग्निन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति † ॥ ३ ॥

अथ पार्थानि जुहोति। पृथी ह वै ‡ वैन्यो मनुष्याणां प्रथमो ऽभिषिषिचे ऽ सो ऽकामयत सर्व्वं मन्नाद्य मवरुन्धीयेति तस्मा एतान्यजुहवुः स इदए सर्व्वं मन्नाद्य मवरुरुधेऽपि ह स्मास्मा ऽआरण्यान् पशूनभिह्वयन्त्यसावेहि राजा त्वा

पच्यस इइति तथेदᳬ सर्व्वं सन्नाय सवहृथं सर्वᳬ ह वा ऽअस्माद सवहृथे यस्यैवं विदुष एतानि हूयन्ते ॥ ४ ॥

तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति ॥ ५ ॥

षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्तद्वेन मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति ॥ ६ ॥

स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्पतिस्तेषां प्रथमो भवत्यथ यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्यं मिन्द्र एताभ्या मेवैन मेतद्वीर्याभ्या मुभयतः परिगृह्णाति ॥ ७ ॥

स जुहोति । यानि पुरस्तादभिषेकस्य जुहोत्यग्नये स्वाहेति तेजो वा ऽअग्निस्तेजसैवैन मेतदभिषिञ्चति सोमाय स्वाहेति क्षत्रं वै सोमः क्षत्रेणैवैन मेतदभिषिञ्चति सवित्रे स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैन मेतदभिषिञ्चति सरस्वत्यै स्वाहेति वाग्वै सर-

स्वती वाचैवैनमेतदभिषिञ्चति पूष्णे स्वाहेति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति बृहस्पतये स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनमेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते * ॥ ८ ॥

अथ जुहोति। यान्युपरिष्टादभिषेकस्य जुहोतीन्द्राय स्वाहेति वीर्यं वा ऽइन्द्रो वीर्येणैवैनमेतदभिषिञ्चति घोषाय स्वाहेति वीर्यं वै घोषो वीर्येणैवैनमेतदभिषिञ्चति श्लोकाय स्वाहेति वीर्यं वै श्लोको वीर्येणैवैनमेतदभिषिञ्चत्यंशाय स्वाहेति वीर्यं वा ऽअंशो वीर्येणैवैनमेतदभिषिञ्चति भगाय स्वाहेति वीर्यं वै भगो वीर्येणैवैनमेतदभिषिञ्चत्यर्यम्णे स्वाहेति तदेनमस्य सर्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जुहोति † तान्येतान्यादित्यनामानीत्याचक्षते ‡ ॥ ९ ॥

---

* '०त्याचष्टे'—इति क। † 'जुहोति'—इति ख।
‡ '०त्याचक्षते'—इति क ख।

अग्रेण मैत्रावरुणस्य धिष्ण्यम्। अभिषेचनीयानि पात्राणि भवन्ति यत्रैता आपोऽभिषेचनीया भवन्ति ॥ १० ॥

पालाशं भवति। तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति* ॥ ११ ॥

औदुम्बरं भवति। तेन स्वोऽभिषिञ्चत्यन्नं वा † ऊर्गुदुम्बर ऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोर्क् स्वं तस्मादौदुम्बरेण स्वोऽभिषिञ्चति ॥ १२ ॥

नैयग्रोधपादं भवति। तेन मित्र्यो राजन्योऽभिषिञ्चति पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिञ्चति ‡ ॥ १३ ॥

आश्वत्थं भवति। तेन वैश्योऽभिषिञ्चति स यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपा-

* '०षिञ्चति'—इति क।

† '०मुदाना'—इति ख।

‡ '०षिञ्चति' इति क।

मन्वयत तस्मादाश्वत्थेन व्यैश्यो ऽभिषिच्यत्येता-न्यभिषेचनीयानि पात्राणि भवन्ति* ॥ १४ ॥

अथ पवित्रे करोति। पवित्रे स्थो वैष्णव्याविति सो ऽसावेव बन्धुस्तयोर्हिरण्यं प्रवयति ताभ्यामेता अभिषेचनीया अप उत् पुनाति तद्य-द्धिरण्यं प्रवयत्यमृतमायुर्हिरण्यं तदा स्वमृतमायुर्दधाति तस्माद्धिरण्यं प्रवयति ॥ १५ ॥

स उत्पुनाति। सवितुर्व्वः प्रसव उत्पुनाम्य-च्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सो ऽसा-वेव बन्धुरनिभृष्ट मसि वाचो बन्धुस्तपोजा इत्य-नाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानिभृष्ट मसीति वाचो बन्धुरिति यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा वदति तस्मादाह वाचो बन्धुरिति ॥ १६ ॥

तपोजा इति। अग्नेर्व्वै धूमो जायते धूमा-दभ्रमभ्राद्वृष्टिरग्नेर्वा ऽएता जायन्ते तस्मादाह तपोजा इति ॥ १७ ॥

---

*, भवन्ति'–इति क।

सोमस्य दात्र मसीति। यदा वा ऽएन मेता भिरभिषुण्वन्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्र मसीति स्वाहा राजस्व इति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥ १८ ॥

ता एतेषु पात्रेषु व्यानयति। सधमादो द्युम्निनीराप एता इत्यनतिमानिन्य इत्येवैतदाह यदाह सधमाद इति द्युम्निनीराप एता इति वीर्यवत्य इत्येवैतदाहानाधृष्टा अपस्यो वसाना इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानाधृष्टा अपस्यो वसाना इति पस्त्यासु चक्रे वरुण सधस्थ मिति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठा मित्येवैतदाहापां शिशु-र्मातृतमास्वन्तरित्यपां वा ऽएष शिशुर्भवति यो राजसूयेन यजते तस्मादाहापां शिशुर्मातृतमास्वन्तरिति † ॥ १९ ॥

---

* 'मेताभिरभिषुण्व०' — इति क ग। 'मेताभिरभिषुण्व०' — इति च कर का० वेबरस्य।

† रिति — इति क 'रिति — इति च।

अथैनं व्वासाꣳसि परिधापयति। तत्तार्प्यमिति व्वासो भवति तस्मिन्त् सर्व्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति क्षत्रस्योल्वमसीति तद्यदेव क्षत्रस्योल्वं तत एवैनमेतज्जनयति * ॥ २० ॥

अथैनं पाण्डं परिधापयति। क्षत्रस्य जरायुरसीति तद्यदेव क्षत्रस्य जरायु तत एवैनमेतज्जनयति † ॥ २१ ॥

अथाधीवासं प्रति मुञ्चति। क्षत्रस्य योनिरसीति तद्येव क्षत्रस्य योनिस्तस्या एवैनमेतज्जनयति ‡ ॥ २२ ॥

अथोष्णीषꣳ संहृत्य §। पुरस्तादवगूहति क्षत्रस्य नाभिरसीति तद्येव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥ २३ ॥

तद्वैके। समन्तं परिवेष्टयन्ति नाभिर्वा ऽअस्यैषा समन्तं वा ऽइयं नाभिः पर्येतीति

---

*, †, ‡ 'जनयति'—इति क।

§ 'परिहृत्य'—इति क, इदं चैतत् का०—शैखरीय।

व्यदन्ति तदु तथा न कुर्य्यात् पुरस्तादेवावगूहेत् पुरस्ताद्वीयं नाभिस्तद्यदेनं वाससाऽपि परिधापयति जनयत्येवैन मेतज्जात मभिविष्वङ्गानीति तस्मादेनं वाससाऽपि परिधापयति ॥ २४ ॥

तद्धैके । निदधत्येतानि वासाठ्यथैनं पुन-र्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्या-द्यानि वा ऽअस्य तनूर्वासाठ्यङ्गैर्हैनठ् सजन्त्वा * तन्वा व्यर्धयन्ति व्यृद्धं दीक्षितवसनठ् स एतेषा मेवैकं वाससां परिदधीत तदेन मङ्गैर्जन्वा तन्वा समर्द्धयति व्यृद्धं दीक्षितवसनं तदेन व्यृद्धा-द्दीक्षितवसनात् प्रमुञ्चति ॥ २५ ॥

स यत्नायभृथ मभ्यवैति । तदेतदभ्यवहरन्ति तत् सलोम क्रियते स एतेषा मेवैकं वाससा परिधायोदैति तानि व्यवाये वा व्यपायाठ् कुतार्थां दद्यादुदवसानीयाया वेष्टी ॥ २६ ॥

अथ धनुरधितनोति । इन्द्रस्य वार्त्रघ्न मसीति वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो दयेन या

---

* 'तनूभ्यां'—इति च इदं का०-मेदरवं ।

ऽएष इन्द्रो भवति यत्क्षत्रियो यद्‌ च यजमानस्तस्मादाहेन्द्रस्य व्वार्त्रघ्न मसीति * ॥ २७ ॥

अथ बाहू व्विमार्ष्टि। मित्रस्यासि व्वरुणस्यासीति बाह्वोर्व्वै धनुर्बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्यासि व्वरुणस्यासीति तदस्मै प्रयच्छति त्वयायं वृत्रं वधेदिति त्वयायं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह † ॥ २८ ॥

अथास्मै तिस्र इषूः प्रयच्छति। स यया प्रथमया समर्पयेन परा भिनत्ति‡ सैका सेयं पृथिवी सैषा दृशा नामाथ यया व्विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षं सैषा रुजा नामाथ ययावैव राध्नोति सा तृतीया साऽसौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र इषवस्तस्मादस्मै तिस्र इषूः प्रयच्छति ॥ २९ ॥

ताः प्रयच्छति। पातैनं प्राञ्चं पातैनं

---

* 'समाप्ति—इति क।

† ०त्दाह' इति क।

‡ 'परान् भिनत्ति'—इति क। परान् भिनत्ति—इति माधव भाष्यात, पाठ इति च डा० वेबर।

प्रत्यञ्चं पातेन तिर्यञ्चं दिग्भ्य पातेति तद्यस्मै सर्व्वा एव दिशो ऽशरव्याः करोति तद्यदस्मै धनुः प्रयच्छति वीर्यं वा ऽएतद्राजन्यस्य यद्धनुर्व्वीर्यवन्तमभिषिञ्चानीति तस्मादा ऽअस्मा ऽआयुधं प्रयच्छति * ॥ ३० ॥

अथैन माविदो वाचयति। आविर्मर्या इत्यनिरुक्तं प्रजापतिर्व्वा ऽअनिरुक्तस्तदेनं प्रजापतय ऽआवेदयति सोऽस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३१ ॥

आवित्तो ऽअग्निर्गृहपतिरिति। ब्रह्म वा ऽअग्निस्तदेनं ब्रह्मण ऽआवेदयति तदस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३२ ॥

आवित्तो ऽइन्द्रो वृद्धश्रवा इति। क्षत्रं वा ऽइन्द्रस्तदेनं क्षत्रायावेदयति तदस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३३ ॥

आवित्तौ मित्रावरुणौ धृतव्रताविति। प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्या

* 'प्रयच्छति'—इति क।

मावेदयति तावस्मै सव मनुमन्येते ताभ्या मनुमतः सूयते ॥ ३४ ॥

आवित्तः पूषा विश्ववेदा इति। पशवो वै पूषा तदेनं पशुभ्य आवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते ॥ ३५ ॥

आवित्ते द्यावापृथिवी विश्वशम्भुवाविति। तदेन साभ्यां द्यावापृथिवीभ्या मावेदयति तेऽस्मै सव मनुमन्येते ताभ्या मनुमतः सूयते ॥ ३६ ॥

आवित्तादितिरुरुशर्मेति। इयं वै पृथिव्यदितिस्तदेन मस्यै पृथिव्या ऽआवेदयति सास्मै सव मनुमन्यते तयानुमत सूयते तद्याभ्य एवैन मेतद्देवताभ्य आवेदयति ता अस्मै सव मनुमन्यन्ते ताभिरनुमतः सूयते ॥ ३७ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [३. ५.] ॥

पञ्चमे ब्राह्मणे यजमानाभिषेक , तदर्था धर्माय विधी यन्ते। तत्र यजमानाभिषेकं सकाल विधत्ते— "त वै माध्य न्दिन , इति। माध्यन्दिनसवने क्रियमाणे अभिषेक प्रशसति—

"अपि ह स्मेति। 'अपि' खलु 'अश्वं' यजमानाय, तदर्थम्, 'आरण्यान्' अरण्ये भवान् 'पशून्' 'अभिह्वयन्ति'। किम्? इति। "पत्नाविति। तत्पूर्वगनाम्न सम्बुद्ध्यन्तस्य सामान्यनिर्देशः। हे पशो। 'एहि' आगच्छ, अयं 'राजा' 'त्वा' त्वां 'पक्ष्यते' भोक्तुं पक्वं करिष्यति 'इति'। सोऽपि पशुः तद् वचः श्रुत्वा तत्समीपं स्वय मेवागच्छति। 'तथा' सति ग्राम्यारण्यभक्षणस्य सर्वस्यान्नस्यावरोधः। विदुषोऽस्यान्नस्यापि अनुष्ठातुस्तत्फलम् आह— "सर्वं ह वा इति॥ ४॥

एतेषां संख्यां विधत्ते— "तानि वै द्वादशेति। उक्तां संख्यां संवत्सरात्मना प्रशंसति— "द्वादशेति॥ ५॥

एतेषां हवनकालं विधत्ते— "षडिति। द्वादशानां पदार्थानां मध्ये पूर्वषट्कस्यान्ते "बृहस्पतये स्वाहा"–इति पठ्यते, उत्तरषट्कस्यादौ "इन्द्राय स्वाहा"–इति *। तयोरुभयोर्मध्ये अभिषेकेण यजमानं ब्रह्मक्षत्रवीर्याभ्याम् उभयतः सम्परिहितवान् भवतीति॥ ६, ७॥

अभिषेकस्य पुरस्तात् कर्तव्यं होमं मन्त्रान् विधत्ते— "स जुहोतीति। "अग्नये स्वाहा"–इत्यादयो मन्त्राः †। तमेवैकं अनूद्य स्तौति— "तेजो वा अग्निरित्यादिना। अर्थवादवाक्येषु स्पष्टोऽर्थः। सोमादिपदानां देवतान्तरवाचकत्वं व्युदस्यति— "नामधेयान्यग्निमाप्नोतीति। 'तानि' पूर्वोक्तानि पादानि 'अग्निनामान्याप्नोति', ब्रह्मवादिन इति शेषः; अग्नेः सर्वदेवतात्मकत्वादिति भावः॥ ८॥

---

* वा० सं० १० ५ ६, ०मन्त्रौ द्रष्टव्यौ।

† ऋ० सं० १० ५ १–६।

अभिषेकस्योपरि कर्त्तव्यं होममन्त्रं मन्त्रान् सार्थ-वादं विधत्ते— "पञ्च जुहोतीति । "इन्द्राय स्वाहा"—इत्या-दयो मन्त्राः * । यथेन्द्रादयः पञ्च देवता अपि वीर्यात्मना सुताः । "तदेनमस्य सर्वस्येति । पञ्चसंख्यहोमेन 'एनं' यजमानं 'सर्वस्य' 'अर्यमणं' नियन्तारं अधिपतिं कृतवान् भवतीत्यर्थः । इन्द्रादिपञ्चदेवतावाचकानां पदानां देवता-नामात्मवाचकत्वं व्युदस्यति— "आदित्यनामानीति । इन्द्रादय-शब्दा आदित्यस्यैव मूर्त्तिभेदेनावस्थितस्य नामानि । पूर्वं सवितापर्यायैर्नामभिर्होमेन भूलोके यजमानं निहितवान् भवति, अत्र त आदित्यवाचकैर्नामभिर्होमेन स्वर्गलोके अवस्थापितवान् भवतीत्युभयार्थवादवाक्यतात्पर्यार्थः ॥ ९ ॥

अभिषेचनीयानां पात्राणां सादनप्रदेशं विधत्ते— "अग्रे-णेति । सूक्तम् पूर्वं सुदाहृतम् । अभिषेचनीयशब्दं निर्वक्ति— "यच्चेति । यत् तेषु पात्रेषु 'यताः' विहिताः सत्य 'आपः' 'अभिषेचनीयाः' अभिषेकाय आसिच्यमानाः 'भवन्ति', तानि अभिषेचनीयानीति ॥ १० ॥

तानि पात्राणि अभिषेक्तृविशेषसहितानि क्रमेण विधत्ते— "पालाशं भवतीति † । 'पालाशम्' पलाशशाखानिर्मितं तेन पात्रेण 'ब्राह्मणः' यजमानम् अभिषिञ्चेत् । पालाशेनैव ब्राह्मणकर्तृकयजमानाभिषेककरणे कारणमाह— "ब्रह्म वा इति । 'पलाशः' 'ब्रह्म वै' इत्येषु ब्राह्मणजातिः ॥ ११ ॥

* वा० सं० १०. ५. ७—१२ ।

† 'अभिषेचनीयैश्चैता व्यानयति'—इति का० श्रौ० सू० १५. ४. ६ । 'पालाशादिचतुर्षु पात्रेषु चतुर्धा विभज्य व्यानयति एता अपः'—इति तद्वृत्तिः ।

"एष वै प्रजापतिरिति। माध्यन्दिनसवने क्रियमाणेनाभिषेकेण 'एनं' यजमानं 'मध्यत एव' यज्ञरूपप्रजापतिमध्ये एव निहितवान् भवति। 'मध्यतः' मध्ये 'सुवति' प्रेरयति, अध्वर्युरित्यर्थः ॥ १ ॥

कालविशेषं विधत्ते— "अभ्यहीत इति*। 'माहेन्द्रे' ग्रहे 'अभ्यहीते' सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः। माहेन्द्रग्रहणात् पूर्वं यजमानाभिषेकं स्वायतननिधानरूपेण प्रशंसति— "एष वा इन्द्रस्येति। एतं प्रथमाध्याये व्याख्यातम्†। अत्र यदुक्तं कात्यायनेन— "मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अनाधृष्टाः सीदेति, पात्राणि च तूष्णीं पान्नाग्नीद्रव्यस्यैवपोभवटाज्यस्थान्यभिषिञ्चाय"–इति‡। "मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषि रिति§, अपरेऽन्ते सीसं निदधाति, पार्वाणा मन्नये स्वाहेति। पद् गुणोति प्रतिमन्त्रम्"–इति‖ च ॥ २ ॥

तदिदं क्रमेण विहितव्याघ्रचर्मास्तरणं समन्त्रकं विधत्ते— "अथे-ति। मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मास्तृणीयात्**। चर्मन्। 'सोमस्य' 'त्विषिः' दीप्तिः 'असि'। 'तवेव' यथा

---

* का० श्रौ० सू० १५ ५ १।

† १ ७ ३ (३८ ए० १८पं० पुन. ४३ए० ३पं०), द्रष्टव्यम्।

‡ का० श्रौ० सू० १५ ४ ३७, ३८।

§ वा० सं० १० ५ १।

‖ का० श्रौ० १० ५. २–७।

¶ का० श्रौ० सू० १५ ५. ५, ७ १।

** का० श्रौ० सू० १५ ५. १।

तव दीप्तिरस्ति, तथा 'मे' मम 'त्विषि.' दीप्तिः 'भूयात्' अस्त्विति *। शार्दूलस्य सोमत्विषित्वं आख्यायिकामुखेनोपपादयति— "यत्र वै सोम इति। पूर्वं मिन्द्रेण पीयमानः सोमः, तम् 'अत्यपवत' शरीरादधो निरगच्छत्। स सोमो यदा अत्यपवत, ततः सोऽतिपवितः सोम शार्दूलः सम्भूतवान् †। 'तस्मात्' शार्दूलस्य सोमकार्यत्वात् तदीयत्वचः सोमत्विषित्वम्। "तयैव मे"—इतिमन्त्रभागस्य तात्पर्यं माह— "तयैव म इति। 'एतत्' एतेन मन्त्रभागस्तेन 'अस्मिन्' यजमाने शार्दूलदीप्ति मेव निहितवान् भवति ॥ ३ ॥

अथाभिषेकस्य पुरस्तात् पश्चाच्च क्रियमाणान् पार्थहोमान् विधत्ते— "अथ पार्थानीति ‡। 'पार्थानि' पृथिनानुष्ठितानि। एतेषां पृथिसम्बन्धं दर्शयति— "पृथी हेति। 'वैन्यः' वेनो नाम राजा, तस्य पुत्रः 'पृथी' नाम §, 'मनुष्याणां' मध्ये 'प्रथम.' अभिषिक्त.। 'सर्वम् अन्नाद्यम्' 'अवरुन्धीय' स्वाधीनं कुर्याम् 'इति' कामयमानाय 'तस्मै' पृथवे ‖ 'एतानि' पार्थानि 'अजुहवु.' अध्वर्यव'। ततः 'स.' राजा 'इदं सर्वं मन्नाद्यम्' 'अवरुरुधे' स्वाधीनं कृतवान्। तत्रविधावरोधप्रकारं दर्शयति—

---

* वा० सं० १० ५ १।

† "यदत्यपवत् शार्दूलस्तेन ... " इति उपरिष्टाद् द्रष्टव्यम् (५ ४ १० )।

‡ का० श्रौ० सू० १५ ५. २।

§ अत्र पृथिविति भाष्यग्रन्थ एव भाष्यसम्मतः पाठो लभ्यते, चतुर्व्वेदारभ्यपुस्तकैर्व्विविधदर्शनात, मूले तु पृथुरिति च पाठः।

‖ चतुर्व्वेदस्थ टीकापुस्तकेष्विह 'पृथवे'—इत्येव।

औदुम्बर मिति। 'औदुम्बरम्' उदुम्बरनिर्मितं पात्रं द्वितीयम्। 'तेन' पात्रेण 'स्वाः' ज्ञातिः स्नाता अभिषेकं कुर्यात्। तत्रोपपत्तिं दर्शयति— "अन्नं वा इति। उदुम्बरस्यान्नसाधनत्वात् तद्रूपम्। अन्न मेव पुरुषस्य 'स्वं' धनं यतः, अतोऽस्य 'पुरुषस्य यावत् स्वं भवति', 'तावत्' 'न एष अशनायति' क्षुधितो न भवतीत्यर्थः, धनस्य विद्यमानत्वात्। अतोऽन्नस्य स्वस्य साधनेनौदुम्बरपात्रेण 'स्वाः' ज्ञातिभ्रातर एवाभिषिञ्चेत् ॥ १२ ॥

"नैयग्रोधपाद मिति। तृतीयं 'नैयग्रोधपादम्'। न्यग्रोधो नाम वटः, तस्य पादः शाखावरोहः, तेन निर्मितं नैयग्रोधपादम्। 'तेन' 'मित्र्यः' सखिकर्मणि साधुः सखा 'राजन्यः' अभिषिञ्चेत्। तत्र हेतु माह— "पद्भिरिति। न्यग्रोधस्य पादैरेव प्रतिष्ठा दृश्यते; राजापि मित्रोपदेशकैराप्तैः सखिभिः प्रतिष्ठितो भवति, नान्यथा। अतस्तेन पात्रेण मित्रकर्तृक मभिषेककरणं युक्त मित्यर्थः ॥ १३ ॥

"आश्वत्थ मिति। चतुर्थम् 'आश्वत्थम्' अश्वत्थनिर्मितम्, तेन 'वैश्यः' अभिषिञ्चेत्। अश्वत्थस्य वैश्यसम्बन्धं दर्शयति— "स यद्वेति। व्याख्यातम्। विड्रूपाणां मरुतां अश्वत्थेऽवस्थानात् वैश्यस्य तत्सम्बन्धः ॥ १४ ॥

अथ पवित्रकरणं विधत्ते— "अथ पवित्रे इति *। द्वे 'पवित्रे।' 'वैष्णव्यौ' विष्णुर्यज्ञः, तत्सम्बन्धिन्यौ दर्भनाड्यौ 'स्तः' भवतः, इति तत्रत्यार्थः †। दर्भनाड्योर्विष्णुसम्बन्धप्रतिपादकम् अर्थवादवाक्यं प्रतिपादयति— "सोऽग्नावेव यन्नुरिति।

---

* का॰ श्रौ॰ सू॰ १५ ५ ८ पा।
† वा॰ सं॰ १॰ ६ १।

'पसौ' निरुक्तः। प्रथमकाण्डे पवित्रकरणसमये समाम्नातः। तत्र चैव व्याख्यातम्— "पवित्रे स्थो वैष्णव्याविति, यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाहेत्यादि * ॥

तयोर्दर्भयोर्हिरण्यग्रथनं विधत्ते— "तयोरिति †। दर्भयो-स्तयोरिति सप्तमी। तत्र 'हिरण्यं' 'ग्रथ्नाति'। "ग्रेथ्, सन्दर्भे ‡"; सन्दृभीयादित्यर्थः। विधत्ते— "ताभ्यामिति। मध्यन्देन हिरण्यगर्भे पवित्रे सत्येते, 'ताभ्याम्' 'पतः' उक्ताः 'पयः' उत्पुनीयात्। हिरण्यग्रथनं मनूद्य प्रशंसति— "तद्धिरण्य मिति। "अमृत मिति। 'आयु' श्चिरत्वार्थं. ॥ १५ ॥

उत्पवन मनूद्य मन्त्रं विधत्ते— "स उत्पुनातीति §। "सवितुर्वः"-इति ‖ मन्त्रस्य पूर्वभागो व्याख्यातः। हे उदक ! 'अनिधृष्टम्', "अग्ने पावे" ¶, यथादिवद् वह्निसंयोगेऽपि न नितरां धृष्टं, न विनश्यतीति यावत्; रक्षोभिर्वा न बाधितं भवतीत्यर्थः। 'वाचो बन्धु.' वाग्व्यवहारस्य कारणम्। 'तपोजा.' "तप सन्तापे" **। तप.शब्देनाग्निरुच्यते, तस्मात् जातः। "सोमस्य' 'दात्रं' दानसाधनं भवसि। उदकसम्बन्धादेव सोमरसनिष्पत्ति.; तादृशो रस एव भवति, अतः सोमस्य

---

* १का० १प्र० ३ब्रा० १क० (६०पृ० १पं०)।
† का० श्रौ० सू० १५. ५ ८।
‡ भ्वा० प० १००७धा०।
§ का० श्रौ० सू० १५ ५ ५।
‖ वा० सं० १० ६ २।
¶ तु० पं० ३धा०।
** भ्वा० प० ९८५धा०।

द्दानसाधनभूता भवत। स्वाहाकारेण पूता स्थ। अत्र स्वाहा-शब्दो न होमार्थः; मन्त्रान्ते पाठाभावात्। 'राजस्वः' राजानं सुवते जनयतीति राजस्व *, राजोत्पादका इत्यर्थः ॥

मन्त्रे भागद्वयोऽमुख्य व्याख्यास्यन् सवितुर्व इति मन्त्रभागस्य प्रथमकाण्डे उत्पवनसमये समाम्नात अर्थवादवाक्य प्रति-दिशति— "सोऽसाविति। तत्र स्वेव माम्नातम्— "सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति, सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति, यो वा अयं पवत एषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरिति, एते वा उत्पवितारो यत् सूर्यस्य रश्मयः, तस्मादाह सूर्यस्य रश्मिभिरिति"—इति †। "अभिमष्ट स्थेति। सामान्यविशेषयैकवचनान्तत्वेन प्रयुक्तं सर्वा बहुत्वेन बहुवचना-न्ततया व्याचष्टे— "अनाधृष्टा स्थेति। अथा वाग्घस्युत्त अप-वादयति— "यावद्वै प्राणेष्विति। 'प्राणेषु' मुखनासिकादिषु यावदपां सद्भाव, तावत् पुरुषो वाचं वदति; तद्विरहे शुष्का जिह्वा शब्दानुच्चारयितुं न शक्नोतीत्यर्थः ॥ १६ ॥

"तपोजा इति। अथा परम्परया अग्निजनकत्वं दर्शयति— "अग्नेर्वा इति ॥ १७ ॥

सोमदानसाधनस्य शुल्कस्य निरूपयति— "यदा [redacted] एन-मिति। 'यदा' यस्मिन् काले 'एन' सोमम् 'एताभिः' अद्भिः 'अभिपुष्णन्ति' अभिषवं कुर्वन्ति, अध्वर्यवः। 'अथ' अभिषवा-नन्तरम् 'आहुति भवति' ॥ १८ ॥

---

* 'राजस्वः'- इति शाखान्तरीयः पाठः।

† १का॰ १अ॰ ३ब्रा॰ ६क॰ (४१ पृ॰ १ पं॰) द्रष्टव्यम्।

विभजते— "ता एतेष्विति। 'एतेषु' अभिषेचनीयेषु 'पात्रेषु' 'एताः' उक्ताः 'आपः' 'व्यानयति' आसिञ्चेदित्यर्थः *। 'सधमादः' सह माद्यन्तीति सधमादः, परस्परं सङ्गतिमापन्ना इत्यर्थः। "सध मादस्थयोश्छन्दसि"–इति † सहस्य सधादेशः। 'द्युम्निनीः' वीर्यवत्य 'एताः आपः'। 'रत्नीभिः' 'अनाधृष्टाः' अनभिभूताः, 'अपस्यः' अप इति कर्मनाम ‡, राजसूयाख्यं कर्म इच्छन्त्यः, 'वसानाः' "वस आच्छादने" § आच्छादयन्त्यो वा आपः, सन्तीति शेषः। तासु अतिशयेन मातृभूतासु 'पस्त्यासु' 'पस्त्या'–इति गृहनाम ‖, गृहावस्थितास्वप्सु 'अपां' मध्ये 'सधस्थं' सहस्थानं 'प्रतिष्ठाम्', 'अपां शिशुः' वरुणः; राजसूयेऽद्भिरभिषिक्तत्वात् तत्पुत्रत्वमुच्यते। तथाविधो वरुणः 'चक्रे' कृतवानिति। यद्वा, 'पस्त्यासु' गृहावस्थितासु 'विक्षु' प्रजास्विति व्याख्येयम् ¶ ॥

मन्त्रं प्रतिपाद्य मनूद्य तात्पर्यपुरस्सरं व्याचष्टे— "वसतिमापन्ना इति ॥ १८ ॥

विभजते— "अथैनं वासांसीति। 'एनं' यजमानं 'वासांसि' ( 'तार्प्यम्' ) तार्प्यपाण्ड्वधिवासोष्णीषाणि परिधापयेदिति सामान्यविधिः। तत्तात्पर्यार्थकथनपुरस्सरं विभजते— "तत्तार्प्यमिति। 'तत्' तत्र, तेषु प्रथमं 'तार्प्यमिति वासः'; ■ तार्प्यम्, क्षौमादिकमित्यर्थः। अत एव कात्यायनः—

---

* का० श्रौ० सू० १५ ५. ६ ।
† पा० सू० ६ ३ ९६ । ‡ निघ० २. १. १ ।
§ धातु० भ्वा० १३ धा० । ‖ निघ० ३. ४. ६ ।
¶ वा० सं० १०. ७ १ ।

"तार्प्यं परिधापयति, क्षौमं, त्रिपार्णं वा, घृतोक्तं मेके"— इति । तृपा नामौषधिविशेषः, तत्तन्तुनिर्मितम्, क्षौमं वस्त्रं 'तार्प्यम्', त्रिः तत्वः पायितं 'त्रिपार्णम्', 'घृतोक्षम्' "कन्दी क्लेदने" *, घृतसिक्त मिति 'एके' आचार्या वदन्ति † ।

तत्र कश्चिद् विशेषं विधत्ते— "तस्मिन्सर्वाणीति ‡ । 'यज्ञरूपाणि' स्रुक्चमसादीनि 'सर्वाणि' तस्मिन् 'स्यूतानि' भवेयुः । तार्प्यस्य परिधापने मन्त्रं विधत्ते— "क्षत्रस्येति § । हे तार्प्य! 'क्षत्रस्य' राज्ञो यजमानस्य गर्भत्वेनोपचर्य्यमाणस्य 'उल्बम्' आवरणम् 'असि'। उल्बावृतो गर्भ इति छन्दोगा आमनन्ति । उल्बत्वं साधयति— "तद्यदेवेति । 'यद्' उल्बं तस्मादेव 'एनं' यजमानम् 'एतत्' एतेन तार्प्यपरिधापनेन उत्पादितवान् भवति ॥ २० ॥

विधत्ते—"पाण्ड्वं मिति । 'पाण्ड्वम्' पाण्डरम्, श्वेतं कम्बलम् परिधापयेत्, तार्प्यस्योपरि माहल्यादित्यर्थः ‖ । 'पाण्डु'–शब्दार्थ उक्तः । तदिदं पाण्डरं द्वितीयम्; श्वेतम् पाण्डर मित्यापद्यते । हे पाण्डर-कम्बल । 'क्षत्रस्य' पूर्वोक्तविशेषणस्य 'जरायु' जरायुस्थानीयम् 'असि'–'इति' । 'एतेन' पाण्डरपरिधापनेन । 'तत' जरायोः ¶ ॥ २१ ॥

---

* रु० प्र० १६ धा० ।
† का० श्रौ० सू० १५ ५ ७—१० ।
‡ का० श्रौ० सू० १५ ५ ११ ।
§ वा० सं० १० ८ १ ।
‖ का० श्रौ० सू० १५ ५ १२ ।
¶ वा० सं० १०. ८. २ ।

विधत्ते— "अथाधीवास मिति *। अधि उपरि वसनीय माच्छादनीयं वस्त्रम् 'अधीवासम्', तत् प्रतिमुञ्चेत्। तार्प्यं सुपरिव्याय पाण्डर मुत्तरीयवदाच्छाद्य, 'अधीवास' कञ्चुकादिकम्, उपरि प्रतिमुञ्चेदित्यर्थः। हे वस्त्र। 'क्षत्रस्य' 'योनि' स्थानम् 'असि'। गर्भरूपयजमानस्य एतानि त्रीणि वस्त्राणि उल्ब जरायु-योनि रूपत्वेन प्रशस्तानीति समुदितोऽर्थः. † ॥ २२ ॥

उष्णीषवेष्टनं विधत्ते— 'अथोष्णीष मिति ‡। 'उष्णीषं संहृत्य' § शिरोगतरूपेण आवेष्टयत्य 'पुरस्तात्' पूर्वभागे नाभिदेशे 'अवगूहति' उष्णीषान्तं नीवीस्थाने प्रवेशयेदित्यर्थः। तन्मन्त्रस्याय मर्थः — 'क्षत्रस्य' 'नाभि' नाभिस्थानीयम् 'असि' इति । ‖ २३ ॥

उक्त उष्णीषान्तस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्ष मेव पशिष्य मनुवदति— "तदेक इति ¶। 'एके' शाखान्तराध्यायिनः 'तत्' उष्णीषं 'समन्तं' सर्वतो नाभिदेशे 'परिवेष्टयन्ति'। तदुपपादयति— "नाभिर्वा इति। 'एषः' क्षत्रियस्य 'एषा' उष्णीषरूपा 'नाभि' अपि 'समन्तं' 'पर्येति' परिवेष्टिता भवति। अत "क्षत्रियस्य नाभिरसि"-इति मन्त्रे उष्णीषस्य नाभित्ववचनात् तत्स्थाने समन्ताद् वेष्टन मुक्त मित्येकेषां मतम् ॥

---

* का० श्रौ० सू० १५ ५ ११ क।
† वा० सं० १० ८ १।
‡ का० श्रौ० सू० १५ ५ १२ ख।
§ 'संहृत्य'—इति क-पाठः।
‖ वा० सं० १० ८ ३।
¶ का० श्रौ० सू० १५ ५ १३।

तद् दूषयति— “तदु तथेति । उक्तं समतं निगमयति— “पुरस्तादेवेति । तत्र हेतु माह— “पुरस्ताद्वीय मिति । तार्प्यादिवासःपरिधापनं सम्भूय प्रशंसति— “तद्यदेनं वासांसीति । ‘एतत्’ एतेन वासःपरिधापनेन ‘एनं’ यजमानं ‘जनयति’ उत्पादितवान् भवति ; तेषां वाससां उल्बजरायुयोनिरूपत्वोक्तेः । किमर्थं जनन मिति तत्राह— “जात ममीति । ‘जातं’ यजमानम् ‘अभिविशानि’ अभिविश्य करवाणि ‘इति’ बुद्ध्या ‘वासांसि’ परिधापयेदित्यर्थः * ॥ २४ ॥

पूर्वं निहितस्य दीक्षितवसनस्य परित्यागं विधित्सुरेकीयां मत मुपन्यस्यति । यद्वा, अयं मपरः सम्बन्धः— निहितानां तार्प्यादीनां · परिधापनादिक मेव द्रढयितुं पूर्वपक्षयति— “तदेक इति । ‘एके’ शाखिनः एकवारं परिधापितानि ‘एतानि वासांसि’ ‘निदधति’ निक्षिप्य निदधुः । ‘अथ’ तदानी मेव तार्प्यादिवसनकाले निहितं ‘दीक्षितवसनम्’ ‘एनं’ यजमानं ‘पुनः परिधापयन्ति’ । पुनःपरिधापनकालस्तु सूत्रकृता दर्शितः— “दीक्षितवसननिष्ठाग्निर्विरोधात् , माहेन्द्रादौ वा पुनःपरिधानं निधायैतान्”–इति † । तद् दूषयति— “तदु तथेति । अङ्गानि वा इति । ‘वासांसि’–इति यत् तानि ‘अस्य’ यजमानस्य ‘जनूः अङ्गानि’ सहोत्पन्नानि । तार्प्यादीनां वाससां उल्ब-जरायु-प्रभृत्यात्मकत्वादङ्गत्वम् । अवस्थादीनान्तु गर्भावस्थायां सह निधानादङ्गत्व मुपचरितम् ॥

* ‘तार्प्यप्रभृतीनि वासांसीति प्रतिमन्त्रम्’—इति का० श्रौ० सू० १५. ५. १५ । मन्त्रास्तु ते वा० सं० १०. ८. १—४ ।

† का० श्रौ० सू० १५. ५-२६ ।

यद्वा, अथ सर्वे.— 'वासांसि तनूरङ्गानि' सहोत्पन्नत्वात् * तनूरूपाण्यङ्गानि । 'वै'-शब्दः प्रसिद्धिद्योतकः । तृतीयकाण्डे दीक्षाप्रकरणे "अथ वासः परिधत्ते"—इत्युपक्रम्याम्नातम्— "तस्मिन् एतां त्वच मदधुः वास एव तस्मात् नान्यः पुरुषाद् वासो बिभर्त्ति"—इति † । अतो वासोभिः परिधापनेन 'अन्या' 'तन्वा' सहोत्पन्नैः शरीरस्थैः 'अङ्गैः' समर्धितवान् भवति । अङ्गसमुदाय एव हि तनूः, शरीरेण सदङ्गैश्च संवर्धितवान् भवति । दीक्षितवसनस्य परित्यागं दर्शयितुं तस्य दुष्टत्व माह— "वरुण्य मिति । वरुणगृहीतं दुष्ट मित्यर्थः ॥

"न एतेषा मित्यादिव्याख्याय सर्वः— उक्तानां वाससा मेकेन ताप्येण ‡ प्रथमाभिषेके कारणाभावात् । यद्वा, 'एकम्' प्रथम मित्यर्थः । प्रथमन्तु ताप्यम्, तेन परिधापनं कर्त्तव्यम् । न तु दीक्षितवसनस्य पुनः परिधापन मित्यर्थः ॥ २५ ॥

निहितस्य दीक्षितवसनस्य अवभृथे प्रासनं विधत्ते— "स यदेति । 'अवभृथम्' 'अभ्यवहरन्ति' आहरेयुः, अप्सु प्रक्षिपेयुरित्यर्थः । 'तत्' तथा सति 'सनोस क्रियते' मङ्गलगत मनुष्य भवतीत्यर्थः । अस्तो तु § दीक्षितवसनस्य अवभृथे परित्याग उक्तः । "न एतेषा मित्यादिनादिशति । माहेन्द्रादौ दीक्षितवसनस्य पुनः परिधानं न कृतम्, तदा ताप्यादीना मेकेनैव परिहितेन वाससा अवभृथावतरण मुत्तरणं च

* 'सहोत्पन्नानि'—इति इ, ज ।

† ३ । १. १ १२—१६ (१३, १६ पृ०) ।

‡ 'ताप्यं'—इति च ।

§ 'तु'-शब्दो नास्ति च-पुस्तके ।

कर्त्तव्य मित्यर्थः। 'उदेहि' इत्युच्चरेत्। तेषां वाससां दानकालं विधत्ते — "तानि यथाया इति। अनुबन्ध्यावपायाग-काले आध्वर्यवे 'दद्यात्'। अवसाने कर्त्तव्या उदवसानीयेष्टिः, तस्यां वा दद्यात्। अतएव कात्यायनः— "अवभृथ मेकेन तार्प्यादीनि वेदुद्देलोकेन, दीक्षितवसनं च प्रास्यति, अनूबन्ध्या-वपाहोमान्ते दद्यादेतानि, उदवसानीयायां वा"–इति * ॥ २६ ॥

"अथ धनुरधीति †। 'अधितनोति' आतनोतीत्यर्थः। मन्त्रस्याय मर्थः— हे धनुः! त्वम् 'इन्द्रस्य' 'वार्त्रघ्न' वृत्र-हननसाधन मायुधम् 'असि' भवसि ‡। इन्द्रशब्दार्थ माह— "इन्द्रो वा इति। कथं यजमानस्येन्द्रत्व मिति तदुपपादयति— "द्वयेनेति। क्षत्रिय इति यत्, यजमान इति यत्, तेन द्वयेनेत्यर्थः। क्षत्रं नाम बलम्; तत्सम्बन्धात्, यष्टृत्वाच्चेत्यर्थः। इन्द्रस्य यजमानत्वं प्रागुक्तम् ॥ २७ ॥

विधत्ते— "अथ बाहू इति §। हे बाहो! 'मित्रस्य' 'असि' भवसि‖। तथापरं बाहुं प्रत्याह— "वरुणस्यासीति ¶। बाहुद्वयं विसृज्यात्। कर्कोपाध्यायेन ‖ बाहुशब्दस्य धनुष्कोटि-परत्वं व्याख्यातम् **। त मिमं प्रशंसति— "बाहो इति। बाहुभ्यां यतो मित्रवरुणसम्बन्धी राजन्यो भवति; बाहुवीर्य-

* का॰ श्रौ॰ सू॰ १५ ७. २५—२८ द्रष्टव्यम्।
† का॰ श्रौ॰ सू॰ १५ ५. १७।
‡ वा॰ सं॰ १० ८ ५।
§ का॰ श्रौ॰ सू॰ १५ ५ १८।
‖, ¶ वा॰ सं॰ १० ८ ६, ७।
** "बाहू धनुःकोट्याद्यर्थे"—इति (१५ ५. १८)।

सहायो राज्ञो लक्षण मित्यर्थः । धनु प्रदानं समन्त्रक विधत्ते-- "तदस्या इति *। हे धनु ! 'त्वया' साधनेन 'अय' यजमानो 'वृत्र' शत्रु 'वधेत्' हिंस्यादिति। मन्त्र व्याचष्टे-- "त्वयाय हिंस्त मिति †॥ २८॥

अथेषुत्रयदान विधत्ते-- "अयास्या इति। 'तिस्र'-इति लोकत्रयात्मकत्वेन। अस्याना मिषूणा लक्षण दर्शयति-- 'स यथेति।

'समर्पणेन' परित्यागमात्रेण 'यया' 'परान्' 'भिनत्ति' शत्रून् विदारयति, तस्या एकस्या 'दृषा'-नामधेयाया पृथिव्यात्मकत्वेन प्राबल्य मित्यर्थः। 'यया' विद्धस्य ताडितस्य जीवने सन्देह, तस्या 'रुजा'-नाम्न्या अन्तरिक्षात्मकत्वम्। यया राजा शत्रुम् 'अपराध्नोति' हिनस्त्येव, तस्या 'क्षुमा'-नामधेयाया द्युलोकात्मकत्वेन प्राबल्य मित्यर्थः ‡॥

अत्र कश्चिद् विशेष कात्यायन सूत्रयामास-- "दृषासीति प्रतिमन्त्र मादाय तिस्र इषू प्रयच्छति"-इति §। तेषा मन्त्राणा मय मर्थ :-- 'दृषा' "दृ विदारणे" ‖, दृषासीति 'दृषा' विदारिका 'असि' इति। दृष्यतेर्वा रूपम्। इति मयैरेवप्रदर्शनम्। 'रुजा' "रुजो भङ्गे" ¶, भङ्गहेतुरिषुरसि।

---

* का० श्रौ० १५ ५ १८।
† ऋ० म० १ ८ ६।
‡ एतद्व्याख्यानानि एतद्भाष्याण्यप्यनमृतानि इह पुस्तके।
§ का० श्रौ० सू० १५ ५ २०।
‖ धा० प० २० धा०।
¶ तु० प० १२६ धा०।

अनेन द्वितीयशरग्रहणम्। 'क्षुमा' "क्षुप विधूनने" *, क्षुपतीति क्षुपा, पकारस्य स्थाने मकारः; अनुक्षुपणकारिणी इषुरसि। अनेन तृतीयशरग्रहणम्। एवमादाय दद्यात् ॥ २९ ॥

इषुदानमन्त्रं सम्यग् विधत्ते— "ताः प्रयच्छतीति †। 'एनं' यजमानं 'प्राञ्चं' प्राग्गमनम्, प्राग् गन्तारम् हे इषवः !, 'पात' पालयत। 'प्रत्यञ्चम्' प्रत्यग् गन्तारम्, 'तिर्यञ्चम्' तिर्यग् गन्तारम्, किं बहुना 'दिग्भ्यः' सर्वाभ्यः 'पात' इति। "तद्वस्था इति। 'अशरव्याः' अहिंसकाः; शरस्य शरत्वम्, तद्रहिताः 'करोति'। अनेन सर्वास्वपि दिक्षु परकीयशरप्रयाणात् निवर्त्यते ‡ ॥

इदं मन्त्रं लिङ्गाभिधानेऽपि कात्यायनो विनियुक्तवान्— "पातैन मित्यभिमन्त्रयति"-इति §। आपस्तम्बोऽपि— "पात मा प्रत्यञ्च मिति प्रदीयमानाननुमन्त्रयते"-इति ‖। ॥ ३० ॥

विधत्ते— "प्रथैन माविद इति ¶। आविद-पदयुक्ताः ये मन्त्राः, 'आविद', तान् वाचयतीत्यर्थः। आवेदयन्ति प्रापयन्ति देवताभ्य एनं यजमान मित्याविदो मन्त्राः।

तत्र मन्त्रान् विधत्ते— "आविर्मर्या इति **। 'आवि-

---

* सौत्रोऽयं मकारान्तार्थो धातुः, ततो बोपदेवेन धा० प० पठितः।

† वा० सं० १० ८ १०, ११, १२।

‡ वा० सं० १० ८ १३।

§ का० श्रौ० सू० १५ ५ २० ख।

‖ आप० श्रौ० सू० १८ [illegible] १३।

¶ का० श्रौ० सू० १५ ५ २२।

** वा० सं० १० ६ १-७।

मेया इत्यनिरुक्तम्' साक्षाद्दैवतावाचकपदरहितं सर्व्वं वाचये-दित्यर्थः। हे 'मर्त्ताः' मरणयोग्या मनुष्याः। 'आविः' प्रकाशो-ऽभूत्। अनेन कस्मै देवतायै यजमान आवेदितो भवतीत्या-शङ्क्य तां देवतां दर्शयति— "प्रजापतिरिति। 'प्रजापतिः' खलु 'अनिरुक्तः' ईदृश इति वक्तु मनर्हः ; तस्मादनेन यजुषा अनिरुक्तेन अनिरुक्तात्मने 'प्रजापतये' 'एनं' यजमानम् आवेदितवान् भव-तीत्यर्थः। आवेदनस्य फल माह— "सोऽस्मा इति। 'सः' आवेदितः ज्ञापितः प्रजापतिः 'अस्मै' सुन्वते 'सवम्' अभिषेकम् 'अनुमन्यते', 'तेन' प्रजापतिना 'अनुमतः' अनुज्ञातः 'सूयते' अभिषिच्यते। एव मुत्तरत्रापि व्याख्येयम् ॥ ३१ ॥

"आवित्तो ऽग्निर्गृहपतिरितीति। गृहपतिगुणकः 'अग्निः' 'आवित्तः' आवेदितः, ज्ञापितः। "वित्तो भोगप्रत्यययोः"—इति * निपातितः। अग्नये यजमानं ज्ञापितवानित्यर्थः ॥ ३२ ॥

"आवित्त इन्द्रो † इति। 'वृद्धश्रवाः'। "श्रव इत्यन्ननाम, श्रूयत इति सतः"—इति हि यास्कः ‡। वृद्धं प्रभूतं अन्नं यस्य ॥ ३३ ॥

"आवित्तौ मित्रावरुणाविति। 'धृतव्रतौ'। व्रत मिति कर्म-नाम §, धृतधीरितकर्माणौ ॥ ३४ ॥

"आवित्तः पूषा इति। 'विश्ववेदाः' सर्वधनः ॥ ३५ ॥

"आवित्ते द्यावापृथिवी इति। 'विश्वशम्भुवौ' सर्वस्य जगतः सुखस्य भावयित्र्यौ ॥ ३६ ॥

---

* पा० सू० ८. २ ५८।

† 'आवित्तोऽइन्द्र'—इति ग, घ।

‡ निरु० १०. १ ३।　　§ निघ० २ १. ३।

“सावित्र्यादितिरिति *। ‘उरुगर्भा’ प्रभूत सख यस्याः, ‘अदिति’ अखण्डनीया देवमाता। भूमिरेव काचिन्मूर्त्ति धृत्वा देवमातादितिरित्युच्यते † ॥

एता देवताः सम्भूय प्रशसति— “तथाभ्य एवैन मिति ॥ १७ ॥ २ [ ३ ५ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमी ।
रत्नोस्रा हस्त्यश्वाजिविपक्षितरथौ सायणि सिद्धार्थौ,
ध्यात्वा पीठित्रयम् प्रथितविधिमहाभूतयुक्त घटश्च ॥
धान्याद्रिं मन्वजम्मा तिलभव मतुन स्वर्णज पर्णभुख्य,
कार्पासीश्च कषायान् गुडकृत मजलो राजत राजपूज्य ।

* ‘देवाश्चित् प्रतिमन्त्रम्’ नेति सम्प्रदाय —इति का० श्रौ० सू० १५ ५ २१ वृत्ति । † अखण्डनीयेयो भूमिरिति नैरुक्ताः ।

प्राच्योर्ध्वं प्राच्यजस्रा लवणज मधुपः शार्करं चार्कतेजाः,
पश्चाच्चो रत्नरूपं गिरि मकृत मुदा पात्रवाक्रिद्रपार्यं. ॥ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

१ षड्वटीयघो द्वितीयाध्याये (१५१ पृ०) द्रष्टव्याः ।

( अथ चतुर्थाध्याये प्रथमं ब्राह्मणम् । )

---

केशवस्य पुरुषस्य । लोहायसमास्य ऽआविध्यत्य-हिष्टा दन्दशूका इति सर्व्वान्वा ऽएष मृत्यूनति-मुच्यते सर्व्वान् वधान् * यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्व्वधस्तं† मेवैतदति-नयति यद्दन्दशूकान् ॥ १ ॥

अथ यत् केशवस्य पुरुषस्य । न वा ऽएष स्त्री न पुमान्यत् केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं‡ यल्लोहायसं नैते क्रिमयो नाक्रिमयो यद्दन्दशूका अथ यल्लोहायसम्भवति लोहिता इव हि दन्दशूकास्तस्मात् केशवस्य पुरुषस्य § ॥ २ ॥

---

* 'वधान्'—इति ग, घ।

† 'वधस्त्'—इति ग, घ। ‡ 'हिरण्य'—इति क।

§ 'पुरुषस्य'—इति क, ख।

अथैनं दिशः समारोहयति। प्राचीमारोह गायत्री त्वावतु रथन्तरꣳ साम त्रिवृत् स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ॥ ३ ॥

दक्षिणामारोह। त्रिष्टुप् त्वावतु बृहत् साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ॥ ४ ॥

प्रतीचीमारोह। जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् ॥ ५ ॥

उदीचीमारोह। अनुष्टुप् त्वावतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥ ६ ॥

ऊर्ध्वामारोह। पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशि-रावृतू वर्चो द्रविणमिति ॥ ७ ॥

तद्यदेनं दिशः समारोहयति। ऋतूनामेवैतद्रूपमृतूनेवैतत् * संवत्सरꣳ समारोहयति स ऋतून् संवत्सरꣳ समारुह्य सर्व्वमेवेदमुपर्युपरि भवत्यर्व्वागि-†-वास्मादिदꣳ सर्व्वं भवति ॥ ८ ॥

---

* '०मेवैन मेतद्रूप मृतूनेवैन मेतत्०'—इति घ।

† 'अवच्चर्वागि'—इति ग, घ।

शार्दूलचर्मणो जघनार्द्धे * । सीसं निहितं भवति तत् पदा प्रत्यस्यति प्रत्यस्तं नमुचेः शिर इति नमुचिर्ह वै नामासुर आस त मिन्द्रो निविव्याध तस्य पदा शिरो ऽभितष्ठौ स यद् भिष्ठित उदबाधत स उच्छ्वस्य † पदा शिरः प्रचिच्छेद ततो रक्ष समभवत्तद्धैनं मनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यस इति ॥ ९ ॥

तत् सीसेनापजघान । तस्मात् सीसं मृदु रक्षवद्धि सर्व्वेण हि व्वीर्येणापजघान तस्मा-द्धिरण्यरूपं सत्र किंचन नार्हति रक्षवद्धि सर्व्वेण हि व्वीर्येणापजघान तद्वै स तन्नाष्ट्रा रक्षाएक्ष्यपजघान तथो ऽएवैष एतन्नाष्ट्रा रक्षाएं-स्यतो ऽपहन्ति ‡ ॥ १० ॥

अथैनएं शार्दूलचर्म्मा रोहयति । सोमस्य त्विषिरसीति यत्र वै सोम इन्द्र मत्यपवत स यतत. शार्दूल समभवत्तेन सोमस्य त्विषि-

---

* 'नाधि'—इति ब, घ।

† 'उच्छ्वस्य'—इति ब।

‡ 'अपहन्ति'—इति ग।

स्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषि-र्भूयादिति शार्दूलत्विषि मेवास्मिन्नेतद्दधाति तस्मा-दाह तवेव मे त्विषिर्भूयादिति * ॥ ११ ॥

अथ रुक्मं मधस्तादुपास्यति । मृत्योः पाह्योज-मृतं मायुर्हिरण्यं तदमृत उत्रायुषि प्रति-तिष्ठति † ॥ १२ ॥

अथ रुक्मः शतवितृण्णो वा भवति । नव-वितृण्णो वा स यदि शतवितृण्णः शतायुर्वा ऽयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नव-वितृण्णः ॥ १३ ॥

त मुपरिष्टाच्छीर्ष्णो निदधाति । ओजोऽसि सहो ऽस्यमृत मसीत्यमृत मायुर्हिरण्यं तदस्मिन्नमृत मायुर्दधाति तद्यद्रुक्मा ऽउभयतो भवतो ऽमृत मायुर्हिरण्यं तदमृतेनैवैन मेतदायुषोभयतः परि-बृंहति तस्माद्रुक्मा ऽउभयतो भवतः ‡ ॥ १४ ॥

---

* '०दिति'—इति क। '०दिति'—इति ग, घ।

† 'तिष्ठति'—इति क।  ‡ 'भवतः'—इति ग, घ।

अथ बाहू ऽउद्गृह्णाति । हिरण्यरूपा ऽउषसो विरोक ऽउभाविन्द्रा ऽउदिथः सूर्यश्च । आरोहतं वरुण मित्र गर्त्तं ततश्चक्षाथा मदितिं दितिं चेति बाहू वै मित्रावरुणौ पुरुषो गर्त्तस्तस्मादाहारोहतं वरुण मित्र गर्त्तमिति ततश्चक्षाथा मदितिं दितिं चेति ततः पश्यतᳬ स्वं चारणं चेत्येवैतदाह* ॥ १५ ॥

मैत्रेणोद्गृह्णीयात् । मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयाद् बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयात् ॥ १६ ॥

तद्यदेन मूर्द्धबाहु मभिषिञ्चति । वीर्य्यं वा ऽएतद्राजन्यस्य यद्बाहू वीर्य्यं वा ऽएतदपाᳬ रसः सम्भृतो भवति येनैन मेतदभिषिञ्चति नेन्म ऽइदं वीर्य्यं वीर्य्य मपाᳬ रसः सम्भृतो बाहू च्छिनदादिति तस्मादेन मूर्द्धबाहु मभिषिञ्चति ॥ १७ ॥३॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. १.] ॥

---

* 'आहतुः'—इति म, च ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे , तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

× × × (१७)। कात्यायनः—"प्रवेष्टा इति लोहायसं साविष्यन्ति केशवास्ये सदोऽन्त उपविष्टाय"—इति †। सदसो मध्ये उपविष्टस्य केशवस्य क्लीबस्य वदने "प्रवेष्टा"—इतिमन्त्रेण * ताम्रं मर्पयेत्। तदिदं विधत्ते— "केशवस्येति 'लोहायसं' ताम्रम् 'आ विध्यति' अर्पयेत्। 'दन्दशूकाः' दंशनशीलाः, मृत्यव इहाभिप्रेताः। 'प्रवेष्टाः' अवपूर्वो यजिर्नाशार्थे वर्तते , विनाशयिता इति ॥

व्याचष्टे— "सर्वान् वा इति। 'यो राजसूयेन यजते', स 'सर्वान् मृत्यून्', 'सर्वान्' अवरुतान् 'वधान्' अपि 'अतिमुच्यते' अतिक्रामति। मुख्यो 'मृत्युः' नाम 'जरा', देहविदारकत्वात्। तस्माद् दन्दशूकपदेन मृत्यवो वधाय विवक्षिताः , तान् केशववदने ताम्रनिधानेन नाशितवान् भवतीति तात्पर्यार्थः ॥ १ ॥

केशवलोहायसदन्दशूकानां मन्त्रान्तरसिद्धं सम्यगुपपादयति—

---

* यद्यप्येकस्मिन्नादर्शपुस्तके नात्र कश्चित पाठोऽवलोक्यते, परं मध्यायादौ व्याख्यारम्भेऽत्र पुन अर्थमनुपपन्नमवलोक्य किञ्चित्पाठेन भवितव्यम् , परं तल्लिपिकरपरम्परयैवलुप्त मिति ।

† का० श्रौ० सू० १५ । ७ । २२ ।

‡ वा० सं० १० । १० । १ ।

"अथ यत् कैशवस्तेति *। एतद् वाक्यं परिसुन्मयणे व्याख्यातम्। दन्दशूकाना मप्यन्तरासवर्त्तित्वं दर्शयति— "नैते क्रिमय इति। दन्दशूकाना मपि लोहितत्वात् लोहितायवेन भाव्य मित्यर्थः ॥ २ ॥

सूत्रम्— "सुन्वन्स माक्रमयन् दिशः प्राची मारोहेति पञ्च प्रतिमन्त्रं प्रतिदिशं यथालिङ्ग माक्रम्य"–इति †। अध्वर्युः प्राच्यादिकाः पञ्च दिशो यजमान माक्रमयन् "प्राची मारोह" –इत्यादिकांस्तत्तद्दिक्प्रतिपादकान् मन्त्रान् वाचयेदित्यर्थः। तत्र दिगाक्रमणं विधत्ते— "पञ्चैतं दिश इति। 'समारोहयति' आक्रमेत्। प्राचीदिगाक्रमणमन्त्रं विधत्ते— प्राची मारोहेति ‡। हे यजमान। 'प्राचीम् आरोह'। तथा स्थितं 'त्वा' त्वा छन्दसां मध्ये गायत्री 'अवतु', साम्नां मध्ये 'रथन्तरं' साम रक्षतु, स्तोमानां मध्ये 'त्रिवृत्' त्र्यङ्गनवकात्मकः स्तोमः, ऋतूनां मध्ये वसन्ताख्य ऋतुः, 'ब्रह्म' त्वदीयं 'द्रविणं' धनं रक्षतु; ब्रह्मरूपं धनं वा भवत्विति। एव मुत्तरत्रापि।

"अभि त्वा शूर नोनुमः"–इत्यस्यां § समुत्पन्नं साम रथन्तर मित्युच्यते ‖। "उपास्मै गायता नरः"–इति सूक्तमध्ये

---

* इत उत्तरस्य (४ १ ३—४ ४ ५) ग्रन्थस्य भाष्यं क-ख-ग-पुस्तकेषु नास्ति, ङ-पुस्तकमात्रे त्वलोक्यते।

† का० श्रौ० सू० १५ ५ ९३।

‡ वा० सं० १० १० २।

§ सा० छ० आ० ३ १ ५ १ ऋचि।

‖ सा० ग्रा० गा० २ १ ११ साम।

आद्याभिस्तिसृभिर्मध्यमाभिरुत्तमाभिश्चोद्गानेन त्रिवृत्त्रि-वृत्स्तोमो भवति * ॥ ३ ॥

दक्षिणदिगाक्रमणं विधत्ते— "दक्षिणा आरोहेति †। पूर्ववद् योजनीयम्। "त्वा मिद्धि हवामहे"—इत्यस्या ऋचि ‡ उत्पन्नं साम 'बृहत्' §। पञ्चदशस्तोमकरण मेवम्— पूर्वोक्त-त्रिवृत्स्तोमः खलु तृचत्रयगेयत्वात्; पञ्चदशे तु स्तोमा एकै-केन तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्र चायं क्रमः— "प्रथमं पर्यायं पञ्चभिर्ऋग्भिर्गीयते। तद्यथा— प्रथमा ऋचं त्रिर्गायेत्, इतरे द्वे सकृत् सकृत्; तृतीये तु उत्तमां त्रिर्गायेत्, आद्ये द्वे सकृत् सकृदिति ‖। 'क्षत्रम्' क्षत्रियः ॥ ४ ॥

प्रतीच्या मन्त्रं विधत्ते—"प्रतीची मारोहेति ¶। "यद्वाव इन्द्र ते शतम्"—इत्यस्या ऋचि ** उत्पन्नं साम 'वैरू-पम्' ††। सप्तदशस्तोमसम्पादन मेवम्— प्रथमपर्याये प्रथमा ऋचं त्रिर्गायेत्, द्वितीयपर्याये मध्यमां त्रिः, तृतीयपर्याये मध्यमा मुत्तमाञ्च त्रिः, अन्याः सकृत्-सकृदिति ‡‡। वैश्यो जातिरित्यर्थः ॥ ५ ॥

---

* ता० ब्रा० १ २ १—३ ख०।
† वा० सं० १० ११. १।
‡ सा० छ० आ० ३ १ ५. २।
§ सा० गा० आ० १ १. २०।
‖ ता० ब्रा० १ २ ४—६।
¶ वा० सं० १० १२ १।
** सा० छ० आ० ३ २ ४ ६।
†† सा० आ० आ० १ १. ६।
‡‡ ता० ब्रा० १ २ ७—१३।

उदीच्या मन्त्रं विधत्ते— "उदीचो मारोहेति *। "पिबा सोम मिन्द्र मन्दतु त्वा"-इत्यस्या मृचि † उत्पन्नं साम 'वैराजम्' ‡। एकविंशतिस्तोमनिष्पत्तिप्रकारस्त्वेवम्— प्रथमे पर्याये उत्तमां सकृद् गायेत्, द्वितीये पर्याये मध्यमां सकृद् गायेत्, तृतीये पर्याये सर्वेतरास्त्रिभिरित्येवं सति एकविंशः स्तोमो भवति § ॥ ६ ॥

ऊर्ध्वाया मन्त्रं विधत्ते— "ऊर्ध्वा मारोहेति ||। "प्रोष्वस्मै पुरोरथम्"-इत्यस्या मृचि ¶ उत्पन्नं साम 'शाक्वरम्' **, "रेवतीर्नः सधमादे"-इत्यस्या मृचि †† उत्पन्नं साम 'रैवतम्' ‡‡। त्रिणवस्तोमनिष्पत्ति प्रकारस्त्वेवम्— प्रथमे पर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्, उत्तमां सकृत्; द्वितीये पर्याये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां पञ्चकृत्वः; तृतीये पर्याये प्रथमां पञ्चकृत्वः, मध्यमां सकृत्, उत्तमां

---

* वा० सं० १०. १३. १।

† सा० छ० आ० ४ १. १. ८।

‡ सा० ग्रा० गे० १०. ४ ३१।

§ ता० ब्रा० १. २ १४—१७।

|| वा० सं० १०. १४ १।

¶ सा० उ० आ० ८. १. १४ १।

** सा० आ० ऊ० ५. २ ९। साममाचार्येण भ्रमोत्सिद्धिर्वैषा गम्यते, मामामाषाम्। वस्तुतो महानाम्नीमामेव शाक्वर मिति प्रसिद्धो याज्ञिकेषु, अस्ति च तत्र सामम् आर्षेयकं शाक्वरम्। तत्र ३ २८ द्रष्टव्यम्।

†† सा० छ० आ० ४ २ १ ८।

‡‡ सा० ग्रा० गा० ४ १. १०।

त्रिर्गायेदिति। सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात् 'त्रिणव'-नामकः स्तोमो भवति * ॥  ॥ त्रयस्त्रिंशस्तोमनिष्पत्ति-प्रकार उच्यते— प्रथमपर्याये प्रथमां त्रिः सत्वः, मध्यमां सप्तकृत्वः, उत्तमां सकृत्; द्वितीये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां सप्तकृत्वः; तृतीयपर्याये प्रथमां सप्तकृत्वः, मध्यमां सकृत्, उत्तमां त्रिः। सोऽयं त्रयस्त्रिंशस्तोमो नाम † ॥

त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या धनरक्षकत्वेन धनरूपत्वेन वा कथिताः; चतुर्थे उदुम्बरादिफलस्य तद्रूपत्वम्, पञ्चमे 'वर्चः' प्रख्यातमूर्त्ताकृतस्य तेजसो रक्षकत्वं तद्रूपत्वं चोक्तम् ॥ ७ ॥

दिशां समारोहणं सत्रस्य संवत्सरात्मना प्रशंसति— "तद्यदेव मिति। पञ्चानां दिशां समारोहणम् ऋतुरूपत्वम्। ऋतूना मपि "हेमन्तशिशिरयोः समासेन" ‡ पञ्चसङ्ख्यात्मकत्वात् संवत्सरारोहणेन यजमान 'सर्वं मिदं' जगत् 'उपर्युपरि भवति' सर्वस्योपरि वर्त्तमानो भवति; कालस्य सर्वेषां सुपरिभावात्। 'अस्मात्' सुम्नतः सकाशात् 'इदं सर्वम्' 'अर्वाक्' अर्वाचीनम् अधस्तात् 'भवति' इति ॥ ८ ॥

पूर्वं मैत्रावरुणधिष्ण्यस्य पुरस्तादभिहिताया अभिषेचनीय-पात्राया अधो आस्तृतस्य शार्दूलचर्मणोऽपरेऽन्ते निहितस्य सीसस्य प्राशन मिदानीं विधत्ते— "शार्दूलेति। 'शार्दूलचर्मण.' 'जघ-

---

* ता॰ ब्रा॰ १ ३ १ ३।
† ता॰ ब्रा॰ १ ३ ३—७।
‡ ऐ॰ ब्रा॰ १. १ १।

नाहं' अपरभागे 'सीसं निहितं भवति'। निहित मिति 'निष्ठा प्रयोगेण पूर्वं चर्मास्तरणसमये एव सीसनिधानं सम्पन्न' मिति मन्तव्यम्। तथैव कात्यायनः— "मरुत्वतीयान्ते पादावि पूर्वेण व्याघ्रचर्मास्तृणाति सीसस्य निधिरिति, अपरेऽन्ते सीसं निदधाति"—इति *। अत्र तु "पादेन सीसं निरस्यति"— इत्येतावदेवासूत्रयत् †। 'तत्' सीसं 'पदा' पादेन "प्रत्यस्तम्"— इतिमन्त्रेण ‡ निरस्येत्। 'नमुचेः' असुरस्य 'शिरः' 'प्रत्यस्त' मिति मन्त्रार्थः॥ §

नमुचिशिरसः सीसेन निरास आख्यायिकयोपपादयति— "नमुचेर्ह वा इति। पूर्वं मिन्द्रो नमुचिनाम्नोऽसुरस्य 'शिरः' स्वेन 'आर्द्रेण' 'अभितष्ठौ' आचक्राम। 'सः' आक्रान्तः 'उदबाधत'। 'सलावृकः' वृकः सदृशः। सलावृको नाम प्राणिविशेषः, सलावृकीमश्रोर्ष्वीति छान्दस्याम्नातम् §। 'तस्य' शिरः 'पदा' आर्द्रेण पादेन 'प्रचिच्छेद' छिन्नवान्, 'ततः' छिन्नशिराः 'रक्षः' राक्षसः 'समभवत्', 'तत्' रक्षः 'एनं' घातक मिन्द्रम् 'अनुभाषते' वदति, हे इन्द्र। 'क्व गमिष्यसि?', 'मे' मत्तः सकाशात् क्व 'मोक्ष्यसे' मुक्तो भविष्यसि? 'इति' वदति॥ ९॥

"तत्सीसेनेति। 'तत्' रक्षः, एतद्रूपं राक्षसं 'सीसेन अपाघ्नन्'। 'तस्मात्' 'सीसं' 'मृदु' जातम्। 'हि' यस्मात् 'हतजवं' हतवेगम्। तदु पपादयति— "अयसेव हीति।

---

* का० श्रौ० सू० १५. ५ १, २।
† का० श्रौ० सू० १५. ५. २४।
‡ वा० सं० १०. १४ १।
§ वृक इति शब्दस्य अहृती रूपम् (आ० धा० ८६ पां०)।

तस्माद् गतसार मेतत् सीसं 'हिरण्यरूपं' रजतरूपं 'सत्' अपि 'किञ्चन' किमपि मूल्यं 'नार्हति' न लभते। रजतस्यापि हिरण्यमध्यव्यवहारोऽस्ति ; "यदश्रवशीयत तद्रजतं हिरण्य मभवत्"–इति * तैत्तिरीयश्रुतेः। अतः पूर्वं रक्षः सीसेन हतत्वादिदानीं अपि सीसप्रासनेन रक्षांसि हतानि भवन्तीत्यर्थः ॥ १० ॥

विधत्ते— "पदेन मिति †। 'पारोहयति' आक्रामयति। "सोमस्य त्विषिरित्यादि पूर्वं व्याख्यातम् ‡ ॥ ११ ॥

विधत्ते— "अथ रुक्म मिति। 'रुक्मं' हिरण्यम् § 'अधस्तात्' अध प्रदेशे 'उपास्यति' निदध्यात्। अत्र सूत्रम्— "रुक्म मध,पदे कुरुते मृत्योरिति"–इति ||। हे रुक्म! 'मृत्योः' सकाशात् 'पाहि' पालय ; एत मित्यर्थविशिष्टम् ¶। रुक्मस्य मृत्युपरिहारकत्व मुपपादयति— "अमृत मिति। हिरण्य ममृत मायुः ; हिरण्यदानेन अपमृत्योः परिहर्तुं शक्यत्वात् आयुर्दैर्घ्यम्। तस्मात् असौ यजमानः पादस्याधःप्रदेशे रुक्मनिधानेन आयुषि एव प्रतिष्ठितवान् भवतीत्यर्थः ॥ १२ ॥

शिरसि निधीयमानस्य रुक्मस्य कञ्चिद् गुणं विधत्ते— "अथ रुक्म मिति **। 'शतवितृण्णः' शतच्छिद्रः, 'नववितृण्णः'

---

* तै० सं० १ ५ १ २।

† का० श्रौ० सू० १५ ५ २५।

‡ २२८ पृ० १७ पं० द्रष्टव्यम्।

§ 'रुक्म आभरणविशेषः'—इतीह कर्काचार्यः। तत्र परिमण्डलं भामेखुपदेश इतीह वृत्तिः।

|| का० श्रौ० सू० १५ ५ २६।

¶ वा० सं० १० २५ २।

** का० श्रौ० सू० १५ ५ २७।

अथच्छिद्रः 'वा' भवेत्। तदुभयं कर्मणायुःप्राणात्मना प्रशं-सति— "स यदि यतेति। आयुरनुसारेण 'तेजोवीर्ययोरपि' गतमन्त्रात्मकत्वं द्रष्टव्यम् ॥ १३ ॥

तस्य शिरसि निधानं विधत्ते— "स मुपरिष्टादिति। 'शीर्षणः' इति षष्ठी। 'ओजः'-इति मनोबलम्। 'सहः'-इति बाह्येन्द्रियबलम्। 'अमृतम्'-इति प्राणबलम्; "प्राणो वा अमृतम्"-इतिश्रुतेः। हे रुक्म! तत् त्रितयरूपोऽसीति मन्त्रार्थः *।

अधस्तादुपरिष्टाच्च रुक्मनिधानं आयुःप्रतिबन्धकत्वेन प्रशं-सति— "तस्माद्रुक्मा उभयत इति। रुक्मशब्दात् प्रथमा द्विवचनस्याकारादेशे कृते "लोपः शाकल्यस्य"-इति † यकारलोपः। उभयतो रुक्मविधानेन 'एनं' यजमानम् अमृतरूपेण 'आयुषा' 'उभयतः' 'परिवृंहति' संवर्धितवान् भवति ॥ १४ ॥

विधत्ते— "अथ बाहू इति। 'उद्गृह्णाति' यजमानः बाहू प्रसारितौ कुर्यात्। अत्र "मित्रोऽसि वरुणोऽसि"-इत्ययमेव मन्त्रो बाहूद्ग्रहणे विधास्यते। तत्र पूर्वपक्षत्वेन मन्त्रं पठति— "हिरण्यरूपाविति। अतएव कात्यायनो विकल्पेन सूत्रयामास— "बाहू उद्गृह्णाति हिरण्यरूपा इति, मित्रोऽसि वरुणो-ऽसीति वा"-इति ‡। हिरण्येतिमन्त्रस्य § अयमाध्यात्मिको-ऽर्थः। हे वरुण! हे मित्र! बाहुद्वयस्य पृथक्सम्बुद्धिः।

* वा० सं० १०. १५. २ ।
† पा० सू० ८. ३. १९ ।
‡ का० श्रौ० सू० १५. ५. २८, २९ ।
§ वा० सं० १०. १६. १, २ ।

'हिरण्यरूपौ' हितरमणीयरूपौ, हिरण्यरूपौ वा सालङ्कारत्वात्। 'इन्द्रौ' परमैश्वर्यसम्पन्नौ उभौ युवाम् 'उषसः' 'विरोके' विरोचने 'उदिथ', 'सूर्यः' 'उद्गत'। एतेलंटि मध्यमद्विवचने रूपम्। हे मित्रावरुणौ। बाहुरूपौ 'गर्त्तं' पुरुषम् 'आरोहतम्' पुरुषस्योपरि भव स मित्रयो'। 'ततः' अनन्तरम् 'अदितिम्' अखण्डनीयाम्, पृथिवीरूपां स्वीयां प्रजां 'चक्षीथाम्' पश्येताम्। 'दितिं' खण्डनीयाम्, परां सेनाञ्च। तस्य तद् बाहुद्वय मेव स्वबलं रक्षति, परबलं हन्ति, अत एव सुष्टत इत्यध्यात्मविषयोऽर्थः।

आधिदैविके त्वयं विशेषः— 'गर्त्तः' रथः; हे 'मित्रावरुणौ' देवतौ। रथम् 'आरोहतम्'। 'ततः' रथारोहणानन्तरम् 'अदिति' अदीनं समर्थं विहितस्य कर्मणः कर्त्तारं पुरुषं प्रपश्यताम्, 'दितिं' दीनं विवेकरहित मनुष्ठातारं च पश्यत मिति। त मिमं मन्त्र बाहुद्वयपरत्वेन व्याचष्टे— "बाहू वै मित्रेति। अभिमयाद्यस्यार्थं माह— "ततः पश्यत मिति। 'स्वं' स्वीयम् 'अरणम्' अरमणीयम्, परं च पश्यति। 'अदिति'-शब्दस्य स्वोऽर्थः, 'दिति'-शब्दस्य परोऽर्थः इति विभागः॥ १५॥

एतेन मन्त्रेणोद्ग्रहणं दूषयति— "नैतेनेति। तमत माह— "मित्रोऽधीति। एवकारोऽन्यमन्त्रनिवृत्त्यर्थः। मन्त्रस्तु पूर्वं व्याख्यात *। त मिमं मन्त्रं प्रशंसति— "बाहू वै मित्रेति॥ १६॥

एव मूर्द्धबाहुलेनैव स्थितस्य यजमानस्याभिषेको विधास्यते, त मिमं पुन प्रशंसति— "तद्वदेन मिति। एवकारो

* इतः पूर्वं मैव द्रष्टव्यम् (२६८ पृ०)।

भिचक्रम, ऊर्ध्वबाहु मेवेति योजना। राजन्यस्य बाहू एव वीर्यं। अभिषेचनीयपात्रेषु व्यासिक्ताना मपां रसोऽपि वीर्यम्; वीर्योत्पादकत्वात्। अत. तेन रसेनाभिषेके ऊर्ध्वबाहुत्व मेव युक्त मित्यर्थः। तस्य कारण माह— "नेत्" इति। 'मे' मम 'इदं वीर्यं' वीर्यरूपौ 'बाहू', कर्मवीर्यरूपः 'अपां रस.' 'नेत् छिनदात्' न वर्जयेत् 'इति' अतो हेतो 'ऊर्ध्वबाहुम्' एव अभिषिञ्चेदित्यर्थः ॥ १० ॥ २ [४. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

(अथ द्वितीयं ब्राह्मणम्.)

तं वै प्राञ्चं तिष्ठन्त मभिषिञ्चति। पुरस्ताद् ब्राह्मणो ऽभिषिञ्चत्यध्वर्युर्वा यो वास्य पुरोहितो भवति पश्चादितरे ॥ १ ॥

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति। वीर्यमेवैतदाहाग्नेर्भ्राजसेति वीर्यमेवैतदाह सूर्यस्य वर्चसेति वीर्यमेवैतदाहेन्द्रस्येन्द्रियेणेति वीर्य-

यैवैतदाह क्षत्राणां क्षत्रपतिरेधीति राज्ञा मधिराज एधीत्येवैतदाहातिदिद्यून् पाहीतीषवो वै दिद्यव इषुवध* मेवैम सेतदतिनयति तस्मादाहाति-दिद्यून् पाहीति ॥ २ ॥

इमं देवाः। असपत्नꣳ सुवद्ध्व मितीमं देवा अभ्रातृव्यꣳ सुवद्ध्व मित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहित मिवास्ति महते जानराज्यायेति महते जनानाꣳ राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीम ममुष्य पुत्र ममुष्यै पुत्र मिति तद्यदेवास्य जन्म तत एवैतदाहास्यै विश ऽइति यस्यै विशो राजा भवत्येष वो ऽमी राजा सोमो ऽस्माकं ब्राह्मणानाꣳ राजेति तदस्मा ऽइदꣳ सर्व्वमाद्यं करोति ब्राह्मण मेवापोद्धरति तस्माद् ब्राह्मणो नाद्यः सोमराजा हि भवति † ॥ ३ ॥

अथैत मभिषेकम्। कृष्णविषाणयानुविसृष्टे व्वीर्यं वा ऽएतदपाꣳ रसः सम्भृतो भवति येनैन

* 'इषुवध'—इति ग, घ।
† 'भवति'—इति क।

नेतदभिषिञ्चतीदं मे व्वीर्यएँ सर्व्वं मात्मान मुप-स्पृशादिति तस्मान्न ऽअनुविसृष्टे * ॥ ४ ॥

सोऽनुविसृष्टे । प्र पर्व्वतस्य व्वृषभस्य पृष्ठा-दिति यथायं पर्व्वतोऽतिष्ठावा यथऽर्षभः पशून-तिष्ठावैवं व्वा ऽएष इदएँ सर्व्वं मतितिष्ठत्य-र्व्वांगेवास्मादिदएँ सर्व्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्व्वतस्य व्वृषभस्य पृष्ठान्ना-वश्चरन्ति स्वसिच इयाना: † । ता आववृत्रन्नधरा-गुदक्ता अहिं बुध्न्य मनु रीयमाणा इति ‡ ॥ ५ ॥

अथैनं मन्त्रैरेव शार्दूलचर्मणि व्विष्णुक्रमान् क्रमयति । व्विष्णोर्व्विक्रमण मसि व्विष्णोर्व्विक्रान्त मसि व्विष्णोः क्रान्त मसीतीमे वै लोका व्विष्णो-र्व्विक्रमणं व्विष्णोर्व्विक्रान्तं व्विष्णोः क्रान्तं तदि-मानेव लोकान्समारुह्य सर्व्वं मेवेद मुपर्युपरि भवत्यर्व्वांगेवास्मादिदएँ सर्व्वं भवति ॥ ६ ॥

---

* 'व्विसृष्टे'—इति ग, च ।

† 'इयाणा'—इति ग, च ।

‡ 'इति'—इति च । 'इति'—इति ग, च

अथ ब्राह्मणस्य पात्रे। सम्पातानवनयति तद् ब्राह्मणं राजानमनु यशः करोति तस्माद् ब्राह्मणो राजानमनु यशः ॥ ७ ॥

तद्योऽस्य पुत्रः प्रियतमो भवति। तस्मा एतत् पात्रं प्रयच्छतीदम्मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति * ॥ ८ ॥

अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति। प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत् कामास्ते जुहुमस्तन्नोऽस्त्वयममुष्य पितेति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्वीर्ये व्यतिषजत्यसावस्य पितेति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्वीर्ये व्यतिषज्य पुनरेव यथायथं करोति वयं स्याम पतयो रयीणामित्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते † ॥ ९ ॥

---

* ०दिति—इति क। ०द्विति—इति ग, घ।

† ०शास्ते—इति ग, घ।

अथ य एष सꣳस्रवो ऽतिरिक्तो भवति। स आग्नीध्रीये जुहोत्यतिरिक्तो वा ऽएष सꣳस्रवो भवत्यतिरिक्त आग्नीध्रीयो गार्हपत्ये हवीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषो ऽतिरिक्तस्तदतिरिक्त ऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येष ह्येतस्य देवस्य दिक् तस्मादुत्तरार्द्धे जुहोति स जुहोति रुद्र यत्ते क्रिवि परं नाम तस्मिन् हुतमस्यमेष्टमसि स्वाहेति ॥ १० ॥ ४ ॥

॥ इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् [४. २.] ॥

अथ द्वितीयब्राह्मणेऽभिषेक उच्यते। अत्र कात्यायनः— "स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात् पालाशेन प्रथमम्, पश्चादितरे द्वितीयेन, स्वस्तृतीयेन, मित्र्यो राजन्यो वैश्यश्चतुर्थेन, सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम्, अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात्, क्षत्राणां क्षत्रपतिरेधीति शेषं समुप्य"-इति *। अर्द्धबाहुलेन स्थितं प्राङ्मुखं यजमानं पुरोहिताध्वर्य्योरन्यतरो ब्राह्मणः प्रथमतः पुरो देशे स्थित्वा पालाशेन पात्रेणाभिषिञ्चेत्। इतरे स्वादयस्त्रयोऽभिषिच्यमानस्य

* का० श्रौ० सू० [illegible] प० १०—११।

पश्चाद् भागे स्थित्वा स्वस्वपात्रेणाभिषिञ्चेयुः । तत्र "सोमस्य" -इत्यादयश्चत्वारो मन्त्राश्चतुर्णाम् । तत्राभिषिञ्चामीति प्रथम-मन्त्रगतस्य पदस्योत्तरेषु त्रिष्वनुषङ्गः ; साकाङ्क्षत्वान्मन्त्राणाम् । "क्षत्राणां क्षत्रपतिरेधि"-इति च सर्वत्रानुषज्यते, "इमं देवा असपत्नम्"-इत्येष मन्त्रश्च । तत्र 'इमम्'-'अमुष्य'-इतिस्थाने यष्टुस्तत्पितुश्च नाम गृह्णीयादिति सूत्रार्थः ॥

तमिमं क्रमेण विधत्ते— "तं वै प्राञ्च मिति । तच्छब्दः प्रकृतवाची, उक्तैवाह मित्यर्थः । 'प्राञ्चं' प्राङ्मुखं 'तिष्ठन्तम्' अभिषिञ्चेत् ; 'पुरस्ताद्' अभिषिच्यमानस्य पुरो देशे 'ब्राह्मणः' अभिषिञ्चेत्, 'इतरे' त्रयः 'पश्चात्' पृष्ठतः पश्चिमभागे स्थित्वा अभिषिञ्चेयुः ॥ १ ॥

तत्र मन्त्रान् यथार्थमाह विधत्ते— "सोमस्येति । हे यज-मान ! 'त्वा' त्वां 'सोमस्य' 'द्युम्नेन' द्योतनशीलया दीप्त्या अभिषिञ्चामीत्येको मन्त्रः * । "अग्नेर्भ्राजसा"-इत्यपरः †, अभिषिञ्चामीत्यनुषज्यते ; वाक्यस्य साकाङ्क्षत्वात् । "सूर्यस्य वर्चसा"-इति तृतीयः ‡ । 'वर्चसा' दीप्त्या । "इन्द्रस्य इन्द्रियेण वीर्येण"-इति चतुर्थः § । सर्वेष्वेयं मन्त्रभागद्वय मर्थ-पुरस्सर माह— "क्षत्राणा मिति । 'क्षत्राणां' क्षत्रियाणां राज्ञां वा 'क्षत्रपति' क्षत्रियस्य पतिः 'एधि' भव ।।

* वा० सं० १०. १७ १ ।
† वा० सं० १० १७ २ ।
‡ वा० सं० १० १७ ३ ।
§ वा० सं० १० १७ ४ ।
‖ वा० सं० १०. १७ ५ ।

पापसितशिभ्यां स्वामित्वं मनुत्वं च विवक्ष्यते। 'दिप्सून्' बाधकानिप्सून् 'पति'-क्रम्य 'पाहि' रक्ष, इषुभिर्न बाधो भवेदित्यर्थः ॥ २ ॥

सर्वं यानुवक्ष्यमाणं मन्त्राणां सार्थवादं विधत्ते— "इमं देवा इति। अस्य मन्त्रः* पूर्वं मैत्रावरुणवाक्येन च सह विस्पष्टं, व्याख्यातः† ॥ ३ ॥

विधत्ते— "अथैनमभिषिञ्चति। एवं क्रियमाणम् 'अभिषेकं' सर्वेश्वपतिम अभिषेकजाल मित्यर्थः। 'कृष्णविषाणया' कण्डूयन्त्या 'पशुविस्रंसे' प्रतिमुञ्चति यजमानः। स तिमं वीर्यसम्पादनरूपेण प्रशंसति— "वीर्यं वा इति। इदं मभिषेकजनरूपं 'वीर्यं' 'मे' मम 'सर्वम् आत्मानम्' 'उपस्पृशात्' उपस्पृशतु 'इति' बुद्धा विमार्जनं कुर्यादित्यर्थः ॥ ४ ॥

तत्र मन्त्रं विधत्ते— "सोऽनुविसृष्टं प्रपर्वतस्येति‡। या आपो 'वृषभस्य' वर्षणसमर्थस्य 'पर्वतस्य'। पर्वत इति मेघनाम§। मेघस्य 'पृष्ठात्' 'नावः' नाव्या इत्यर्थः, प्रचरन्ति। कीदृश्यः? 'स्वसिचः' स्व आत्मीयं यजमानशरीरं सिञ्चन्तीति स्वसिचः। 'इयानाः' गच्छन्त्यः, बाहुल्येन सर्वत्र प्रवहन्त्य; 'ता' आपः 'उदक्ताः' परिषिक्ताः। तत्पूर्वस्याप्यते निवार्यां वयम्। इदानीम् 'अधराम्' अधोभागे 'पदिम्' पार भोति, पविकसमाह्वम्। 'बुध्नाम्' बुध्नस्य पादस्थापभागो

* वा० सं० १० १८ १।
† २०६ पृ० १ पं० द्रष्टव्यम्।
‡ का० श्रौ० सू० १५ ६ ८।
§ निघ० १ १० ८।

दुधराः, तम्। शिरःप्रभृति पादपर्यन्तम् 'अनु' अनुक्रमेण 'रीय-माणाः' लेपरूपेण स्रवन्त्यः, 'आवहन्' यजमानशरीरं सम्य-गाहृत्य स्थिताः, तिष्ठन्तीति *। इत्याध्यात्मिकोऽर्थः।

आधिदैविकन्तु— 'पर्वतः' आदित्यः, 'वृषभस्य पृष्ठात्' 'इयानाः' निर्गच्छन्त्यः, 'नाव' नाव्या आपः 'चरन्ति'। तथा च श्रुतिः— "नाव्या ह एव यज्ञस्य इष्टका इत्युपक्रम्य, "अह्निश्च वै ब्रीहिश्च समस्यादित्यं नाव्या अभिचरन्ति"-इति †। 'ताः' प्रावृट्काले 'आवहन्' आवर्तन्ते; 'अधराग्' आदित्यमण्ड-लाद् भूमिं प्रति अधोगमनशीलाः, 'उदक्' 'ताः' पूर्वं भूमेः सकाशात् आदित्यमण्डलं प्रति 'उदक्' ऊर्ध्वगमनशीलाः 'अहिं' मेघम् 'बुध्न' अन्तरिक्षम्, तत्र मध्यम् 'बुध्नम्' मध्यमस्थानम्, 'अनुरीयमाणाः' अनुप्रविश्य तस्मान्निर्गच्छन्त्यः, भूमिं प्राप्नु-वन्तीति शेषः ‡ ॥

अस्यैव प्रथमपादस्य तात्पर्यमाह— "यथायं पर्वत इति। 'यथा पर्वतः' 'अतिष्ठावा' सर्वं अतिक्रम्य स्थाता। तिष्ठतेः "आतो मनिन्"-इति § वनिप्। 'यथा ऋषभः' पशूनतिक्रम्य तिष्ठति, एवं मेघ राजा तिष्ठति, सर्वस्योपरि भवति। 'अस्माद्' यज-मानात् 'इदं सर्वम्, अर्वाक्' भवति; 'तस्मात्' अपवर्तस्येति पाठ प्रगमस्य इत्यर्थः ॥ ५ ॥

विधत्ते— "अथैनं मिति ||। गार्हपत्यमध्ये एव यजमानं

---

* का० सं० १० १८. १।

† इष्टकोपरिष्टात् का० १० अ० ५ ब्रा० ४ क० १४।

‡ का० श्रौ० सू० २१ १। § पा० सू० ३ २ ७४।

|| का० श्रौ० सू० १५ १ ८।

त्रीन् विष्णुक्रमान् क्रामयेदध्वर्युः। तत्र मन्त्रत्रयं विधत्ते— "विष्णोरिति *। एकैकस्य क्रमणस्यैकैको मन्त्र इत्यर्थः। 'विष्णोः' यज्ञस्य यत्र 'विक्रमणं', यत्र 'विक्रान्तं', यत्र 'क्रान्तम्', तत् सर्वं त्वमसीति योजनीया। क्रमणत्रयं लोकत्रयात्मना प्रशंसति। "इमे वै लोका इति ॥ ६ ॥

अथ स्वमितवेद्यपात्रमयशोयाणां पात्रापयाने व्यासेचनं विधत्ते— "अथ ब्राह्मणस्येति। "तद् ब्राह्मणमिति। 'तत्' तेन व्यत्ययेन 'राजानम्' 'अनु' पश्चाद् 'ब्राह्मणं' 'यशः' यशस्विनं कृतवान् भवति। लोके हि राजा कीर्त्तिमान्, ब्राह्मणोऽपि तदनन्तरं कीर्त्तिमानित्युच्यते ॥ ७ ॥

विधत्ते— "तद् योऽस्येति †। 'एतत्' संस्रवैः प्राशितं ब्राह्मणस्य प्राशनार्थं राज्ञः प्रियतमाय पुत्राय प्रयच्छेत्। प्रदाने ब्राह्मणोऽयं मन्त्रमाह— "इदं म इति। अत एव कात्यायनो मन्त्रं पपाठ— "पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोतु"—इति ‡। 'अयं' मे पुत्रः, 'मे' मम 'वीर्यं' वीर्यरूपं कर्म 'अनुसन्तनवत्' अनुसन्तनोतु, विस्तारयत्विति ॥ ८ ॥

विधत्ते— "अथ पत्नीति। गार्हपत्यं 'प्रतिपरेत्य' प्रत्यङ्मुखो गत्वा 'अन्वारब्धे'। प्रकृतत्वात् पुत्र इति गम्यते। अत्र सूत्रम् §— "गार्हपत्ये जुहोति पुत्रोऽन्वारब्धे प्रजापत इति"—

---

* वा० सं० १० १८. २. १, ३।
† का० श्रौ० सू० १५ ६ १० क।
‡ का० श्रौ० सू० १५ ६ १० ख।
§ का० श्रौ० सू० १५ ६. ११।

इति। मन्त्रस्यार्थः—हे ‘प्रजापते’! ‘त्वदन्यः’ कोऽपि पुरुषः उत्पन्नानि तानि ‘एतानि’ विश्वानि ‘न परिबभूव’ परिभवितुं व्याप्तुं समर्थो ऽभूत्। परिपूर्वो भवतिर्व्याप्त्यर्थे वर्त्तते। अतस्त्वेन वयं ‘यत्कामा जुहुमः’, ‘तत्’ फलं अस्माकम् ‘अस्तु’। वयं धनानां ‘पतयः स्यामेति’ *। अत्र तृतीयपादान्ते ‘असम् अमुष्य पिता’, ‘असौ अस्य पिता’ ‘इति’ मन्त्रभाग आम्नातः। ‘अयं’ पुत्रः अभिमन्युः, ‘अमुष्य’ अर्जुनस्य ‘पिता’ ‘इति’ पूर्वं पितृशब्दं पुत्रे कृत्वा ब्रूयात्, अथात् ‘असौ पिता’ अर्जुनः ‘अस्य’ पुत्रस्याभिमन्योः ‘पिता’–इति ‘यथायथं’ ब्रूयादित्यर्थः। अत एव आश्वलायनः—“प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात्”–इति। तं मिमं पादत्रयपुरस्सरं पठति—“प्रजापत इति †। अथाय अमुष्य पितेत्यस्यार्थं माह— “तस्य: पुत्र इति। पुत्रं पितरं पुत्रं कृत्वा पठेदित्यर्थः। तदेतेन पुत्रस्य पितृकरणेन च एतयोः पितापुत्रयोः वीर्यं ‘व्यतिषजति’ परस्परं संसृष्टे कृतवान् भवति। असावस्य पितेत्यस्यार्थं माह—“तस्य: पितेति। अत्र पितुरेव पितृत्वम्, पुत्रस्यैव पुत्रत्वम्। अनेनैतयोर्वीर्यं पूर्वं व्यतिषज्य पश्चाद् यथा पुत्रस्य वीर्यं पुत्र एव, पितुर्वीर्यं पितर्येव कृतवान् भवतीत्यर्थः। अन्तिमपादस्याशीःपरत्वं दर्शयति— “आशीरेवैषेति ॥ ८ ॥

---

* ऋा० मं० १०, २० १।

† संहितापाठस्त्वेवम्—“प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वय अमुष्य पिता ऽसावस्य पिता वयं स्याम पतयो रयीणां स्वाहा”–इति।

पात्रान्तरगतावशेषस्य आग्नीध्रीये तस्या हवनं विधत्ते— "अथ य एष संस्रव इति *। अतिरिक्तस्य शेषस्य आग्नीध्रीये हवनस्योपपत्तिं दर्शयति— "अतिरिक्तं इति। तदेवोपपादयति— "गार्हपत्ये हवींषि श्रपयन्तीति। गार्हपत्ये सर्वेषां हविषां श्रपणम्, आहवनीये तेषां होमः, अत श्रपणहवनयोरनुपयुक्तत्वादाग्नीध्रीयोऽतिरिक्त इत्यर्थः। प्रदेशविशेषं विधत्ते— "उत्तरार्ध इति। अस्य रुद्रसम्बन्धं दर्शयति— 'एष हीति। 'एतस्य देवस्य' रुद्रस्येत्यर्थः। होममन्त्रं विधत्ते— "स जुहोतीति †। हे 'रुद्र!' रुत् सांसारिकं दुःखं द्रावयतीति, तस्य सम्बुद्धिः। 'ते' तव 'परम्' उत्कृष्टं 'सत् नाम' "नमः शिवाय"—'पशुपतये"—इत्यादि श्रुतिप्रसिद्धम् ‡, 'गिरि' "गिरि विशाकर घयो" §, विरोधिनो हिंसकः असि, 'तस्मिन्' नाम्नि 'हुतमसि' अभिषेकशेषभूतमुख्यपात्रस्थजलं त्वं हुतं भवेति अस्य सम्बुध्यार्थीवेय। 'अमेष्ट असीति। 'अमा' शब्दोऽत्र गृहवचनः। मदीये गृहे त्वम् इष्टं भव। 'स्वाहा' सुहुतमस्त्विति॥ १० ॥ ४ [४ २] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम्।

---

* का० श्रौ० सू० १५ ५ १२।
† वा० सं० १० २० २।
‡ मा० सं० १६ ४१ ४० तै० सं० ४ ५ ८ ११ १
§ आ० ए० ५५८ या० (छवि)।
‖ तै० सं० १ ८ १४ १—१२ तै० ब्रा० १ ७ ८ द्रष्टव्यम्।

( अथ तृतीयं ब्राह्मणम् . )

तद् योऽस्य स्वो भवति । तस्य शतं वा परःशता वा गा उत्तरेणाहवनीयए स्थापयति तद्यदेवं करोति ॥ १ ॥

त्वष्टाह वा ऽअभिषिषिचानात् । इन्द्रियं वीर्यं मपचक्राम शश्वद्ध एषोऽपाए रसः सम्भृतो भवति॰ येनैन मेतदभिषिञ्चति सो ऽस्येन्द्रियं वीर्यं निर्णुदान तत् पशुष्वन्वविन्दत्तस्मात् पशवो यशो यदेष्वन्वविन्दत्तत् पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथो ऽएवैष एतस्माद्धैवास्माद्रिवन्द्रियं वीर्यं मपक्रामति त्वष्टासवो वा ऽएष यद्राजसूय मिति त्वष्टा ऽकरोदिति त्वेवैष एतत् करोति † ॥ २ ॥

अथ रथ मुपावहरति । यद्वै राजन्यात् पराग् भवति रथेन वै तदनुयुङ्क्ते तस्माद्रथ मुपावहरति ॥ ३ ॥

पात्नीवतपात्रशेषस्य चाग्नीध्रीये क्वचा हवनं विधत्ते— "अथ य एष संस्रव इति *। अतिरिक्तस्य शेषस्य चाग्नीध्रीये हवनस्योपपत्तिं दर्शयति— "अतिरिक्त इति। तदेवोपपादयति— "गार्हपत्ये ह्यौरन्योऽति। गार्हपत्ये सर्वेषां हविषां श्रपणम्, चाहवनीये तेषां होमः; अतः श्रपणहवनयोरनुपयुक्तत्वादाग्नीध्रीयोऽतिरिक्त इत्यर्थः। प्रदेशविशेषं विधत्ते— "उत्तरार्ध इति। अस्य रुद्रसम्बन्धं दर्शयति— "एष होति। 'एतस्य देवस्य' रुद्रस्येत्यर्थः। होम मन्त्रं विधत्ते— "स जुहोतीति †। हे 'रुद्र!' रुत् सांसारिकं दुःखं द्रावयतीति, तस्य सम्बुद्धिः। 'ते' तव 'परम्' उत्कृष्टं 'यत् नाम' "नमः शिवाय"-"पशुपतये"-इत्यादि श्रुतिप्रसिद्धम् ‡, 'क्रिवि' "क्रिवि हिंसाकरणयोः" §, विरोधिनो हिंसक असि, 'तस्मिन्' नाम्नि 'हुत असि' अभिषेकविधभूतमन्त्रपाठसमनन्तरः त्वं हुतं भवेति देवं सम्बुध्याचीनेषः। "अमेह सतीति। 'अमा'-शब्दोऽत्र गृहवचनः। मदीये गृहे त्वम् इष्ट भव। 'स्वाहा' सुहुतमस्त्विति। ॥ १० ॥ ४ [ ४. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

---

* आ० श्रौ० सू० १५. ५. १२।
† वा० सं० १० २०. २।
‡ वा० सं० १६ ४१, ४०, तै० सं० ४ ५ ८ ११, १।
§ धा० पा० ५८८ वा० (क्रिवि)।
‖ तै० सं० १. ८ १४ १—१२, तै० ब्रा० १. ७ ८. इत्यत्र।

ऽएष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमान-स्तस्मादाहैन्द्रोऽर्जुन इति * ॥ ७ ॥

अथ दक्षिणायुग्य मुपार्पयति। मरुतां प्रसवेन जयेति विशो वै मरुतो विशा वै तत् क्षत्रियो जयति यज्जिगीषति तस्मादाह मरुतां प्रसवेन जयेति † ॥ ८ ॥

अथ मध्ये गवा मुद्यच्छति। आपाम मनसेति मनसा वा ऽइदं सर्व्वं माप्तं तन्मनसैवैतत् सर्व्वं माप्नोति तस्मादाहापाम मनसेति ‡ ॥ ९ ॥

अथ धनुरार्त्न्या गा मुपस्पृशति। स मिन्द्रियेणेतीन्द्रियं वै वीर्यं गाव इन्द्रिय मेवैतद्वीर्य-मात्मन् धत्ते ऽथाह जिनामीमाः कुर्व्व ऽइमा इति § ॥ १० ॥

तद्यत् स्वस्य गोषूदच्छति। यद्वै पुरुषात् पराग् भवति यशो वा किञ्चिद्वा स्वं हैवास्य तत्

* इति—इति क। इति—इति ग, घ।

† जयेति—इति क। जयेति—इति ग घ।

‡ मनसेति—इति क। मनसेति इति ग घ।

§ इति इति क। इति—इति ग घ।

प्रतमा सिधाम्यपक्रामति तत् , स्वादेवैतदिन्द्रियं
व्वीर्यं पुनरात्मन्धत्ते तस्मात् स्वम गोपू-
याच्छति ॥ ११ ॥

तस्मै तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति ।
न वा ऽएष क्रूरकर्मणे भवति यद्यजमानः क्रूर
मिव वा ऽएतत् करोति यद्याह जिनामीमाः
शुम्बे ऽद्रमा इति तथो हास्यैतदक्रूरं कृतं
भवति तस्मात्तावन्मात्रीर्व्वा भूयसीर्वा प्रति-
ददाति * ॥ १२ ॥

अथ दधिघानायच्छति । सो ऽयेष यूयं दक्षि-
णेन स्वेदिं येनैव दधिया यन्ति तेन प्रतिपदाते
तं जघनेन सदो ऽयेष शाला मुपाच्छति ॥ १३ ॥

मा न † इन्द्र ते व्वयं तुराषाट् । अयु-
क्तासो ऽश्वब्रह्मता व्विदसाम । तिष्ठा रथ मधि
यं व्वज्रहस्ता रश्मीन् देव यमसे स्वश्वानित्युदा-
च्छत्येवैतयाभीशवो वै रश्मयस्तस्मादाह रश्मीन्

---

* ददाति'—इति क ।
† ■—इति क, ख ।

देव यशसे स्वाहेत्यथ रथविमोचनीयानि जुहोति प्रीतो रथो विमुच्याता इति तस्माद्रथविमोचनीयानि जुहोति ॥ १४ ॥

स जुहोति। अग्नये गृहपतये स्वाहेति स यदेवाग्नेयꣳ रथस्य तदेवैतेन प्रीणात्यश्वा वा आग्नेया रथस्याश्वानेवैतेन प्रीणाति योऽस्यै गार्हपतं यावतो यावत ईष्टे तस्मिन्नेवास्यैतद्गार्हपतꣳ राज्यमभिविमुच्यते * ॥ १५ ॥

सोमाय वनस्पतये स्वाहेति द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव वानस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति दारुणा वै वानस्पत्यानि रथस्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्रमेवास्यै तद्राज्यमभिविमुच्यते † ॥ १६ ॥

मरुतामोजसे स्वाहेति। स यदेव मारुतꣳ रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्ठसारथी ते सप्त सप्त वै

* १ । -विमुच्यत —इति ग । घ

मारुतो यथा: सर्व्व मेवैतेन रथं प्रीणाति विशो वै मरुतो विशमेवास्मैतद्राज्यमभिविमुच्यते * ॥ १७ ॥

इन्द्रस्येन्द्रियाय स्वाहेति स यदेवैन्द्रᳪ रथस्य मद्वैवैतेन प्रीणाति सव्यष्ठा वा ऽऐन्द्रो रथस्य सव्यष्ठार मेवैतेन प्रीणातीन्द्रियं वै व्वीर्यं मिन्द्र इन्द्रिय मेवास्मैतद्वीर्यᳪ राज्य मभिविमुच्यते * ॥ १८ ॥

अथ व्वाराह्या ऽउपानहा ऽउपमुञ्चते । यत्रौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो व्वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूत-स्तस्माद्वराहे गावः सञ्जानते स्व मेवैतद्रस मभि-सञ्जानते तत् पशूना मेवैतद्रसे प्रतितिष्ठति तस्मा-द्वाराह्या ऽउपानहा ऽउपमुञ्चते ‡ ॥ १९ ॥

अथेमां प्रत्यवेक्षमाणो जपति । पृथिवि मातर्मा मा हिᳪसीर्मो ऽअहं त्वा मिति व्वरुणाद्ध वा ऽअभिषिषिचानात् पृथिवी बिभयाञ्चकार महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै मायं नाव-दृणीयादिति व्वरुण उ ह पृथिव्यै बिभयाञ्चकार

---

*, † ०विमुच्यत — इति ग, च । ‡ उपमुञ्चत — इति ग, च ।

यद्वै मेयं नावधून्वीतेति तद्वनयैवैतन् मित्रधेयमकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ २० ॥

वरुणसवो वा ऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै माऽयं नावदृणीयादित्येव उ ह्यस्यै बिभेति यद्वै मेयं नावधून्वीतेति तद्वनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरं तस्मादेवं जपति ॥ २१ ॥

सो ऽवतिष्ठति । हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदित्येतामतिच्छन्दसं जपत्येषा वै सर्वाणि छन्दाꣳसि यदतिच्छन्दास्तथैनं पाप्मा नान्ववतिष्ठति ॥ २२ ॥

स न सङ्गृहीतान्ववतिष्ठेत् । नेत्तं लोकमन्ववतिष्ठाद्यꣳ सुपुवाणोऽन्ववास्थादिति तꣳ रथमेव रथवाहन आदधति ततो ऽवाङुपप्रवर्त्तते तथा

त लोक नान्ववतिष्ठति यत् सुषुवाणो ऽन्ववा-
स्यात् ॥ २३ ॥

उत्तरेणाहवनीयं पूर्व्वाग्निमुद्धृतौ भवति । स
रथवाहनस्य दक्षिणं मन्वनुप्यन्दत् शतमानौ प्रवृत्ता-
बावध्नाति * ॥ २४ ॥

औदुम्बरीं शाखा मुपगूहति । तयोरन्यतर
मुपस्पृशतीयदस्यायुरस्यायुर्मयि धेहि युङ्ङसि
व्वर्चोऽसि व्वर्चो मयि धेहीति तदायुर्व्वर्च
आत्मन् धत्ते ॥ २५ ॥

अथौदुम्बरीं शाखा मुपस्पृशति । ऊर्गस्यूर्जं
मयि धेहीति तदूर्ज मात्मन् धत्ते तद्यदेतस्य कर्मण
एताविव शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे
ददाति ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति
तस्मात्तौ ब्रह्मणे ददाति † ॥ २६ ॥

अथैष मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी
पयस्या निहिता भवति ता मस्य बाहू ऽभ्युपा-

---

* ०बामधाति' इति क।
† 'ददाति — इति क।

वहरतीन्द्रियं वा वीर्य्यमतो बाहू ऽअभ्युपावहरा-मीति पशूनां वा ऽएष रसो यत् पयस्या तत् पशूनामेवास्यैतद्रसं बाहू ऽअभ्युपावहरति तद्यन् *मैत्रावरुणी भवति मित्रावरुणाऽउ हि बाहू तस्मान् मैत्रावरुणी भवति * ॥ २० ॥ ५ ॥

॥ इति तृतीयप्रपाठकस्य पञ्चमं ब्राह्मणम् [४. ३.] ॥

कात्यायनः— "शताद् गाः शतमधिकां वा खलाहवनीययो-रन्तरः स्थापयति"-इति †। 'खल' धान्यैः स्थानुः, तदर्थ-माहवनीयस्योत्तरप्रदेशे शतमद्धा अधिका वा गाः स्थापयेदिति। तदिदं कार्य्यवादं विधत्ते— "तद् योऽस्य स्वो भवतीति। 'परःशताः' शताधिका इत्यर्थः। 'एवं' पशुसंस्थापनरूपं कर्म्म 'करोतीति' इति 'यत्', एतत् 'तत्' 'तथो' तथैव, वरुणेन कृतत्वादित्युत्तरत्र सम्बन्धः ॥ १ ॥

"वरुणादिति ‡। पूर्वं राजसूयेऽभिषिच्यमानाद् 'वरुणाद्' 'इन्द्रियं' 'वीर्य्यम्' 'अपचक्राम' अपसृतम्। वीर्य्यापसरणे कारण-माह— "अस्माद् य एष इति। 'अस्मात्' निमित्तं 'सम्भृतः' 'अपां-रसः', 'येन' सम्भृतेन रसेन इदानीम् अध्वर्युः 'अभिषेक्ष्यति'। 'सः' रसः 'अस्य' वरुणस्य 'वीर्य्यं' 'निर्जघान' हतवान्। वरुणः

---

* 'भवति'—इति क।

† का० श्रौ० सू० १५ ६ १५। 'खलो धान्यैः अपिहितः'—इति तत्र कर्कोपाध्यायः। तै० सं० १. ८. १०., तै० ब्रा० १. ७. ४. द्रष्टव्य।

‡ राजसूयस्य पञ्चमकाण्डाभिधेयत्वे ऐतूपत्यामर्थैवैतदाख्यायिका।

"व्यथ भयचन्नवो" ॥ अमवाय 'त्वा' त्वाम्, स्थातिष्ठा मीति शेष । 'स्वधायै' अन्नाय त्वां मातिष्ठामि 'इति'। 'अर्जुन इति' इन्द्रस्य प्रिय नाम, इन्द्रात्मकोऽहं मातिष्ठा मीति सम्बन्ध † ॥

मन्त्र पदयाऽनूद्य व्याचष्टे— "अनार्थे त्वेति। अर्जुनपद स्येन्द्रवाचकत्व दर्शयति— "अर्जुनो ह वा इति। 'इन्द्रस्य' 'गुह्य' गूढ नामधेयम्, तस्मात् अर्जुन इन्द्र। अस्त्विन्द्र स्यार्जुननामधेयम्, प्रकृते किं मायात मित्याशङ्ग्य, यष्टुरिन्द्रा त्मकत्व माह— "इयेन वेति। यज्ञसम्बन्धात् यष्टृत्वाच्च युज्यत इन्द्रत्वम्, तस्मान्मन्त्रे अर्जुनपदेन यजमानाभिधान युज्यत इत्यर्थ ॥ ७ ॥

अथ दक्षिणभागे युक्तस्याश्वस्य प्राजन समन्त्रक विधत्ते— 'अथ दक्षिणेति ॥। 'प्रजयेति' "ऋपी गतौ" §, प्राज नीत्यर्थ । हे अश्व। 'मरुता' विद्युद्रूपाणा 'प्रसवेन' प्रेरणया 'जय' सर्वं स्वाधीन कुर्विति ‡ ॥

मन्त्र व्याचष्टे— 'विशो वा इति। यद् राज्ञा जेतव्य मस्ति, तद् 'विशा' प्रजया 'जयति', तस्माद् विड्रूपमरुत् प्रतिपादनमन्त्रो युक्त ॥ ८ ॥

विधत्ते — "अथ मध्य इति *। 'गवां' पूर्वं स्थापितानां 'मध्ये' 'उदयच्छति' स्थापयति। 'मनसा' 'आपाम' आप्नुवन्तो भवाम। आप्नोतेर्लुङि लृदित्वात् च्लेरङि कृते रूपम्। मन्त्रस्य तात्पर्यं आह— "मनसा वा इति †॥ ८॥

अथ धनुष्कोट्या तासां स्थापितानां गवां मध्ये एकस्याः स्पर्शनं समन्त्रकं विधत्ते— "अथ धनुरिति ‡। इन्द्रियेण वीर्येण सङ्गता भवामः। "इन्द्रियं वा इति §। "समिन्द्रियेण"—इति मन्त्रेण ‖ गोरुपस्पर्शने इन्द्रियस्यैव वीर्यस्य धारणं कृतं भवतीत्यर्थः। जितानां गवां स्वाधीनकरणार्थं 'जिनामि'—इति ब्रूयात्। इदं ब्राह्मणोक्तं वाक्यम्, न तु मन्त्रः। तस्यायमर्थः— 'इमाः' गाः 'जिनामि', अपि चेमाः 'कुर्वे' स्वाधीनाः करवै इति। "ज्या वयोहानौ", "ग्रहिज्या" —इत्यादिना सम्प्रसारणम्। अत्र सूत्रम्— "धनुरार्त्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति जिनामीमाः कुर्वे इमा इति चाह"—इति ¶ ॥ १०॥

तासां स्थापितासु गोषु रथस्य स्थापनं प्रशंसति— "तद्यदिति। 'यद्' यस्मात् 'पुरुषात्' 'पराङ्' पराधीनं बहिर्मुखं 'नष्टं' 'भवति'। किं तत्? तदाह— "यशो वा किञ्चिदिति।

---

* का० श्रौ० सू० १५. ६. १८।
† वा० सं० १० २१ ५।
‡ का० श्रौ० सू० १५ ६ २०।
§ वा० सं० १० २१ ६।
‖ का० प० १८ पा०। पा० सू० ६ १ १६।
¶ का० श्रौ० सू० १५ ६ २०, २१।

तद् यजमानादिकं 'विचित्' अन्यत् 'प्रथमां' पूर्वतः 'स्वं' स्वीयं वस्तु अभिलक्ष्य 'प्रतमां' प्रकर्षेण गच्छति। 'तद्' अनेन 'पश्व' आलेयेषु स्थापनेन परावृत्तं वीर्यं 'स्वात्' ज्ञातेः सकाशात् पुनः स्वाधीनं कृतवान् भवतीत्यर्थः ॥ ११ ॥

एवं स्थापितानां गवां स्वामिने स्वाय, अन्यासां तावतीनां गवां प्रतिदानं दर्शयति— "तस्मै तावन्मात्रीरिति *। यावत्संख्याकाः पूर्वं आहवनीयस्योत्तरतो गाः प्रवस्थापिताः, 'तावन्मात्रीः' तावत् परिमाणं यासां तावन्मात्राः। प्रमाणे मात्रच् प्रत्ययः †, "टिड्ढाणञ्"-इति सूत्रेण ङीप् ‡। 'भूयसीः' ततोऽप्यधिकाः। प्रतिदानं प्रशंसति— "न वा एष क्रूरेति। "यजमान इति। 'यत् एष क्रूरकर्मैव न भवति'-इत्यन्वयः। यजमानेनान्यस्य प्रीतिजनकं कर्म कर्त्तव्यम्। किं तत् क्रूरकर्मेति तद् दर्शयति— "यदाह जिनामीति। तस्मात् लोकाधिके स्वाय अन्यास्तावतीः 'भूयसीर्वा' गाः दत्वा वेदिमध्ये स्थितानां गवां स्वाधीनकरणेन क्रूरं कर्म न कृतं भवतीत्यर्थः ॥ १२ ॥

आहवनीयस्योत्तरतः स्थापितानां गवां मध्ये दक्षिणतोऽश्वानां स्थापनं विधत्ते— "अथ दक्षिणामिति। यूपस्य पूर्वतो वेदेर्दक्षिणतः 'दक्षिणान्' दक्षिणदिङ्मुखानश्वान् स्थापयेत्। अथाग्न'पात्रदेशे § रथस्य स्थापनं विधातुं मुदग्गमनमार्गे

* का० श्रौ० सू० १५ । २९ ।

† "प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः"—इति पा० सू० ५. २. ३७ ।

‡ पा० सू० ४. १. १५ ।

§ 'मोऽग्न.पात्र. उत्तिरन्तर्देशपात्रदात्तरदानमपरः' इमा० २८१पृ० ५पं०।

आह— "सोऽग्रेणेति। अनेन मार्गेण रथं प्रदक्षिणम् आवर्त्यम्। 'येनैव दक्षिणा इति। दक्षिणागमनमार्गस्तु पूर्वमेवोक्तः *। सदसः पश्चिमे, शालाया पूर्वदेशे रथम् 'उदच्छ ते' स्थापयेत्। सूचितं च— "पूर्वेण यूपं परीत्याग्नं पात्वदेशे स्थापयति मा त इन्द्र इति"—इति † ॥ १३ ॥

"मा त इति ‡। मन्त्रस्यायमर्थः,— हे 'वज्रहस्त!' 'यं रथम्' 'अधितिष्ठ' अधितिष्ठसि, हे 'देव!' यस्मिंस्त्वं सव स्थित 'सम्मान्' शोभनाश्वान् 'रश्मीन्' 'यामसि' नियच्छसि। हे 'तुराषाट्!' तूर्णं सहत इति तुराषाट्, तस्य सम्बुद्धिः, हे 'इन्द्र!' 'ते' तव सम्भृते 'रथे' 'अयुक्ता' अयोगरहिता वयम् 'अज्ञाता' अज्ञातत्वम् 'विदसाम'। विदेर्लेटि सिपि, "लेटोऽडाटौ"—इत्यडाटौ § च, विदेम। तव रथे अयुक्ता वयं ब्रह्मवर्चसम् न लभामहे, किन्तु युक्ता सन्तो ब्रह्मवर्चसमेव लभेमहीत्यर्थः। रश्मिपदस्यार्थं आह— "अभीशव इति॥

रथविमोचनीयहोमं विधत्ते— "अथ रथेति ‖। 'रथ' होमेन 'प्रीतः' सन् 'विमुच्यते' विमुक्तो भवत्विति ॥ १४ ॥

होमे मन्त्रं चतुरो मन्त्रान् अर्थवादं पृथग् विधत्ते— 'स जुहोत्यग्नय इति ¶। चतुर्णां मन्त्राणामयमर्थः —

---

* अनुपदमेवोक्तं ( २८१ पृ० १३ पं० ) द्रष्टव्यम्।

† का० श्रौ० सू० १५ ६ २२ सू।

‡ वा० सं० १० २२ १।

§ पा० सू० ३ ४ ७ ३ १ ३४ ३ ४ ९७ ३ ४ ९४।

‖ का० श्रौ० सू० १५ ६ २३।

¶ वा० सं० १० [illegible] १—४।

'गृहपतये अग्नये' 'स्वाहा' जुहुत मधु।

वनस्पतये वनस्पतिगुणकाय 'सोमाय स्वाहा'।

'मरुतां' सम्बन्धिने 'ओजसे' बलाय 'स्वाहा'।

'इन्द्रस्य' सम्भूताय 'इन्द्रियाय' वीर्याय 'स्वाहा' इति॥

तत्र प्रथममन्त्रं प्रशंसति— "यदेवाग्नेय मिति। अग्नेरेक-देशेनाग्निपदेन रथस्य आग्नेयं यत् प्रीणितवान् भवति। रथ स्याग्नेयं यत् दर्शयति— "वहा वा इति। अश्वैरुह्यमानस्य युगस्य प्रान्तप्रदेशा वहा, ते आग्नेया, "अग्निदग्ध मिवैषां वह भवति"–इतिश्रुते * अग्निदग्धत्वसाम्यात् एषोऽपि वहा आग्नेया। प्रथममन्त्रे 'अग्नये'–इत्येकदेशपाठेन रथाङ्गप्रीणनम्। 'गृह पतये'–इति भागं प्रशंसति— "श्रीर्वा इति। 'गार्हपत्यं' गृह पतित्वं नाम 'श्रीः', यत् पुरुषो 'यावत' धनस्य पुरुषस्य वा 'ईष्टे', 'तत्' एतेन गृहपतय इति मन्त्रभागपठनेन यज मानस्य गार्हपत्यलक्षणं राज्यं अभिलक्ष्य रथो विमुक्तो भव तीत्यर्थः॥ एवं मुत्तरेषु मन्त्रेषु एकदेशेन रथाङ्गप्रीणनम्, अपरेण यजमानफलाय रथ विमोक उच्यत इति॥ १५॥

"सोमायेति। "द्रव्याणीति। वनस्पतिनिर्मितानि यानानि 'द्रव्याणि' हिमकारादि 'रथ्यानि' रथसम्बन्धीनि, 'यान्यानि' यानसम्बन्धीनि 'च' इति। तदेतेन 'सोमाय वनस्पतये'– इतिमन्त्रपाठेन उभयविधेभ्यो रथावयवेभ्य, तदर्थम्, अपि इष्टम्' अहिंसां कृतवान् भवति। सोमस्य वनस्पतित्वात् ओषधिपोषकत्वात् वनस्पतिपदेन रथस्य दारुविनिर्मितान्यङ्गानि प्रीणयति। सोमस्य सत्रफलत्वम्, राजत्वाद् बलसम्पादकत्वाद्वा।

---

* १का० १अ० २ब्रा० ८क० (१भा० ३४ पृ० १३ पं०)।

तस्मात् सोमपदेन चत्रियसम्बन्धि स्वाराज्य मभिलषन् रथो विमुक्तो भवतीत्यर्थः ॥ १६ ॥

"मरुता मिति। दतीयेऽत्र मन्त्रे मरुता मिति पदेन रथस्यैव प्रीणनम्। रथस्य मारुतत्व सम्पादयति— "चत्वारो-ऽश्वा इति। रथस्याश्वचतुष्टयम्, 'रथ' श्च पञ्चम., 'दौ सव्यष्ठसारथी' सव्यदक्षिणभागयोरवस्थितौ द्वौ सारथी इति 'सप्त' संख्या भवति, मरुता मपि सप्तगणात्मकत्वात् सप्तसङ्ख्याकत्वम्; अत सप्तसङ्ख्यासाम्यात् मरुता मिति पदेन रथस्यैव प्रीणन कृत भवतीत्यर्थ.। मरुत्पद मेव यजमानस्य फलार्थं मपि प्रशंसति— "विशो वा इति ॥ १७ ॥

"इन्द्रस्येति। अत्र चतुर्थमन्त्रे इन्द्रपदेन रथस्य सारथि प्रीणनम्। सव्यभागे तिष्ठतीति 'सव्यष्ठा'। तिष्ठतेरौणादिक ऋकारप्रत्ययः किच, तिस्रादालोप', "अम्बाम्बगोभूमि"-इति सूत्रे * 'स्था स्थिन् ऋूणा.'-इति वचनात् षत्वम् ॥ १८ ॥

विधत्ते— "अथ वाराह्या इति। 'वाराह्यौ' वराहचर्म निर्मिते 'उपानहौ' 'उपमुञ्चते'। कात्यायनेन पशूनां रसोऽसीति मन्त्रेण वाराह्योरुपानहोरुपमोको † विहितः ‡। तत्र मन्त्रे वराहस्य पशुरसत्व मभिधीयते, तदुपपादयति— "पशौ ह वै देवा इति। पूर्वं देवा घृतकुम्भ मन्त्रौ प्रापु, तस्माद् वराह उत्पन्न, अतो घृतोत्पन्नत्वाद् वराहस्य 'मेदुरत्व' मास-

---

* पा० सू० ८ ३ ९७।

† 'ऽपविमोकौ'—इति ख। उपविमोकशब्दार्थस्त्वैतरेयश्रुतितो ज्ञायताम्, (ऐ० आ० ६ ५ ७)।

‡ का० श्रौ० सू० १५ ६ २४।

त्वम्। अत्र 'वराहे' 'गावः' 'सञ्जानते' संवदन्ते ; क्षीर-रसभूतघृतोत्पन्नत्वात्। तस्माद् वाराह्योरुपानहोरुपमोकेन पशु-रस एव स्वयं प्रतिष्ठितो भवतीत्यर्थः ॥ १९ ॥

"अथेमा मिति। 'पृथिवि मातः!' सर्वेषां निर्मात्रि पृथिव्या मातृत्वम्। द्यौः पिता पृथिवी मातेति * श्रुत्यन्तरेषु श्रूयते। 'मा' मां 'मा हिंसीः' मा बाधिष्ठाः, 'अहम्' अपि 'त्वा' नैव हिंसिष्य मिति मन्त्रार्थः †। "पुत्रस्य वा अभि-पित्वानादित्यादिकः, "न हि माता पुत्रं हिनस्ति, न पुत्रो मातर मित्यन्तः, वाक्यसन्दर्भो वाजपेये भूम्यवेक्षणप्रसङ्गे व्याख्यातः ‡ ॥ २०, २१ ॥

रथादवरोहणं विधत्ते— "सोऽवतिष्ठतीति §। अवतस्य तिष्ठतीति अवयवस्य कृतिकर्मणा समन्वये "समवप्रविभ्यः स्थः"-इति ‖ आत्मनेपदं न भवति ; तिष्ठतिक्रियायोगाभावेन प्रेत्युपसर्गकल्पनाया अभावात्, अन्यथा आत्मनेपदं दुर्निवारं स्यात्। अथ वा व्यत्ययेन परस्मैपदम् ॥

"हंस इति ¶। मन्त्रस्यायमर्थः— शुचि पृथिवी मिति 'हंसः' रथः, असौ देवयजने रथवाहने च सीदतीति 'शुचि-

---

* "द्यौर्मे पिता ०—० माता पृथिवी"—इति ऋ० सं० १. १६४. ३३, "द्यौष्पितः पृथिवि मातर्"—इति ६. [illegible] ५। एवमादिषु द्रष्टव्यः।

† वा० सं० १० २३. ५।

‡ इहैव पुरस्तात् २ १. १८ (१०२ पृ०) द्रष्टव्यम्।

§ का० श्रौ० सू० १५ ६ २६।

‖ पा० सू० १ ३ २२।

¶ वा० सं० १०. २४ १।

षत्', तस्योपरि यजमानं वासयतीति 'वसुः', तदनुग्रहायैव ह्यन्तरिक्षे सीदतीति 'अन्तरिक्षसत्', 'होता' होतृसमानः, तदेव कथमित्युच्यते— वेद्यां सीदतीति 'वेदिषत्', 'अतिथिः' अतिथिवत्पूज्यः, तदपि कथमित्युच्यते— दुरोणेषु गृहेषु सीदतीति 'दुरोणसत्' यो यस्य मारोढुं नयति तस्य तस्य सर्वे सीदति, नृषु मनुष्येषूपकारं कर्तुं सीदतीति 'नृषत्', वरे श्रेष्ठे राजादिरूपे सीदतीति 'वरसत्', ऋते यज्ञे याजपेयादौ सीदतीति 'ऋतसत्', स्वयं वोढुं व्योमनि आकाशे सीदतीति 'व्योमसत्'। "अप्सुयोनिर्वा अश्वः"—इतिश्रुतेः * अश्वो जातैरश्वैरुपेतत्वात् 'अब्जाः', गोशब्दवाच्याद् यज्ञात् जायत इति 'गोजाः', एतच्च "स्फ्यस्तृतीयः रथस्तृतीयम्"—इत्याम्नातम् †, ऋतार्थे यज्ञार्थं जातत्वात् 'ऋतजाः' अद्रिभ्यो दृषदादिभ्यो जातत्वात् 'अद्रिजाः'। ईदृशो रथो 'बृहत्' प्रौढ राजसूयाख्यम्, 'ऋतं' यज्ञं सम्पादयत्विति रथपक्षेऽर्थः॥

सूर्यपक्षे त्वयमर्थः — हन्ति गच्छतीति 'हंसः' आदित्यः, शुचौ निर्मले मण्डले सीदतीति 'शुचिषत्', 'वसुः' निवासहेतुः, प्राणात्मकवायुरूपेणान्तरिक्षे सीदतीति 'अन्तरिक्षसत्', अग्निरूपेण वेद्यां सीदतीति वेदिषत्, अप्सु सूक्ष्मभूतेषु जायत इति 'अब्जाः', गोषु पृथिवीप्रधानेषु स्थूलभूतेषु जायत इति 'गोजाः, ऋतौ सत्यभूते मण्डले जायत इति 'ऋतजाः', अद्रौ पाषाणे मेघे वा उदकरूपेण जायत इति 'अद्रिजाः', 'ऋतम्'

* इहैवोपरिष्टात् (१३का० १प्र० ११ब्रा० १६क०) द्रष्टव्यम्।
† तै० ब्रा० १ २ ६ ४ द्रष्टव्यम् अत्र मिश्र गुरुत्वादपि।

"स्व गतौ" * सर्वत्र व्याप्तं ज्ञानात्मकम्, 'स्वत्' "स्वि शब्दे" † प्रशस्तम्, परमानन्दलक्षण मिति ॥

मन्त्रगत छन्दोविशेष प्रशंसति— "एता मतिच्छन्दस मिति। चतुश्चत्वारिंशदक्षराभ्यातिजगतीच्छन्दः, सा च गायत्र्यादीनि छन्दांसि अतिक्रम्य वर्तत इति तस्या अतिच्छन्दस्त्वम्। सर्वेषा मेव छन्दसा मत्रान्तर्भावात् सर्वच्छन्दोरूपत्वम्, तस्मात् सर्व-च्छन्दोऽतिक्रमणात् 'एता' जपित्वा, अवरोहन्तम् 'एनम्' यज-मानम् 'अनु' 'पाप्मा' 'नावतिष्ठति' नावरोहति, पाप्मान मतिक्रामेदित्यर्थ ॥ २२ ॥

अवरोहकस्य रथस्य रथवाहनेऽनसि स्थापनं विधातु यजु स्वस्थान निषेधति— "नत्रेति ‡। सम्यक् प्रग्रह गृह्णातीति 'सङ्ग्रहीता' सारथि स, 'त' यजमानम् 'अनु' 'नावतिष्ठेत्' नावरोहेत्। तत्र कारण माह— "नेदिति। सुत्यम् यं लोक प्राप्नोति, तं लोक सारथिरपि न प्राप्नुयादिति। "त रथ मिति। 'रथवाहने' रथस्थापनसाधने 'अनसि' § 'तम्' अव रुह्य 'रथम्' 'आदधाति | निदध्यात्। तथाच तैत्तिरीय-कम्— "यदुभौ सहावतिष्ठेता समान लोक मियाता सह सङ्ग्रहीता रथवाहने रथ मादधाति सुवर्गादेवैन लोका

---

* आ० प० ८३४ पा०।

† आ० प० ७३५ पा०।

‡ का० श्रौ० सू० १५ ६ २७ रथवाहनपाठोऽप्यनेकत्र।

§ रथवाहनशब्दस्याप्रसिद्धत्वात् स्वय मेव तस्यार्थं माह (कर्क) —"अनसात्मके"—इति का० श्रौ० सू० १५ ६ २८।

‖ मत्रे आदधानि —इति मूलत।

दन्तर्दधाति"—इति *। "तत इति। 'ततः' पश्चाद् यन्ता 'प्रत्यङ्' प्रत्यङ्मुखः सन् 'अपप्लवते' "प्लुङ् गतौ"—इति † धातुः, अपसरतीत्यर्थः। तथाच सूत्रितम्— "शालाया दक्षिणतो ऽपप्लवते यन्ता"—इति ‡ ॥ २३ ॥

पूर्वं स्वस्य भ्रातृव्याय गोःस्थापनकाले पूर्वाग्निवहनस्याहवनीयस्योत्तरतः स्थापनं सूत्रकृतोक्तम्—"गवां शतमधिकं वा ऽऽहवनीयस्योत्तरतः स्थापयति, पूर्वाग्निवहनञ्च चाग्नि"—इति §, तदिदानीं विधत्ते—"उत्तरेणाहवनीयमिति। "पूर्वाग्निरिति। शान्तिपौष्टिकार्थो ऽग्निः 'पूर्वाग्निः', 'सः' अनसा 'उद्धृतः' ऊर्ध्वं हृतः स्थापितो 'भवति'॥

अथ रथवाहनस्य दक्षिणे अंसे शतमानयोराबन्धनम्, तत्रैव औदुम्बर्याः शाखाया उपगूहनञ्च विधत्ते— "स रथेति। 'दक्षिणम्' 'अनुपन्थं' प्रान्तमत्र 'प्रवर्तौ' वर्तुलौ 'शतमानौ' शतमानपरिमितौ द्वौ रुक्मौ 'आबध्नाति' आसञ्जेत् ‖ ॥ २४ ॥

"औदुम्बरीमिति। तयोः शतमानयोरन्यतरस्योपबन्धने समन्त्रकं विधत्ते — "तयोरिति। कात्यायनस्तु मन्त्रद्वयं कृत्वा उभयोरपि स्पर्शने विनियोगं सूत्रयामास। "उपस्पृशति शतमानावियदसीत्येकं युङ्ङसीत्यपरम्"—इति ¶। 'इयदसि' एतावत्परिमाणो ऽसि।

* तै० ब्रा० १. ७. ९. ६।
† भ्वा० आ० ९५७ धा०।
‡ का० श्रौ० सू० १५. ६. २९।
§ का० श्रौ० सू० १५ ६ १३, १४। पूर्वत्रोद्धृतमिदम् (२५९पृ०)।
‖ का० श्रौ० सू० १५ ६. ३०, ३१।
¶ का० श्रौ० सू० १५ ६ ३२।

अत्र तत्परिमाणं हस्तेनाभिधीयते ; स्वल्पपरिमितत्वात् । 'आयुरसि' आयुःस्वरूपोऽसि ; "आयुर्हिरण्यम्"—इति श्रुतेः * । तस्मात् 'आयुर्मयि धेहि' ; यो हि यदात्मको भवति, स एव तद् दातुं शक्नुते । 'युङ्ङसि' "युजिर् योगे" † यज्ञं युनक्तीति 'युङ्', तथाविध 'असि' । 'वर्चः' तेजः 'असि' । तस्माद् 'वर्चो मयि धेहि' ‡ । मन्त्रार्थे ब्राह्मणमाह— "तदायुर्वर्च इति ॥ २५ ॥

शाखाया उपसर्जनं मन्त्रं विधत्ते— "अथोदुम्बरीमिति § । 'ऊर्क्' अन्नम् 'असि' । तस्मात् 'मयि' 'ऊर्जम्' अन्नं 'धेहि' इति ‖ । एतयोर्दानं विधत्ते— "तस्यैतस्येति । ब्रह्मणे दानं प्रयच्छति— "ब्रह्मा हि यज्ञ मिति ¶ ॥ २६ ॥

विधत्ते— "अथैष ग्रैवेति । मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मदेशे मित्रावरुणदेवत्या 'पयस्या' आमिक्षा 'निहिता भवति' । तस्या यजमानबाह्वोरवहरणं विधत्ते— "तां तस्य बाहू इति ** । 'यस्य' सुन्वतो 'बाहू', 'ताम्' 'अभि'-लक्ष्य 'उपावरोहति' प्रसारयति । हे 'बाहू !' 'वीर्यकृतः' वीर्यकारिणः 'इन्द्रस्य' यजमानस्य सम्बन्धिनौ 'वां' युवां ( बाहू ) 'अभ्युपा-

---

* तै० ब्रा० १. ७ ६ ३।
† सं० उ० ७ब्रा०।
‡ वा० सं० १० २५ १, २।
§ का० श्रौ० सू० १५. ६ ३२ क।
‖ वा० सं० १० २५. ६।
¶ का० श्रौ० सू० २५ ५ ३३ ख।
** का० श्रौ० सू० १५ ६ ३४।

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

चतुर्थाध्याये चतुर्थं ब्राह्मणम्।

---

॥ हरिः ॐ ॥

मैत्रावरुण्या पयस्यया प्रचरति। तस्या अनिष्ट एव स्विष्टकृद् भवत्यथास्मा ऽआसन्दीमाहरन्त्युपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते तस्मादस्मा ऽआसन्दीमाहरन्ति सैषा खादिरी विद्धा भवति येयं व्रध्र्यूता भरतानाम् ॥ १ ॥

तां मयेऽस्य। मैत्रावरुणस्य धिष्ण्ये निदधाति स्योनासि सुषदासीति शिवामेवैतच्छग्मां करोति * ॥ २ ॥

अथाधीवासमास्तृणाति। क्षत्रस्य योनि-

---

* करोति—इति क।

रसीति तद्यैव क्षत्रस्य योनिस्ता मेवैतत् करोति * ॥ ३ ॥

अथैन मासादयति। स्योना सीद सुषदा सीदेति शिवां शग्मा सीदेत्येवैतदाह क्षत्रस्य योनि मासीदेति तद्यथैव क्षत्रस्य योनिस्तस्या मेवैन मेतद्दधाति † ॥ ४ ॥

अथान्तरांसौ ऽभिमृश्य जपति। निषसाद धृतव्रत इति धृतव्रतो वै राजा न वा ऽएष सर्व्वस्मा ऽइव वदनाय न सर्व्वस्मा ऽइव कर्मणे यदेव साधु वदेत्तत् साधु कुर्यात्तस्मै वा ऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रत इति वरुणः पस्त्या-स्विति विशो वै पस्त्या विक्ष्वित्येवैतदाह साम्रा-ज्याय सुक्रतुरिति राज्यायेत्येवैतदाह यदाह साम्रा-ज्याय सुक्रतुरिति ‡ ॥ ५ ॥

---

* 'करोति'—इति क।

† 'दधाति'—इति क।

‡ '[illegible]'—इति क। '[illegible]'—इति ख, ग।

अथास्मै पञ्चाक्षान् पाणावावपति। अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ता मित्येष वा ऽअयानभिभूर्यत् कलिरेष हि सर्व्वानयानभिभवति तस्मादाहाभिभूरस्येतास्ते पञ्च दिशः कल्पन्ता मिति पञ्च वै दिशस्तदस्मै सर्व्वा एव दिशः कल्पयति * ॥ ६ ॥

अथैनं पृष्ठतस्तूष्णी मेव दण्डैर्घ्नन्ति। तं दण्डैर्घ्नन्तो दण्डवध † मतिनयन्ति तस्माद्राजादण्ड्यो यदेनं दण्डवध ‡ मतिनयन्ति § ॥ ७ ॥

अथ वरं वृणीते। यद्वै ह वै किञ्च सुषुवाणो वरं वृणीते सोऽस्मै सर्व्वः समृध्यते तस्माद्वरं वृणीते ॥ ८ ॥

स ब्रह्मन्नित्येव प्रथम मामन्त्रयते। ब्रह्म प्रथम मभिव्याहराणि ब्रह्मप्रसूतां वाचं वदानीति तस्मात् ब्रह्मन्नित्येव प्रथम मामन्त्रयते त्वं ब्रह्मासीतीतरः प्रत्याह सवितासि सत्यप्रसव

---

* 'कल्पयन्ति'—इति क। †, ‡ 'दण्डवधं'—इति ग।

§ मतिनयन्ति—इति क।

इति व्वीर्यं मेवाग्निन्नेतद्दधाति सवितार मेव सत्यप्रसवं करोति ॥ ९ ॥

ब्रह्मन्नित्येव द्वितीय मामन्त्रयते। त्वं ब्रह्मा-सीतीतरः प्रत्याह व्वरुणो ऽसि सत्यौजा इति व्वीर्यं मेवाग्निन्नेतद्दधाति व्वरुण मेव सत्यौजसं करोति ॥ १० ॥

ब्रह्मन्नित्येव तृतीय मामन्त्रयते। त्वं ब्रह्मा-सीतीतरः प्रत्याहेन्द्रोऽसि व्विशौजा इति व्वीर्यं मेवाग्निन्नेतद्दधातीन्द्र मेव व्विशौजसं करोति ॥ ११ ॥

ब्रह्मन्नित्येव चतुर्थं मामन्त्रयते। त्वं ब्रह्मा-सीतीतरः प्रत्याह रुद्रोऽसि सुशेव इति तत् वीर्याण्येवाग्निन्नेतत् पूर्व्वाणि दधात्यथैन मेतच्छ-मयत्येव तस्मादेष सर्व्वेषामनो मृडयति यदेनत् शमयति ॥ १२ ॥

ब्रह्मन्नित्येव पञ्चम मामन्त्रयते। त्वं ब्रह्मा-सीतीतरो ऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत् परिमित मेवाग्निन्नेतत् पूर्व्वं व्वीर्यं दधा-त्यथानिरुक्तं प्रत्याहापरिमित वा ऽअनिरुक्तं

तदपरिमित मेवास्मिन्नेतत् सर्व्वं व्वीर्यं दधाति तस्मादवानिरुक्तं प्रत्याह * ॥ १३ ॥

अथ सुमङ्गलनामानं ह्वयति। बहुकार श्रेयस्कर भूयस्करेति य एवन्नामा भवति कल्याण मेवैतन्मानुष्यै व्वाचो व्वदति † ॥ १४ ॥

अथास्मै ब्राह्मण स्फ्यं प्रयच्छति। अध्वर्युर्व्वा यो व्वास्य पुरोहितो भवतीन्द्रस्य व्वज्रोऽसि तेन मे रध्येति व्वज्रो वै स्फ्यः स एतेन व्वज्रेण ब्राह्मणो राजान मात्मनो ऽबलीयाएंसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति तदमित्रेभ्य एवैन मेतद् बलीयाएंसं करोति ॥ १५ ॥

तं ‡ राजा राजभ्रात्रे प्रयच्छति। इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेन राजा राजभ्रातर मात्मनो ऽबलीयाएंसं कुरुते ॥ १६ ॥

तं राजभ्राता सूताय वा स्थपतये वा

* 'प्रत्याह'- इति ग।

† 'नदति'- इति क।

‡ तं'- इति, क, ग।

प्रयच्छति। इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं व्वात्मनो ऽवलीयाꣳसं कुरुते ॥ १७ ॥

तꣳ सूतो वा स्थपतिर्व्वा ग्रामण्ये प्रयच्छति। इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेन सूतो वा स्थपतिर्व्वा ग्रामण्य मात्मनो ऽवलीयाꣳसं कुरुते ॥ १८ ॥

तं ग्रामणीः सजाताय प्रयच्छति। इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेन ग्रामणीः सजात मात्मनो ऽवलीयाꣳसं कुरुते तद्यदेवꣳ सम्प्रयच्छन्ते नेत्पापवस्यस मसद्यथापूर्व्वं मसदिति तस्मादेवꣳ सम्प्रयच्छन्ते * ॥ १९ ॥

अथ सजातश्च प्रतिप्रस्थाता च। एतेन स्फ्येन पूर्व्वाग्नौ शुक्रस्य पुरोरुचाधिदेवनं कुरुतो ऽत्रा वै शुक्रोऽस्तार मेवैतत् कुरुतः † ॥ २० ॥

अथ मन्थिनः पुरोरुचा व्विमितं व्विमि-

* 'सम्प्रयच्छन्ति'—इति क। 'सम्प्रयच्छन्ते'—इति ख।
† 'कुरुतः'—इति ग, घ।

नुतः। द्यावौ वै मन्थौ तद्यथार मेवैनत् कृत्वा- याम्या ऽएतदाद्यं जनयतस्तस्मान्मन्थिनः पुरोरुचा व्विमितं व्विमिनुतः * ॥ २१ ॥

अथाध्वर्युः। चतुर्गृहीत माज्यं गृहीत्वाधि- देवने हिरण्यं निधाय जुहोत्यग्निः पृथुर्द्धर्मणस्पतिः- र्जुषाणो ऽअग्निः पृथुर्द्धर्मणस्पतिराज्यस्य व्वेतु स्वाहेति † ॥ २२ ॥

अथाक्षान्निवपति। स्वाहाकृताः सूर्यस्य रश्मिभि- र्यतध्वं सजातानां मध्यमेष्ठ्यायेत्येष वा ऽअग्निः पृथुर्यदधिदेवनं तस्यैते ऽङ्गारा यदक्षास्त मेवै- तेन प्रीणाति तस्य ह वा ऽएषानुमता गृहेषु वन्यते यो वा राजसूयेन यजते यो वैतदेवं व्वेदैतेष्वर्चेत्याह गां दीव्यध्व मिति पूर्वाग्निवाही दक्षिणा ‡ ॥ २३ ॥

अथाग्नये स्विष्टकृते ऽनुब्रूहीति। तद्य- दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजा-

---

* विमिनुतः'—इति अ, ब।

† 'स्वाहेति—इति क। 'स्वाहेति'—इति अ, ब।

‡ दक्षिणा—इति अ, ब।

पतिर्य्येष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्द्दधाति मध्यतः सुवति तस्मा-दुत्तरेणाहुती ऽएतत् कर्म क्रियत ऽआज्याज्या-द्धाग्निष्ट् स्विष्टकृतं यजेति व्वषट्कृते जु-होति ॥ २४ ॥

अथेडा मादधाति * । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्र मुपाकरोति तद् स्तोत्राय प्रमी-यति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते यज्ञस्य ॥ २५ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [४. ४.] ॥

अथ पयस्यायाः प्रचारं विधत्ते— "मैत्रावरुण्येति । "तस्या अनिष्ट इति । 'तस्याः' पयस्यायाः स्विष्टकृत् 'अनिष्टः' अहुतो भवति, प्राक् स्विष्टकृत इत्यर्थः ॥

विधत्ते— "अथास्या आसन्दी मिति । आसन्दीत्वपर्यं

* 'मादधाति'—इति क ।

पूर्वं सूक्तम्। आसन्द्याहरणं प्रशंसति— "उपरिसद्य मिति। एतद् वाक्यं वाजपेये व्याख्यातम् *। तस्याः प्रकृतिविशेषगुणान्तरं वाक्यभेदं मङ्गीकृत्य विधत्ते— "सैषा खादिरीति। 'वितृण्णा' छिद्रवती भवेत्। तस्या आसन्द्या रज्जुव्यूतत्वमस्ति, तत्र यजमानविशेषेण रज्जुविशेषं दर्शयति— "तेय मिति।' 'वर्ध्रव्यूता' चर्मविकाररज्जवः, ताभिर्व्यूता स्यूता भवति 'भरतानाम्'; अन्येषान्तु रज्जुमात्रम्। कात्यायनो निर्विशेषं सूत्रयामास— "खादिरी मासन्दी रज्जुव्यूताम्"–इति † ॥ १ ॥

तस्या निधानप्रदेशं विधत्ते— "तां मध्येवेदीति। मन्त्रं विधत्ते— "स्योनेति ‡। हे आसन्दि! 'स्योना' सुखरूपा 'असि', 'सुषदा' सुखसदनयोग्या 'असि'। मन्त्रं विवृणोति— "शिवा मिति। 'शग्मा' सुखकरीम् ॥ २ ॥

विधत्ते— "अथाधीवास मिति §। 'अधिवासः' आस्तरणम्, चित्रकम्बलादिकम्। "क्षत्रस्येति ‖। एष मन्त्रो व्याख्यातः ¶ ॥ ३ ॥

अस्यां तस्य उपवेशनं समन्त्रकं विधत्ते— "अथैन मिति। 'आसादयति' उपवेशयतीत्यर्थः **। हे यजमान!

---

* प्र० १. ६. २२ ( १०४ पृ० ३ पं० ) द्रष्टव्यम्।
† का० श्रौ० सू० १५. ७. १। 'रज्जूनाम्'—इति तत्र सूत्रपाठः।
‡ वा० सं० १०. २६. १।
§ का० श्रौ० सू० १५. ७. २।
‖ वा० सं० १०. २६. २।
¶ प्र० ३. २. २२. ( २४७ पृ० ४ पं० ) द्रष्टव्यम्।
** का० श्रौ० सू० १५. ७. ३।

'स्योना' सुखरूपाम् आसन्दीम् 'आसीद' आरोह, सुखसाधन योग्यां अधितिष्ठेत्यर्थः । "चतस्य योनि मासीदेति, उपदेशन-मन्त्रस्योत्तरभागः । अधीवासस्तरणे 'चतस्य योनि' अधीवास, त मारोहेत्यर्थः * ॥ ४ ॥

हृदयदेशादिस्पर्शनपूर्वकं जपं विधत्ते— "अथास्तराय इति । 'अन्तराये' मेषलमध्ये 'अभिमृश्य' जपेत् †।

मन्त्रस्याय मर्थः — अयं यष्टा 'धृतव्रत' स्वीकृतयष्ट, नियमितव्रतमादित्यापाद्यो 'वरुण' अनिष्टनिवारको भूत्वा 'निष साद' अस्या आसन्द्या उपरि देवे। 'पस्त्यासु' बहुषु वेदि गृहेषु, 'विश्व' प्रजासु आगत्य साम्राज्य कर्तुं 'सुक्रतु' शोभनकर्तृको भवतु ‡ ॥

मन्त्र प्रतिपाद्य मनूद्य व्याचष्टे— "धृतव्रती वै राजेति । धृतव्रतत्व दर्शयति— "न वा एष इति । 'एष' सुन्वन् 'सर्वस्मै' 'वदनाय' वाक्याय, असत्यवदनमलापादेत्यर्थः । तथा असुपयुक्तकर्मणे वा योग्यो भवति । तस्मै योग्य इति तदाह— 'यदेवेति । तस्मै साधुवदनाय साधुकर्मणे च 'एष' सुन्वन् राजा, 'श्रोत्रियश्च' ब्राह्मण, उभावपि भवत । एतयो नियतव्रतत्व माह— "एतौ ह वा इति । 'मनुष्येषु' मध्ये 'एतौ' एव 'धृतव्रतौ' § । श्रोत्रियोऽपि न बहुभाषी नासाधुकर्मकारी । 'पस्त्या' शब्दार्थं माह— "विशो वा इति ॥ ५ ॥

---

* वा० सं० १० २६ ३ । अधिवासम इति पाठस्त्वसाधु ।

† का० श्रौ० सू० १५ ७ ४ ।

‡ वा० सं १० २७ १ ।

§ दूषव किञ्चित्पाठो विलुप्त इति मन्यते ।

यजमानहस्ते पञ्चाक्षावापं च विधत्ते— "अयाग्ना इति *। अक्षा नाम कपर्दकाः सुवर्णनिर्मिताः, विभीदकफलानि सौवर्णानि वेत्येके †। ते चाक्षा द्यूतस्थाने निवपनीयाः ‡। तेषां चतुर्णां मक्षाणां 'कृत' सञ्ज्ञा, पञ्चाणा (।) 'कलि' सञ्ज्ञा §। तथा च शाखान्तरे स्तोमसङ्ख्यायां कृतादिव्यवहारः कृतः— "ये चत्वारः स्तोमा कृतं तत्, अथ ये पञ्च कलि स"–इति। यदा पञ्चाप्यक्षा उत्ताना ‖ भवन्ति, तदा देविसुर्जयो भवति, अथस्तु त्वेकरूपास्तु जय एव भविष्यतीत्यन्यतोऽक्षम्। अतः कलेः सर्वाक्षाभिभावुकत्वात्, पुन्वतोऽपि जयापेक्षत्वात् पञ्चाक्षनिवाप इत्यर्थः। तथा च मन्त्रे कलिर्वा तत्सम्बन्धात् यजमानो वा उच्यते। हे यजमान! 'अभिभूः' इतरेषां मक्षाणां अभिभविता भवसि। तदर्थम् 'एताः पञ्च दिशः कल्पन्ताम्' स्वाधीना भवन्त्विति ॥

मन्त्रं व्याचष्टे— "अय वा अयानिति ¶। अयशब्दोऽक्षपर्यायी; 'कलिर्हि सर्वान् अयान् अभिभवति'; अधिकसङ्ख्यत्वात्। एषोऽपि यजमानस्तत्सम्बन्धादभिभावुको भवतीत्यर्थः ॥

---

* का० श्रौ० सू० १५ ७. ५।

† 'सौवर्णां वा'–इति क।

‡ तै० ब्रा० १ ७. १० द्रष्टव्यम्। आपस्तम्बश्चाह— "अक्षावापो ऽधिदेवन सङ्ख्यावोऽस्याचान् निचीन् सौवर्णान् पदश्रतान् परःसहस्रान् वा"–इति श्रौ० सू० १८ १८, १६. १६. १।

§ का० श्रौ० सू० १५. ७. १८, १६।

‖ 'उत्पाताः'–इति क, ह।

¶ वा० सं० १० २८. १।

पञ्चदिग्विजयफलप्राप्तिमेव दर्शयति— 'पञ्च वै दिश इति ॥ ६ ॥

विधत्ते 'अथैन मिति। 'दण्डैः' यज्ञियवृक्षकाष्ठैः 'एनं' सुन्वन्तं 'घ्नन्तः' पञ्चाद्याः 'तूष्णीम्' अमन्त्रकं 'घ्नन्ति' हन्युः। अत्र सूत्रम् अस्य समन्त्रकमवहननं शाखान्तरीयमन्त्रांश्च विकल्पेन दर्शयामास— "पश्चादेनं यज्ञियवृक्षदण्डैः घ्नन्ति, स्तूष्णीं घ्नन्ति पाप्मानं तेऽपहन्मोऽति त्वा वध नयामीति वा"—इति *। "त दण्डैरिति। सुन्वतो दण्डवधेन अध्वकर्तृकस्य दण्डवधस्य प्राप्य मिव तत्वन्तो भवन्ति, तस्माद् राज्ञोऽदण्ड्यभाव †। यथा राजा स्वापराधान् ‡ प्रजा दण्डयति, एवं स्वयं न दण्ड्य इत्यर्थः ॥ ७ ॥

विधत्ते— "अथ वर मिति। 'वरं' 'वृणीते' याचते, यजमान कर्ता। तद्वरं प्रशंसति— "स ह वै अयेति ॥ ८ ॥

कात्यायन— "वरं हुत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः, सत्याह व्याख्याति सविता वरुण इन्द्रो रुद्र इति, त्वं ब्रह्मा सीत्यादिभिः"—इति §। अस्यार्थ— यजमानो वरं हुत्वा ब्रह्म-न्निति पद पञ्चकृत्वो वदेत्। तं सुन्वन्तं सवितृवरुणेन्द्ररुद्र-वाचकैस्त्वं ब्रह्मासीत्यादिभिश्चतुर्भिर्मन्त्रैरितरः प्रतिवदेत्, पञ्च-मामन्त्रणे केवलं त्वं ब्रह्मासीति प्रतिवदेदिति। तदिदं क्रमेण विधत्ते— "स ब्रह्मन्निति। 'प्रथम' पूर्वम्। "प्रथम मिति स्पष्टोऽर्थः ॥

* का० श्रौ० सू० १५ ७ ५, ६।

† राज्ञोऽदण्ड्यभाव —इति क। ‡ स्वापराधा.—इति क।

§ का० श्रौ० सू० १५ ७ ७, ८।

प्रथमप्रतिवचनमन्त्रस्याय मर्थः— हे यजमान! 'त्वं ब्रह्मा असि', 'सत्यप्रसवः' यथार्थाभ्यनुज्ञः 'सविता असि' 'इति' * प्रथमामन्त्रयितारं सुब्रह्मन्ब्रह्मा प्रतिब्रूयात्, सवित्रादिवाचकैः मन्त्रैः प्रतिवचनेन यजमानं तत्तद्देवतात्मकत्वेन ज्ञातवान् भवतीत्यर्थः ॥ ( ८ )

द्वितीयादिषु मन्त्रेषु त्वं ब्रह्मासीति पूर्ववत्। 'सत्यौजाः' सत्यवीर्यः, 'वरुणः' 'असि' †। 'विक्षु' प्रजासु 'ओजः' बलं यस्य, यद्वा विश्व एवौजो यस्येति 'विश्वौजाः' तादृशः 'इन्द्रः' 'असि'। देवतापक्षे मरुतो विशः तदात्मकाः, राजपक्षे प्रजाः ‡। 'सुशेवः' सुसुखः 'रुद्रः' 'असि' §। रुद्रस्य सुशेवत्वं प्रशंसति— "तद्वीर्याणीति। इन्द्रात्मकस्य सर्वसुखकरत्वात् पूर्वमन्त्रप्रतिवचनेन यजमाने स्थापितानि वीर्याणि शमयति; वीर्यवत्त्वम् 'एव' रुद्रोऽसि सुशेव इति प्रतिपादनात् ॥ ( १०, ११, १२ )

यजमानकर्तृकपञ्चमामन्त्रणस्य प्रतिवचने विशेषं दर्शयति— "ब्रह्मन्नित्येवेति ‖। "त्वं ब्रह्मासीति। ब्रह्मन्नित्यामन्त्रणे। 'त्वं ब्रह्मासि' 'इति' एतावदेव 'अनिरुक्तम्'; अन्यत् किंचिदपि देवताविशेषस्वरूपप्रतिपादकं वाक्यं प्रतिवदेत्। तत् प्रशंसति— "अपरिमितमिति। 'निरुक्तम्' निःशेषेण यत्र योग्यं निरुक्तम् 'परिमितम्', तत्पूर्वमन्त्रेषु "सवितासि"–इत्यादिषु ज्ञातम्;

---

* शा० श्रौ० १० २८. २।

†, ‡, § शा० श्रौ० १०. २८. ३, ४, ५।

‖ "आदितैवान्यम्"–इति का० श्रौ० सू० १५. ७. ६। 'त्वं ब्रह्मास्यादित्यादिरिति संख्या, अन्त्य पञ्चमं प्रतिवचनम्, 'आदिना' ब्रह्मासीत्यादेः अत्रैव ब्रह्मणा कार्यम्'–इति तद्वृत्तिविवरणोक्ता।

यद्वानिरुक्तप्रतिवचनेन यजमाने अपरिमितं वीर्यं निहित-वान् भवतीति ॥ १३ ॥

विधत्ते— "अथ सुमङ्गलेति *। सुमङ्गलनामानं माङ्गल्य बहुकारेतिमन्त्रेण † यजमानं कीर्त्तयेत्। पदत्रयं सम्बुध्यन्तम्। बहु करोतीति बहुकारः। "कर्मण्यण्" ‡। श्रेयः करोतीति श्रेयस्कर। "कृञो हेतुताच्छील्यानुलोम्येषु"-इति टः §। भूयो भूयो महत्तरं करोतीति भूयस्करः। "य एव मिति। 'यः' पुरुषो लोके प्रियङ्करनामा 'भवति', स 'मानुष्ये' मानुष्याः 'वाचः' 'कल्याणं' सर्वेषां प्रिय मेव 'वदति' ॥

अत्र कात्यायनः सूत्रस्त्वं सङ्गृह्य दर्शितवान्— "रत्न मन्त्री प्रयच्छामि पुरोहितोऽध्वर्युर्वा इन्द्रस्य वज्र इति, राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातवेद पूर्वः-पूर्व उत्तरस्मै"-इति ‖ ॥ १४ ॥

तदिदं क्रमेण विधत्ते— "अथास्मा इत्यादिना। 'अस्मै' सुन्वते 'स्फ्यं' 'ब्राह्मणः' दद्यात्। हे स्फ्य। 'इन्द्रस्य वज्रोऽसि'। "स्फ्यस्तृतीयं रथस्तृतीयम्"-इतिश्रुतेः ¶। तेन वाद-पेन 'मे' मम 'रध्य'। "रध्यतिर्वशगमने" **। मदीयाय

---

* का० श्री० सू० १५ ७ १०।
† वा० सं० १०, २८ ६।
‡ पा० सू० ३, २, १।
§ पा सू० ३, २ २०।
‖ का० श्री० सू० १५ ७ ११, १२।
¶ तै० सं ५ २ ६ ४।
** द्रष्ट० १० ४ ३। "रध हिंसासंराध्योः"- इति दि० प्र० ८३ धा०।

यजमानाय सर्वं वशीकुरु। यद्वा, 'रथ्या' द्यूतस्थानपरिलेखन-रूपं कार्यं साधयेति * ॥

मन्त्रस्य तात्पर्यं माह— "वर्चो वा इति। अथ मर्थ.— ब्राह्मणो राज्ञे अक्षरूपस्फ्यप्रदानेन स्वस्मादपि राज्ञानं बल-वत्तरं कृतवान् भवति। तदेवाह— "यो वा इति। 'य.' खलु राजन्यो 'ब्राह्मणात्' हीनबलः, 'स.' 'अमित्रेभ्यः' शत्रुभ्यो बलवत्तरः [ न ] भवति; तस्मात् ब्राह्मणः स्फ्यप्रदानेन शत्रुभ्यो-ऽधिकबलं कृतवान् भवतीत्यर्थः ॥

एवं सूत्तरत्रापि योज्यम्। सूतग्रामण्यौसजाता व्याख्याता.† ॥

राजादिषु सजातीयेषु स्फ्यदानं सयूय प्रशंसति— "तद-देव मिति। 'पापवस्यस' पापिष्ठ' यस्मै 'नेदसत्'‡ न भवेत्, किन्तु यथापूर्वं भवेदिति बुद्धा प्रदान मित्यर्थः ॥ १५, १६, १७, १८, १९ ॥

अथ द्यूतस्थानकरणं च सविशेष समन्त्रकं विधत्ते— "अथ सभायामिति। आहवनीयस्योत्तरप्रदेशे स्थापितः स पूर्वाग्निः, तस्मिन् सभास्थलम् अधिदेव्यन्त्यत्रेति 'अधिदेवनम्' द्यूतभूमि., तां अक्षपरस्य पुरोक्ता "सं ममृग पूर्वया विश्वदेवयवा"—इत्यनया ऋचा 'कुरुत.'। अत एव सूत्रम्— "प्रतेन सम्राट. प्रतिप्रस्थाता च पूर्वाग्निसहितां अक्षपुरोक्ता द्यूत-भूमिं कुरुत "—इति §।

चतुर्थकाण्डे द्वितीयेऽध्याये सुक्तामन्थिग्रहयोरस्वाद्यभावेन

---

* वा० सं० १० २८ ७।

† पुरस्तात् (प्र०२ ब्रा०५) ११२—२८१ पृ० द्रष्टव्यम्।

‡ श० म० ५ ३४ २ यत्।

§ का० श्रौ० सू० १५ ७. ११।

स्तुतयोः पुरोऽनुवाक्ये विहितम्; तदर्थस्तु तत्रैव विहित इति नेह पुनर्व्याख्यायते *। युक्तस्याच्छत्वात् तन्मन्त्रेण द्यूतभूमिकरणाद् यजमान मस्तारं कृतवन्तौ भवतः ॥ २० ॥

"अथ मन्थिन इति †। मन्थिग्रहपुरोरुचा "अयं वेन-श्चोदयत् पृश्निगर्भा"-इत्यनया 'विमितं' विमिन्वन्त्येतेति विमितं चतुर्द्वारं चतुरस्रं मण्डपं तद् 'विमिमुतः' कुरुतः। "याचो वा इत्यादेरय मर्थः— मन्थिग्रह याच्यत्वात् तन्मन्त्रेण विमित-करणात् याच्भूताय यजमानाय याच्यं सम्पादितवन्तौ भवत इत्यर्थः ॥ २१ ॥

अथाधिदेवने हिरण्यनिधानपूर्वकं होमं समन्त्रकं विधत्ते— "अथाध्वर्युरिति ‡। यज्ञे देवानां प्रथनात् 'पृथुः', सः 'धर्मणस्पतिः' धर्मस्य धारणस्य पतिः, अतो देवतोद्देशेन ह्रय-मानं हविः 'जुषाणः' सेवमानः 'अग्निः'। 'पृथुर्धर्मणस्पतिः'-इति पुनर्वचन मादरार्थम्, विध्यनुवादाभिप्रायं वा। 'आज्यस्य' इतस्य। कर्मणि षष्ठी। आज्यं 'वेतु' पिबतु। "वी गतिव्याप्तिप्रजन-कान्त्यसनखादनेषु" §। 'स्वाहा'-इति होमार्थः ॥ २२ ॥

तत्र विमिते अक्षनिवापं समन्त्रकं विधत्ते— "अथाक्षा-निति ¶। 'स्वाहाकृताः' स्वाहाकारपूर्विकया आहुत्या तर्पिताः

* "तयोरन्वेवान्ववरः, आयोऽन्यतरः; अस्तैव शुक्रः, आयो मन्थी"-इत्यादि द्रष्टव्यम् (४ का० २ अ० १ ब्रा० १-१०)।

†, ‡ का० श्रौ० सू० १५. ७. १५ क, ख।

§ धातु० प० ३८ धा०।

‖ वा० सं० १०. २८. १।

¶ का० श्रौ० सू० १५. ७ १६।

द्वे अधः । 'सजातानाम्' समानजन्मनां भ्रातॄणां 'मध्यमेष्ठ्याय' मध्यमप्रदेशे यजमानावस्थानाय 'सूर्यस्य रश्मिभि' व्यध्वग' सङ्गता भवतीति * ॥

मन्त्रवत्कर्मकारणं प्रायेण कस्यैचिद् देवतायै भवति, अतो द्यूतभूमौ अक्षनिवापस्य देवतासम्पर्कत्वं दर्शयति— "एष वा अग्निरिति । 'अग्निदैवतं द्यूतस्थानम् । तदेवोपपादयति — "तस्यैत इति । 'तस्य' अग्नेः 'अङ्गाराः' एव देवनसाधनभूता 'अक्षाः', तस्मात् तेनाक्षनिधानेन अग्निं चैव प्रीणितवान् भवतीति ॥

अथ यदुक्तं सूत्रे— 'अक्षान् निवपति स्वाहाकृता इति, गां दीव्यध्व मित्याह'–इति, "गां सभास्थानीय घ्नन्ति"–इति च †। देवनकाले गां चैव पणत्वेन कृत्वा, 'गां दीव्यध्वम्"– इति द्यूतकरणमेव ब्रूयात् । ततोऽस्य पणत्वेनाङ्गीकृतां गां सभ्यीय घ्नन्ति । 'हन्तिश्च आहननमात्रो न मारणार्थः" ‡। तदिदं विधत्ते— 'तस्य ह वा इति । यो राजसूयेन यजते, यो वा एतत् कर्म वेत्ति, तस्य गृहेष्वेषा गौः 'अनुमता' अभीता इत्यर्थः । अत्र माहात्म्यं दर्शयति— "इतीषवेष्विति ॥

द्यूतकर्मणो दक्षिणां विधत्ते— "पूर्वा मिति । पूर्वाग्निम् आहवनीयं वहत इति पूर्वाग्निवाहौ गावनड्वाहौ 'दक्षिणा' § ।

* वा० सं० १० २८ २ ।

† का० श्रौ० सू० १५ ७. १६ १७ २० ।

‡ इति तत्र कर्कः । ताडनमात्रं कुर्वन्ति न तु मारणम् — इति गन्धर्व प्रकाशितत्वाच्चैव ( का० १५ ७. २० ) ।

§ का० श्रौ० सू० १५ ७. २१ ।

आपस्तम्बोऽप्याह— "पष्ठौहीं विदीव्यन्तः ओदन मुद्ब्रुवते, तदेतस्य कर्मणः पूर्वाभिवाहौ दक्षिणा, तौ ब्रह्मणे देयौ" —इति * ॥

यदिदं देवनं सन्निधिबलादभिषेचनीयाख्यसोमयागमध्यगत मपि महाप्रकरणबलात् इष्टिपशुसोमयागात्मकराजसूयाङ्गमेव इति गम्यते, प्रकरणेन सन्निधेर्बाध इति हि सिद्धान्तितम् † ॥ २३ ॥

अथ पञ्चचत्वारिंशत्कपालादिद्रव्यादिकं दर्शयति— "पञ्चदशान्वय इति। प्रधानसौविष्टकृतहविषोर्मध्ये यद् देवतादिकं ज्ञातम्, तत् प्रजापतिमध्यनिधानरूपेण प्रशंसति— "तद् यदन्तरेणेति। "प्राजापत्याइत्यादि, स्पष्टम् ‡ ॥ २४ ॥

"पष्ठौहीं ददातीति, कण्डिका वाजपेये व्याख्याता ॥ २५ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम्. )

वरुणाद्ध वा ऽअभिषिषिचानाद्भर्गो ऽपचक्राम। व्वीर्य्यं वै भर्ग एष विष्णुर्यज्ञः सो ऽस्मादपचक्राम

---

* आप० श्रौ० सू० १८ १८ २, ३।

† "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य मर्थविप्रकर्षात्"—इति मी० जै० सू० ३ ३ १४।

‡ सर्वमिदं तै० सं० १ ८ १६, तै० ब्रा० १ ७ १० द्रष्टव्यम् ॥

यश्वस्य एषो ऽपाद्ॄ रसः सम्भृतो भवति * तेनैन मेतदभिषिञ्चति सो ऽस्य भर्गं निर्दधात ॥ १ ॥

स एताभिर्देवताभिरनुसमसर्पत् । सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा विष्णुनैव दशम्या देवतयान्वविन्दत् ॥ २ ॥

तद्यदेम एताभिर्देवताभिरनुसमसर्पत् । तस्मात् सत्सृपो नामाथ यद्दशमे ऽहन् प्रसुतो भवति तस्माद्दशमेयोऽथो यद्दश-दशैकैकं चमस मनुप्रसृप्ता भवन्ति तस्मादेव दशपेयः ॥ ३ ॥

तदाहुः । दश पितामहान्सोमपान्त्सङ्ख्याय प्रसर्पेत्तथो हास्य सोमपीथ मश्नुते दशपेयो हीति तद्वै ज्या ही वौनिस्यैव पितामहान्त्सोमपान्विन्दन्ति तस्मादेता एव देवताः सङ्ख्याय प्रसर्पेत् ॥ ४ ॥

एताभिर्वै देवताभिर्वरुण † एतस्य सोमपीथ

---

* 'भवति'—इति क, ख ।

† '०र्वरुण । एतस्य'—इति क, ख ।

माश्नुत । * तथो ऽएवैष एताभिरेव देवताभि- रेतस्य सोमपीथ मश्नुते तस्माद्देता एव देवताः सङ्घाय प्रसर्पेद्य यद्वैवैषोद्वसानीयेष्टिः सन्तिष्ठत ऽएतस्याभिषेचनीयस्य † ॥ ५ ॥

अथैतानि हवींऽषि निर्व्वपति । सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशम् सविता वै देवानां प्रसविता सवितृप्रसूत एव तद्दरुणो ऽनुसमसर्पत्तथो ऽएवैष एतत् सवितृप्रसूत एवानु- सम्सर्पति तस्यैकं पुण्डरीकं प्रयच्छति ‡ ॥ ६ ॥

अथ सारस्वतं चरु निर्व्वपति । वाग्वै सरस्वती वाचैव तद्दरुणो ऽनुसमसर्पत्तथो ऽए- वैष एतद्वाचैवानुसम्सर्पति तस्यैकं पुण्डरीकं प्रयच्छति § ॥ ७ ॥

अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्व्वपति । त्वष्टा वै रूपाणा मीष्टे त्वष्टैव तद्रूपैर्व्वरुणो ऽनु-

---

* क-ख-पुस्तकयोरिह हेरो नास्ति ।

† °नीयस्य — इति क ।

‡, § प्रयच्छति — इति क ।

समसर्पंस्तथो ऽएवैष एतत्क्षत्रेण रूपेणानुसंसर्पति तथैव पुण्डरीकं प्रयच्छति * ॥ ८ ॥

अथ पौष्णं चरुं निर्व्वपति । पशवो वै पूषा पशुभिरेव तद्रुस्यो ऽनुसमसर्पंस्तथो ऽएवैष एतत् पशुभिरेवानुसंसर्पति तथैव पुण्डरीकं प्रयच्छति † ॥ ९ ॥

अथैन्द्रमेकादशकपालं पुरोडाशं निर्व्वपति । इन्द्रियं वै वीर्य्यमिन्द्र इन्द्रियेणैव तद्वीर्य्येण रुद्रयो ऽनुसमसर्पंस्तथो ऽएवैष एतदिन्द्रियेणैव वीर्य्येणानुसंसर्पति तथैव पुण्डरीकं प्रयच्छति ‡ ॥ १० ॥

अथ बार्हस्पत्यं चरुं निर्व्वपति । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्रुस्यो ऽनुसमसर्पंस्तथो ऽएवैष एतद् ब्रह्मणैवानुसंसर्पति तथैव पुण्डरीकं प्रयच्छति § ॥ ११ ॥

अथ द्वादशं यवमयं चरुं निर्व्वपति । स येनैवौजसेमाः प्रजा वरुणोऽगृह्णात्तेनैव तदोजसा

* † ‡ § प्रयच्छति – इति क ।

वङ्गो ऽनुसमसर्पत्तेनो ऽएवैष तदोजसानुसृप्-
सर्पति तन्नैकं पुण्डरीकं प्रयच्छति * ॥ १२ ॥

उपसदो द्वादश्यो देवताः। तत्र यच्च
पुण्डरीकाण्युपप्रयच्छति तां हादशपुण्डरीकाण्-
स्रजं प्रतिमुञ्चते सा दीक्षा तया दीक्षया
दीक्षते † ॥ १३ ॥

अथ यद् द्वादश भवन्ति। द्वादश वै मासाः
संवत्सरस्य सर्व्वं वै संवत्सरः सर्व्वेणैवैन मेतद्-
दीक्षयति यानि पुण्डरीकाणि तानि दिवो रूपं
तानि नक्षत्राणाए रूपं ये व्यवधासे ऽन्तरिक्षस्य
रूपं यानि बिसानि तान्यस्यै तदेन मेषु लोके-
ष्वधि दीक्षयति ‡ ॥ १४ ॥

अथ राजानं क्रीत्वा। दैशीपनद्य परिवहन्ति
ततोऽर्द्धे मासन्द्या मासाद्य प्रचरत्यथ य एषो
ऽर्द्दो ब्रह्मणो गृहे निहितो भवति त मासन्द्या

---

* 'प्रयच्छति'—इति क।

† 'दीक्षते'—इति ग, घ।

‡ 'दीक्षयति' इति ग, घ।

मासदातिथ्येन प्रचरति यदातिथ्येन प्रचरत्यथो-
पसद्भिः प्रचरति यदोपसद्भिः प्रचरति * ॥ १५ ॥

अथैतानि हवींषि निर्वपति। आग्नेय-
मष्टाकपालं पुरोडाशꣳ सौम्यं चरुं वैष्णवं
त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्टैवं
यजते ॥ १६ ॥

तदु तथा न कुर्यात्। ह्वलति वा एष
यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य उपसत्-
पथादेति तस्मादुपसत्पथादेव नेयात् ॥ १७ ॥

स यदग्निं यजति। अग्निनैवैतत्तेजसानुसꣳ-
सर्पत्यथ यत् सोमं यजति सोमेनैवैतद्ब्राह्मनानुसꣳ
सर्पत्यथ यद्विष्णुं यजति यज्ञो वै विष्णु-
स्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष मात्मन्नात्मन्
कुरुते ॥ १८ ॥

स एष सप्तदशो ऽग्निष्टोमो भवति। सप्त-
दशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष
माप्नोति तं प्रत्यक्ष मात्मन्नात्मन् कुरुते ॥ १९ ॥

---

* 'प्रचरति'—इति ख, 'प्रचरति'—इति ग।

तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष मात्मन् कुरुते ॥ २० ॥

तासां द्वादश गर्भाः । ताश्चतुर्विꣳशतिश्चतुर्विꣳशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष मात्मन् कुरुते ॥ २१ ॥

ता ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति तस्मात्ता ब्रह्मणे ददाति हिरण्मयीꣳ स्रज मुद्गात्रे रुक्मꣳ होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्या मश्वं प्रस्तोत्रे वशां मैत्रावरुणाय ऽर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्या मन्यतरतोयुक्तं यवाचित मच्छावाकाय गा मग्नीधे ॥ २२ ॥

ता वा ऽएताः * । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा

---

* 'ऽएता,'—इति क, ख।

यदा, "सविता प्रसविता सरस्वत्या वाचा"—इति * संहितोक्त-मन्त्रेण प्रसर्पणं कुर्यादिति ॥

अत्र पितामहगमनेन प्रसर्पणं पूर्वपक्षयति— "तदाहुरिति । तद् दूषयति— "तद् वै ज्येति । 'ज्या' ज्यानिः, निकृष्ट इत्यर्थः । अत्रोपपत्तिमाह— "द्वौ वीनिति । यदि पितामहान् आनीयु', तर्हि 'द्वौ वीन् एव' आनीयुः, न सर्वान्, तस्मात् सवित्रादि-दशदेवताः उद्दिश्य प्रसर्पणं कुर्यादित्यर्थः ॥ ४ ॥

तदिदं मनुष्यप्रसाम्येन प्रशंसति— "एताभिर्वा इति । संसृप्शब्दवाच्यहविर्निर्वापकालं दर्शयति— "अथ यदेवेति । 'अभिषेचनीयस्य' एतदाख्यस्य सोमयागस्य 'उदवसानीयेष्टिः' 'यदा' 'सन्तिष्ठते' समाप्यते— ॥ ५ ॥

"अथैतानीति । 'अथ' तदनन्तरम् 'एतानि हवींषि' निर्वपेदि-त्यर्थः । तथाचाह कात्यायनेन सूत्रितम्.— "सावित्र सारस्वत त्वाष्ट्र पौष्णेन्द्र बार्हस्पत्य वारुणाग्नेय सौम्य वैष्णवानि यथोक्तं प्रतीचि पुण्डरीकाणि प्रयच्छति, हिरण्मयानि सौवर्णानि तिसृषु पञ्च तैषां स्रजं प्रतिमुञ्चते तद्दीक्षो भवति"—इति † । अस्या आहवा-गारात् सोमं माहल्यामन्त्राभिमर्शनादि करोत्युपसदेवता हवींषि निर्वपत्युपसद इ इत्यभिमिति । अत्रायं दशपेयप्रकारः । हविषां मध्ये सप्त हवींषि पूर्वं लिखितक्रमेण कृत्वा, सप्त हिरण्मय पुण्डरीकाणि दत्त्वा, उत्तरासु तिसृषु पञ्च दत्त्वा, द्वादश पुण्डरीकस्रक्प्रतिमोकदक्षिणा दशपेयदीक्षा कृत्वा, तस्या सप्तप्रयागसम्भिन्या सप्तमदिने क्रियमाणाया मारम्भः सिद्धा

* वा॰ सं॰ १० । ३० । १ ।
† का॰ श्रौ॰ सू॰ १५ । ८ । ३–५ ।

यतीनायां पूर्वं मेवाभिषेचनीयदशपेययोरपि द्विधा सोमं क्रीत्वा, दशपेयार्थम् तद्धामारे स्थापितं सोम माहृत्य, आसन्दीमिमर्षं-नाद्यातिष्याभ्यां कृत्वा, संसृप्तां हविषां मध्ये पश्चानि पाग्नेय-सौम्य वैष्णवानि श्रीणि हवींषि उपसत्तिनिमित्तेन कर्त्तव्यानि। उपसदा मध्यग्निसोमविष्णुदेवता अग्निमत्त्वात्, तत्राप्यग्नि-सोमयोरेकस्थाप्यभावे दशसङ्गपूरणाभावात् तयोरपि दशमत्व मुच्यते। 'तत्र' तिसृषु देवतासु तद्देवत्यहविःषु 'पञ्च पुण्डरीकाणि' देयानि भवन्ति * ॥

अथ द्वादशपेयस्य दीक्षां विधत्ते— "तां द्वादशेति। दशानि सम, अग्निमहविषये दासमानानि पश्चेति द्वादश पुण्डरीकाणि भवन्ति। प्रकृतौ "अप्सु दाक्षयो स्याति"–इत्यादिना यद् दीक्षामात्रं विहितम्, तदनापवदितुं दशदाक्षमानपुण्डरीक-स्रक्प्रतिमोको विहितः। एतत्तु पूर्वं मुदाहृतम्। आपस्तम्बेन तु विशेष उक्तः— "अपो दीक्षायाः स्थाने द्वादशपुण्डरीका स्रज प्रतिमुञ्चते"–इति †। प्रतिमोचयेदित्यर्थः ॥ ६—१३ ॥

पुण्डरीकगतां सङ्ख्यां सभ्रूय मासात्मकसंवत्सरात्मना प्रशं-सति— "अथ यद् द्वादशेति ‡। अतस्तावत्सङ्ख्याविशिष्टपुण्ड-रीकाकरणेन सर्वात्मसंवत्सरेण यजमानं दीक्षायुक्तं कृतवान् भवति। प्रकारान्तरेण प्रशंसति— "अथेति। पदमतपत्र-मालविकाना स्वर्गान्तरिक्षभूम्यात्मलोकत्रयात्मकत्वात् तत्प्रति-मोचनलक्षणदीक्षाकरणेन 'एनं' यजमानम् 'एषु' त्रिषु 'लोकेषु' दीक्षितवान् भवतीत्यर्थः ॥ १४ ॥

---

* 'भवन्तीत्येतत्'—इति च, छ।

† आप॰ श्रौ॰ सू॰ १८ १॰ १४। ‡ का॰ श्रौ॰ सू॰ १५, ५ ११।

"अथ राजानं क्रीत्वेत्यादेरयमर्थः— पूर्वं मभिषेचनीय-दीक्षान्ते 'राजानं क्रीत्वा' *, 'देवोपसद्', तथैकं दशपेयार्थं पर्युह्य ब्रह्मागारे स्थापयित्वा, एकेनाभिषेचनीये प्रचारः कृतः; अथ, दशपेये ब्रह्मसदने स्थापितं तं सोम माहृत्य, 'आसन्द्यां सादय', आतिथ्यया प्रचरेयुः; तदनन्तर मुपसद्यागः। तत्राग्निसोम-विष्णुदेवताकोपसत्प्रतिनिधित्वेन संतप्यागसम्बन्धिना सुप्तमानां मयाणां माग्नेयसौम्यवैष्णवाना मेव निर्वापं पूर्वपक्षयति— "यद्योपसद्भिः प्रचरन्तीति ॥ १५ ॥

"अथैतानि हवींषि निर्वपत्याग्नेयमिति। "तेन यथेष्ट्वेति। एकैकोपसत्स्थाने 'तेन्' एकेन हविषा 'यथेष्ट्वा' इष्टिमेव कुर्यात्। उपसच्चयार्थं मेतत्रितयं कर्तव्य मिति माध्यन्दिनीयः पक्षः † ॥ १६ ॥

त मिमं निराकरोति— "तदु तथेति। 'तत्' तथा 'न कुर्यात्'। 'एषः प्रत्ति वै' प्रच्युतो भवेत्। एतच्छब्दार्थ माह— "यो यज्ञपथादेतीति। 'एति' अपगच्छति। तदेव पुनर्दर्शयति— "एति वा एष इति। तस्मात् 'उपसत्पथात्' 'नेयात्' न प्रच्युतो भवेत्, अत उपसदो न पृथक् कुर्यात्। तदन्ते एतानि संतपा मक्षिमाणि हवींषि त्रीणि चेष्टित्वैव पृथक् कुर्यात्। अतएव सूत्रकार उपसद्यागान्ते एतेषां निर्वापं विक-ल्पेन दर्शयामास— "उपसदन्त इष्ट्वा"–इति ‡ ॥ १७ ॥

---

* 'दशभिर्वत्सतरैः सारूपैः सोमं क्रीणाति, * पयते न परिसह्रति, अप मेवापाकरोति'–इति आप० श्रौ० सू० १८ २० १५, १६, १७।

† 'एका दीक्षा, तिस्र उपसदः'–इति आप० श्रौ० सू० १८ २०. १८।

‡ का० श्रौ० सू० १५ ८ १५।

तदुपसंहृतदेवताद्वयिका आग्नेयसौम्यवैष्णवाना सम्पूर्णा हविषा अग्निरपि तदेतदक्षपर्यन्तमासिचि मागाद्य निरस्यति— "स यदग्नि-मिति। उपसद्यायैरेव अग्निषोमविष्णव इष्टा, तदानीमेव वै समर्धश्च आत्ममिति ॥ १८ ॥

दशपेयस्य सोमसंस्थारूप विधत्ते— "स एष सप्तदश इति। 'स एष' दशपेय क्रतु सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थो भवतीत्यर्थ। "सप्तदश स्तोत्र भवति"-इति० हि तैत्ति-रीयकम् ॥ १९ ॥

गर्भिणीना गवां दान विधत्ते— "तस्य द्वादशेति१। ता द्वादशसङ्ख्याका गा ब्रह्मणे दद्यादित्यनुसरेण (२२ क०) सम्बन्ध। सङ्ख्या सम्भूय संवत्सरात्मना स्तौति— "द्वादश वै मासा इति ॥ २० ॥

प्रकारान्तरेणापि प्रशंसति— "मासा द्वादश गर्भा इति। ता गावो द्वादश तासा गर्भा अपि द्वादश, मिलित्वा चतुर्विंशति, संवत्सरस्यापि चतुर्विंशतिरर्धमासा, तस्मात् संवत्सरात्मत्वेन ता वत्सगर्भा गाव प्रशस्ता इत्यर्थ ॥ २१ ॥

द्वाभ्यां प्रत्येकं प्राकाशप्रदानं विधत्ते— "हिरण्मयाविति। प्राकाशौ दीपप्रकाशाविल्येके, सुवर्णदर्पणावित्यपरे *। अश्वदानं विधत्ते— "अश्व प्रष्ठोप इति। वन्ध्याया गोर्दानं विधत्ते— "वशा मिति †। रेतःसेचनसमर्थस्य गोर्दानं विधत्ते— "ऋषभ मिति। द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते— "वाससी इति। एकेनानडुहा युक्तस्य यवपूर्णस्य शकटस्य दानं विधत्ते— "अन्य तरत इति। अनडुहो दानं विधत्ते—"आ अग्नीध इति। "अन ड्वाह मग्नीधे"-इति हि सूत्रितम् ‡। 'अनड्वाह मग्नीधे दक्षिणा अनड्वान्"-इति हि तैत्तिरीयकम् § ॥ २२ ॥

ता एता दक्षिणा सम्भूय संवत्सरात्मना प्रशंसति— "ता वा एता द्वादशेति। प्रष्ठोहादयोऽनडुदन्ता द्वादश दक्षिणा, वत्स गर्भिणीनां गवां दक्षिणात्वात् वत्सगर्भिणीना अपि दक्षिणात्वेन परिगणने त्रयोदश भवन्ति, संवत्सरस्यापि द्वादश चैत्रादय, अधिकमासेन सह त्रयोदश मासा भवन्ति। तस्मादेताभिर्दक्षिणाभि र्यजमान संवत्सर मेवाप्नवान् भवतीत्यर्थ ॥ २३ ॥ २ [४ ५] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥

---

* 'दर्पणैरकाशित्वपरे'—इति का० श्रौ० १५ ८. २५ सू० इ० ।

† का० श्रौ० सू० १५ ८ २८ सू। 'वशा वन्ध्या या उपगम्य मात्रापि गर्भं न गृह्णाति'—इति व० ।

‡ का० पैवरसंहितसूत्रपुस्तके तु 'आ अग्नीधे'—इत्येव पाठो विद्यते। का० श्रौ० सू० १२ ८ २७ प।  § तै० ब्रा० १ ८ १ ४।

|| 'सर्वा दीपयन्ति, सर्व घोषं कीर्तयन्ति पुण्डरीकस्य प्रय

( अथ पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् . )

---

आग्नेयो ऽष्टाकपालः पुरोडाशो भवति । तं पूर्व्वार्द्ध ऽआसादयत्यैन्द्र एकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्द्ध ऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्द्ध ऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्द्ध ऽआसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य ऽआसादयत्येष चरुः पञ्चबिलस्तद्यत् पञ्च हवींषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम ॥ १ ॥

तद्यदेतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति यदृतून् यत्स्तोमान्यच्छन्दांसि तस्मादेवैनमेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत् प्र वा पतेत् तस्माद्वा ऽएतेन राजसूययाजी यजते ॥ २ ॥

स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यदेवैनं प्राचीं दिशए समारोहयति

यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति सꣳस्रवं वार्हस्पत्ये चरावव-नयति * ॥ ३ ॥

अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रच-रति। सौम्येन वा चरुणा यद्देवैनं दक्षिणां दिशꣳ समारोहयति यद्दतून्यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति सꣳस्रवं वार्ह-स्पत्ये चरावव‍नयति † ॥ ४ ॥

अथ यद्वैश्वदेवेन चरुणा प्रचरति। यद्दे-वैनं प्रतीचीं दिशꣳ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति सꣳस्रवं वार्हस्पत्ये चराववनयति ‡ ॥ ५ ॥

अथ यन्मैत्रावरुण्या पयस्यया प्रचरति। यद्दे-वैन मुदीचीं दिशꣳ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्री-णाति सꣳस्रवं वार्हस्पत्ये चराववनयति तद्यत् सꣳस्रवान् वार्हस्पत्ये चराववनयति सर्व्वत एवा-

---

*, †, ‡ '०ववनयति'—इति क। •

स्मिन्नेतद्न्नाद्यं दधाति तस्माद् दिशो दिश एव राज्ञे ऽन्नाद्य मभिह्रियते * ॥ ६ ॥

अथ यद् बार्हस्पत्येन चरुणा प्रचरति। 'यद्देवैव मूर्द्धा दिवए समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाएंसि तथाद्देवैन मेतेन निष्क्रीणाति ॥ ७ ॥

स य एष आग्नेयो ऽष्टाकपालः पुरोडाशो भवति। तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तद्दनीषि ददात्यग्निर्वा ऽएष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति † ॥ ८ ॥

अथ य एष ऐन्द्र ‡ एकादशकपालः पुरोडाशो भवति। तस्य ऽर्षभो दक्षिणा स ह्यैन्द्रो यदृषभो यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुस्तं ब्रह्मणे ददाति

---

* '०ह्रियते'—इति क।

† 'ददाति'—इति ख।

‡ 'ऐन्द्र.। एका०'—इति क, ख।

ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति * ॥ ९ ॥

अथ य एष त्वैश्वदेवग्रहो भवति। तस्य पृषन् गौर्दक्षिणा भूमा वा एतद्रूपाणां यत् पृषतो गौर्विशो वै विश्वे देवा भूमा वै विट् तस्मात् पृषन् गौर्दक्षिणा तं होत्रे ददाति होता हि भूमा तस्मात्तं होत्र ददाति † ॥ १० ॥

अथ यैषा मैत्रावरुणी पयस्या भवति। तस्यै वशा दक्षिणा सा हि मैत्रावरुणी यदशा यदि वशा न विन्देदपि यैव का चाप्रवीता स्यात् सर्व्वां ह्येव वशाप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वा ऽअध्वर्यू प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति ‡ ॥ ११ ॥

अथ य एष बार्हस्पत्यग्रहो भवति। तस्य शितिपृष्ठो गौर्दक्षिणा वा ऽउर्द्ध्वा बृहस्पतेर्दिक् तदेष उपरिष्टादर्य्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै

* † ‡ ददाति—दद्ति च।

देवानां ब्रह्मैष वा ऽएतस्य ब्रह्मा भवति तस्मात्त ब्रह्मणे ददाति स हैतेनापि विश्वावाच्यन्नाद-कामो यजेत तदस्मिन्त्सर्व्वतो ऽन्नाद्यं दधाति* स ह्यन्नाद एव भवति ॥ १२ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [५. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ पञ्चमाध्याये पञ्चबिलसञ्ज्ञकचरु †, द्वादश प्रयुजा हवींषि, पशुद्वयम्, केशवपनीयातिरात्र , सौत्रामणीप्रयोग , राजसूयसमाप्त्युदवसानीयेष्टिश्च विधीयते ।

अत्र कात्यायनः — "उत्तरे यज्ञे पञ्चबिल आग्नेय ऐन्द्र सौम्यो वा वैश्वदेवश्च पयस्या मैत्रावरुणी बार्हस्पत्यश्चरु प्रतिदिशं सादनं आग्नेयं पुरस्तात् प्रदक्षिणं मितराणि मध्येऽन्त्यम्"—इति ‡। आग्नेयादीनि पञ्च हवींषि पूर्वादि क्रमेण मध्ये च स्थापयेत् । सोऽयं पञ्चबिलसञ्ज्ञकश्चरुरित्यर्थः ॥

---

* ददाति—इति ख ।

† एषैव दिशा अवेष्टिरुच्यते । तथाहि तै० ब्रा० १ ८ ३— 'दिशा अवेष्टयो भवन्ति'—इत्यादि द्रष्टव्यम् ।

‡ का० श्रौ० सू० १५ ९ १ २ ३ । आगतमिति वैश्वावसुश्च —इति सर्वासु दिक्षु त्रिभ्यैकैकस्यासादनं भवति—इति च तत्र वृ० ।

तदिदं विधत्ते— "आग्नेय मिति। वेदिमध्ये 'पूर्वार्द्धे' पूर्वभागे आसादयेत्। एव मुत्तरत्र 'दक्षिणार्द्धे' इति योज्यम्। 'पयस्या' आमिक्षा ॥

हविःपञ्चकस्य पञ्चबिलसञ्ज्ञां निर्वक्ति— "तद्यदिति। एतेषां हविषां सादनार्थानि एकस्यां पात्र्यां प्रागादिक्रमेण यतः पञ्च बिलानि, तस्मादेषां पञ्चानां चरूणां पञ्चबिलश्चरुरिति सञ्ज्ञा ॥ १ ॥

एतेषां हविषां कार्ये प्रयोजन माह— "अथ यदेतेनेति। 'एतेन' हविःपञ्चकेन राजसूययाजिना यष्टव्यम्। कुतः? यतः पूर्वम् 'एनं' यजमानं प्राचीमारोहेत्यादिभिर्मन्त्रैः प्राच्याद्याः पञ्च दिशः, वसन्तादीनृतून्, त्रिवृदादींस्तोमान्, गायत्र्यादीनि छन्दांसि चाध्वर्युरारोहितवान्, 'तस्माद्' 'एतेन' हविःपञ्चकेन 'एनं' यजमानं दिगादिभ्यः सकाशात् पुनः 'निष्क्रीणाति' स्वाधीनं कृतवान् भवति।

अकरणे प्रत्यवाय माह— "स यदेति। यदि न यजेत तर्हि यजमानः 'उन्माद्येत्' उन्मत्तो भवेत्, 'प्रपतेत्' प्रच्युतो भवेत्। 'वा'-शब्दद्वय मन्योन्यविकल्पार्थम् ॥ २ ॥

हविषां क्रमेण निष्क्रयणसाधनत्वं विवृणोति— "स यदाग्नेये-नेत्यादि॥ प्रत्येकहविःप्रचारादनन्तरम् बार्हस्पत्ये चरौ संस्रवानयनं विधत्ते— "संस्रव मिति। सूत्रञ्च भवति— "पूर्वैः-पूर्वैः चरित्वा-चरित्वा मध्यमे संस्रवासेचनम्"-इति *। 'मध्ये' मध्यम प्रदेशे स्थापिते बार्हस्पत्ये चरावित्यर्थः ॥ ३ ॥ ॥ ४, ५ ॥

* का० श्रौ० सू० १५ ८. ३।

“अथ यन्मैत्राबार्हस्पत्येति । चतुर्णां हविषां संस्रवस्य बार्हस्पत्ये चरौ अवनयनं सप्तम्यावाधसम्पादनरूपेण प्रशंसति—“तद् यत् संस्रवानिति । यतो ‘बार्हस्पत्ये चरौ’ सर्वेषां हविषां हुतशिष्टस्रावनयनम्, ‘तस्मात्’ ‘राज्ञे’ ‘दिशो दिशः’ सर्वस्या अपि दिशः सकाशात् ‘बलाद्यम्’ ‘अभिह्रियते’ आनीयत इत्यर्थः ॥ ६ ॥

“अथ यद् बार्हस्पत्येनेत्यादि । पूर्ववत् । अत्र संस्रवानयनाभावो विशेषः ॥ ७ ॥

आग्नेयादिहविष्य ऋत्विग्विशेषेभ्यो हिरण्यादि-दक्षिणादानं विधत्ते—“स य एष इति । आग्नेयहविषः, तद्दक्षिणात्वेन विहितस्य हिरण्यस्य च अग्निसम्बन्धित्वं समानो धर्मः । हिरण्यस्याग्निरेतस्त्वं श्रूयते—“अग्ने रेतः परापतत्, तद्धिरण्यमिति*। अग्नेरेवाग्नीत्त्वं प्रथमकाण्डे स्तम्बयजुर्हरणब्राह्मणे अस्य आम्नातम्† । ‘निदानेन’ कारणेन, निरूपणे सतीत्यर्थः । हविष आग्नेयत्वात्, हिरण्यस्याग्निरेतस्त्वात्, अग्नेरेवाग्नीत्त्वात्, आग्नीध्रसम्प्रदानकत्वं हिरण्यस्य युक्तमित्यर्थः ‡ ॥ एवमुत्तरत्रापि यथायोग्यं साम्यं द्रष्टव्यम् ॥ ८ ॥

“अथ य एष ऐन्द्र इति §। “तस्यर्षभ इत्यादि । ऋषभ-

---

* तै० ब्रा० १ १ ३ ८ ।

† “स योऽस्मादग्नीदुन्नतः प्रत्यैति, अग्निरेवैष निदानेन”—इति १ २. १३ (१भा० पृ०१३६) द्रष्टव्यम् ।

‡ का० श्रौ० सू० १५ ६. १ ।

§ का० श्रौ० सू० १५ ६ ६ । ‘[illegible]’—इति इ० ।

ऽपि एतेन हवि पञ्चकेन यजनं कुर्यात्। तत् प्रशंसति— "तदग्निश्चिदिति ∗ ॥ १२ ॥ ३ [ ५. १ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

---

( अथ द्वितीय ब्राह्मणम् )

स वै प्रयुजाए हविर्भिर्यजते। तद्यत् प्रयुजाए हविर्भिर्यजत ऽऋतून् वा ऽएतत् सुषुवाणो युङ्क्ते त ऽएनमृतवो युक्ता वहन्त्यृतून् वा प्रयुक्ताननुचरति तस्मात् प्रयुजाए हविर्भिर्यजते ॥ १ ॥

तानि वै द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासि मासि यजेतेत्याहुः को वेद मनुष्यस्य तस्माद्ध मासि मासि यजेत शम्यापराव्याधे शम्यापराव्याध ऽएव षड्भिर्यजते प्राङ् यानथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याध ऽएव षड्भिर्यजते ॥ २ ॥

---

∗ एष पञ्चबिल तै० स० १ ८ १८, तै० ब्रा० १ ८ ३ द्रष्टव्य ।

तदु तथा न कुर्यात्। षडेवैतानि पूर्वाणि हवींषि निर्वपति समानवर्हींषि तासां देवतानां रूपं यथा शिशिरे युक्त्वा प्राञ्च आप्रावृषं यायुस्तत् षडृतून्युङ्क्ते त एनं षडृतवो युक्ताः प्राञ्च आप्रावृषं वहन्ति षडृतून् प्रयुक्तानाप्रावृष मनुचरति पूर्वाग्निवाहौ दक्षिणा ॥ ३ ॥

षडेवोत्तराणि हवींषि निर्वपति। समानवर्हींषि तासां देवतानां रूपं यथा पुनरावर्त्तेरन्वार्षिक मभि तत् षडृतून्युङ्क्ते त एनं षडृतवो युक्ता वार्षिक मभि वहन्ति षडृतून् प्रयुक्तान्वार्षिक मनुचरति पूर्वाग्निवाहौ दौ दक्षिणा तद्यत् पूर्वाग्निवाहो दक्षिणर्तूनां एतत् सुयुजौ युक्तो वहन्ति वा अनड्वाहस्तस्मात् पूर्वाग्निवाहौ दक्षिणा ॥ ४ ॥

तद्ध स्मैतत् पुरा कुरुपञ्चाला आहुः। ऋतवो वा अस्मान् युक्ता वहन्त्यृतून्वा प्रयुक्ताननुचराम इति यदेषां राजानो राजसूययाजिन आसुस्तद्ध स्म तदभ्याहुः ॥ ५ ॥

आग्नेयो ऽष्टाकपालः पुरोडाशो भवति। सौम्यश्चरुः सावित्रो द्वादशकपालो ऽष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडाशो वैश्वानरो द्वादशकपाल एतानि षट् पूर्व्वाणि हवींषि भवन्ति ॥ ६ ॥

षडेवोत्तरे चरवः। सारस्वतश्चरुः पौष्णश्चरु-र्मैत्रश्चरुः क्षैत्रपत्यश्चरुर्व्वारुणश्चरुरादित्यश्चरुरेत ऽउ षडुत्तरे चरवः* ॥ ७ ॥

अथ शैनीं विचित्रगर्भां मन्दित्या ऽआलभते। तस्मा एषैवावृद्धाष्टापद्यै व्वशाया ऽइयं वा ऽअ-दितिरस्या एवैन मेतद् गर्भं करोति तस्मा एता-दृश्येव श्येनी व्विचित्रगर्भा दक्षिणा † ॥ ८ ॥

अथ पृषतीं व्विचित्रगर्भां मरुद्भ्य आलभते। तस्मा एषैवावृद्धिशो वै मरुतो व्विशा मेवैन मेतद् गर्भं करोति तस्मा एतादृश्येव पृषती व्विचित्र-गर्भा दक्षिणा ॥ ९ ॥

---

* 'चरव'—इति क।

† दक्षिणा—इति ख, ग।

एतौ पशुबन्धौ *। तदेताविव सन्तावन्यथैवालभन्ते या मदित्या ऽआलभन्त ऽआदित्येभ्यस्ता आलभन्ते सर्व्वं वा ऽआदित्याः सर्व्वस्यैवैन मेतद् गर्भं करोति यां मल्हा आलभन्ते विश्वेभ्यस्तां देवेभ्य आलभन्ते सर्व्वं वै विश्वे देवाः सर्व्वस्यै-वैन मेतद् गर्भं करोति ॥ १० ॥ ४ ॥

॥ इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् [५. २.] ॥

द्वितीयं प्रयुजां हवींषि विधीयन्ते। कात्यायनः— "द्वादशोत्तराणि प्रयुग्घवींषि मासान्तराण्याहवनीयाद्वा पुरस्तात्कृत्याप्रावृत्त्याप्यासाम् आग्नेय सौम्य सावित्र बार्हस्पत्य त्वाष्ट्र वैश्वानरा यथोक्त मेव मेव प्रत्याहृत्य चरव. सारस्वत पौष्ण मैत्र क्षेत्रपत्य-वारुणादित्याः षट् षट्कैकतन्त्रे पूर्वाग्निवाहौ द्वौ द्वौ पश्चात् दक्षिणा"–इति †। अयमर्थः — द्वादशाग्नेयादीनि प्रयुजां हवींषि आहवनीयात् पूर्वदेशे एकैकमध्वाध्यायदेशे एकैकस्मिन् मासि एकैकं हविरिति क्रमेण षट् यष्टव्यानि, तथा प्रत्याहृत्य तेष्वेव स्थानेषु क्रमेण षट् यष्टव्यानि। यद्वा, षट्कं षट्क मेकीकृत्य एकतन्त्रेण कुर्यात्। तेषां पूर्वाग्निवाहौ द्वौ द्वौ अनडुहौ दक्षिणेति ॥

* 'पशुबन्धौ'—इति ग।

† का० श्रौ० सू० १५ ८ ११–१५।

तदिदं विधत्ते— "स वै प्रयुजा मिति। विविध प्रशसति— "ऋतून् वा इति। एष 'सुषुवाण' यष्टा 'ऋतून्' मासानेव 'प्रयुङ्क्ते' कर्मणे योजयति। 'ऋतव' अपि 'एन' 'युक्ता' सन्तो 'वहन्ति प्रापयन्तीष्टं फलम्। इदानीं मनुष्यानपि प्रयुञ्जान् 'ऋतून्' 'अनु' अयं चरति अनुसरति, तस्मात् [ ऋतव ] जनित फल प्राप्नुकाम । तस्मात् प्रयुजा हविर्याग कर्त्तव्य । तथाच तैत्तिरीयके— 'मासि मासि एतानि हवींषि निरूप्याणीत्याहु, तेनैवर्तून् प्रयुङ्क्त इति"—इति * ॥ १ ॥

तेषां सङ्ख्या विधत्ते— "मासि वै द्वादशेति। तेषां प्रति मास यजन पूर्वपक्षत्वेनोपन्यस्यति— "मासि मासीति। त पक्ष निराकरोति— 'को वेदेति। मनुष्यस्यायु परिमाणस्या वगन्तु मशक्यत्वात् मासि मासि यजनं न कर्त्तव्य मित्यर्थ ॥

इदि षट्कस्यैकीकृत्य यागकरणेऽपि कश्चित् विशेष पूर्व पक्षत्वेनोपन्यस्यति— "शम्यापराव्याध इति। शम्यापरास्ता विध्यति निपतति यत्रेति स शम्यापराव्याधो देश । तत्र देशे पूर्वे 'षडभि' 'प्राङ' प्राप्नुवो 'यान्' गच्छन् यजेत। प्राङ्गमनीयात् पूर्वदेशे एकैकशम्यापाते षट् कर्त्तव्यानीत्यर्थ । "अथ पुन रिति। पुनरावृत्तेन एकैकशम्यापातप्रदेशे षडपि षट् कर्त्तव्यानीति ॥ २ ॥

तम् पक्ष निराकृत्य पक्षान्तर विधत्ते— "तदु तथेति। 'पूर्वाणि षट् हवींषि' समानबर्हींषि', बर्हिःशब्दः स्तोप लक्षक , एकतन्त्राणि कर्त्तव्यानीत्यर्थ । पूर्वहवि षट्कदेवता प्रशसति— तासां देवताना मिति। 'तासा' पूर्वहवि षट्कास्य

* तै० ब्रा० १ ८ ३ ३ ।

देवतानाम् अग्निषोमादीनां पक्षां रूप मेतत्। 'यथा' 'शिशिरे' ऋतौ 'युक्ता' युक्ताश्वाः राजानः 'प्राञ्चः' सन्तः 'आप्रावृषं' प्रावृट्कालपर्यन्तं 'यायुः' गच्छेयुः। तदिदं प्राङ्मुखं यानं पूर्वपूर्वमस्यायामेषु षट्स्थाना मग्न्यादिदेवतानां सम्बन्धि रूप मित्यर्थः। ऋतूनां पूर्वापि षट्त्वेऽपि प्रस्तुत्य तैत्तिरीयके शिशिरा-दिषु षट्सु मासेषु राजभेदेन प्राङ्मुखा यात्रा प्रतिमासं व्यापार-भेदश्च स्पष्ट माम्नातः— "आग्नेय मष्टाकपालं निर्वपति, तस्मा-च्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति। सौम्यं चरुं, तस्माद् वसन्ते व्यवसायादयन्ति। सावित्रं द्वादशकपालं, तस्मात् पुर-स्तात् यवानां सविता विकृन्तते। बार्हस्पत्यं चरुं, सवित्रैव विकृष्य ब्राह्मणा यवानादधते। त्वाष्ट्र मष्टाकपालं रूपा-ण्येव तेन कुर्वते। वैश्वानरं द्वादशकपालं, तस्मात्त्रयन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति"–इति *। तदनेन पूर्वहविः-षट्केन षड्ऋतुमासानेव युङ्क्ते। 'ऋतु'-शब्दो मासपरः; "मास-न्तिकावृतू"–इतिव्यवहारात् †। यद्वा, "पक्षा वै मासाः" –इति पक्षाणां मासत्वव्यवहारात् पक्षद्वयात्मक ऋतुरित्यर्थः॥

पूर्वषट्कस्य दक्षिणा विधत्ते— "पूर्वाग्नीति। पूर्वाग्नि मादधनीयं वहतीति पूर्वाग्निवाहोऽनड्वान्। तेषां मध्ये द्वौ दक्षिणात्वेन देयावित्यर्थः॥ २॥

उत्तरहविःषट्कस्यापि समानतन्त्रत्वं दर्शयति— "षडु-त्तराणीति। तानि प्रशंसति— "षड्वा देवताना मिति। 'वार्षिकं मासं' वर्षर्तुसम्बन्धिनं प्रथमं मासम् अभिलक्ष्य पुन-

* तै० ब्रा० १.८.४.१,२।

† "मधुश्च माधवश्च वासन्तिकावृतू"–इति वा० सं० १३.२५.२।

प्रावर्त्तेरन्। शिशिरे दिग्विजयाय प्राञ्चः प्रयाताः कुरुपञ्चालाः दग्धे निदाघर्त्तुद्वितीयमासे परकीयं राष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखा निवर्त्तन्ते। तत् 'एतत्' सरस्वत्यादिदेवतानां प्रतिनिहत्या षडृतूनां रूप मित्यर्थः। "तत् षडृतूनिति। 'तत्' तेन उत्तरहविःषट्कयागेन माघादीन् षण्मासान् योजितवान् भवति। तेषा मनडुद्द्वयं दक्षिणां विधत्ते— "पूर्वाग्नीति। पूर्वाग्निवाहा दक्षिणात्वम्। सम्भूय प्रशंसति— "तद् यत् पूर्वाग्नीति ॥ ४ ॥

एतं द्वादशयुग्महविःकल्पेन क्रतुप्रयोगं कुरुपञ्चालवृत्तान्त-मुखेन स्तौति— "तद् एतदिति। पूर्वे 'कुरुपञ्चालाः' 'आहुः' वदन्ति, विचारयन्ति,— 'अस्मान् ऋतवो युक्ताः' सन्तो 'वहन्ति', 'युक्तान् ऋतून्' 'अनु'-लक्ष्य 'चराम.' अनुसराम इति। आर्धमासानाम् 'एषां' राज्ञां मध्ये ये 'राजानः राजसूय-याजिनः आसु', ते युग्महविःकल्पस्य क्रतुप्रयोगस्य मिति मन्तु-रिति तस्यार्थः ॥ ५ ॥

तानि द्वादश हवींषि उद्दिशति— "आग्नेयोऽष्टाकपाल इति। तत्र पूर्वाणि षड्हवींषि पुरोडाशात्मकानि, उत्तराणि तु चर्वात्मकान्येवेत्यर्थः * ॥ ६, ७ ॥

अथ पशुद्वयं विधीयते। तत्र कात्यायनः— "पष्टापदी-वत्याश्चन्यौ गर्भिण्यौ स्तुगुदक्षिणौ, श्वैत्यादित्यैभ्योऽदित्यै वा, ऐन्द्रदेवौ पृषतौ मारुतौ वा"—इति †। श्वेता गर्भिणी

* तै० सं १. ८. १९. ('साम्बद्धवानां हवींषि'), तै० ब्रा० १. ८. ३ द्रष्टव्यम्।

† का० श्रौ० सू० १२. ६. १७, १८।

मादित्येभ्योऽदित्यै वा आलभेत, पृषतीं गर्भिणीं विश्वदेवेभ्यो मरुद्भ्यो वेति तदर्थं *।

तत्र स्वमतानुसारेणादितिदेवत्य पशुबन्ध विधत्ते— 'अथ श्येनी मिति। 'श्येनीं' श्येतवर्णां 'विचित्रगर्भां' अज्ञातगर्भाम् 'अदित्यै' आलभेत। प्रयोग मतिदिशति— "तस्या एषेति। 'आवृत्' क्रिया 'या' 'अष्टापद्यै' वशायै गर्भिण्या वशाया अनुबन्ध्यायाः प्रयोगक्रम, स एवास्या इत्यर्थः। तत्प्रयोगस्तु चतुर्थकाण्डे पञ्चमेऽध्याये द्वितीये ब्राह्मणे— "वशांवा मत्वा गर्भं नेष्टवे ब्रूयात्'-इत्यादिना स्पष्ट मीरित †। एतद्देवता प्रशंसति— "इय वा इति। 'अदिति' नाम 'इयं' पृथिवी, तस्मादादितिदेवत्यगर्भिण्यालम्भेन 'एनं' यजमानं भूमेरेव गर्भत्वेन क्षतवान् भवति॥

एतस्य कर्मणो दक्षिणा विधत्ते— "तस्या एताद्दग्वेति। 'एताद्दशी' एतद्वर्णा अज्ञातगर्भा 'दक्षिणा'॥ ८॥

पशुबन्धान्तर विधत्ते— 'अथ पृषती मिति। 'पृषती' बिन्दुयुता, 'विचित्रगर्भां' विचित्रवर्णां गर्भिणीम् 'मरुद्भ्य' देवेभ्य आलभेत। तस्यापि प्रयोगप्रकार पूर्ववदतिदिशति। "तस्या एषेति। मरुतां विट्त्वात् मरुद्देवत्यपश्वालम्भेन 'एनं' सन्तं 'विशां' प्रजानां 'गर्भम्', तदुपजीव्य क्षतवान् भवति॥

तस्यापि दक्षिणां विधत्ते— तस्या एताद्दग्वेति। एवकारेणा न्यवर्णदक्षिणानिवृत्तिः। दक्षिणाभेदेनानयो कर्मभेद॥ ९॥

'एतौ पशुबन्धाविति। उभयत्र पशुबन्धद्वयस्य शाखाभेदेन

---

* यद्यप्यन्येनान्येन अनूबन्ध्यायाः वशायास्तद्गतौ—इति कस्य।
† २४ प्रथमा कण्डिका द्रष्टव्या।

देवतान्तरसम्बन्धं दर्शयति – "तदेतावेवेति । एवकारेणादिति सहसम्बन्धो विवक्षित । 'अप्स्वेव'–इति यदुक्तम्, तदेव स्पष्टयति —"या सदित्या इत्यादिना ॥ १० ॥ ४ [ ५ २ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् )

अभिषेचनीयेनेष्ट्वा† । केशान्न वपते तद्यत् केशान्न वपते वीर्यं वा ऽएतदपाᳪ रसः सम्भृतो भवति येनैन मेतदभिषिञ्चति तस्याभि-षिक्तस्य केशान् प्रथमान् प्राप्नोति स यत् केशान् वपेतैताᳪ श्रियं जिह्मां विनाशयेद् व्युदस्येत्तस्मात् केशान्न वपते ॥ १ ॥

संवत्सरं न वपते । संवत्सरसम्मिता वै व्रत-

---

* अवभृथादिषु निषद्य केशेषु पशुबन्धविधि । स एषोऽपि तै० सं० १. ८. १५ तै० ब्रा० १. ८. ३ द्रष्टव्य ।

† अभिषेचनीयेनेष्ट्वा इति म० घ० ।

चर्या तस्मात् संवत्सरं न वपते स एष व्रत-
विसर्जनीयोपयोगो नाम स्तोमो भवति केश-
वपनीयः ॥ २ ॥

तस्यैकविंशं प्रातःसवनम् । सप्तदशं माध्य-
न्दिनं सवनं पञ्चदशं तृतीयसवनं सहोक्थैः
सह षोडशिना सह रात्र्या ॥ ३ ॥

त्रिवृद्राथन्तरः सन्धिर्भवति । एष एवैकविंशो
य एष तपति स एतस्मादेकविंशादपयुङ्क्ते
स सप्तदश मभिप्रत्यवैति सप्तदशात् पञ्चदशं
पञ्चदशादस्या मेव त्रिवृति प्रतिष्ठाया प्रति-
तिष्ठति ॥ ४ ॥

तस्य रथन्तरं पृष्ठं भवति । इयं वै रथन्तर
मस्या मेवैतत् प्रतिष्ठाया प्रतितिष्ठत्यतिरात्रो
भवति प्रतिष्ठा वा ऽअतिरात्रस्तस्मादतिरात्रो
भवति ॥ ५ ॥

स वै ऽऽय्येव व्यर्त्तयते । केशान् वपते * वीर्यं
वा ऽएतद्रपाए रसः सम्भृतो भवति येनैन

* केशान् वपत—इति म च ।

मेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमाप्नोति स यत् केशान् वपेतैतां श्रियं जिह्मां विनाशयेद्वा दुह्यादथ यन्निवर्त्तयते तदात्मन्येवैतां श्रियं नियुनक्ति तस्मात्त्वेव वर्त्तयते केशान्न वपते तस्यैषैव व्रतचर्या भवति यावज्जीवं नाख्या प्रतितिष्ठति ॥ ६ ॥

आसन्द्या उपानहा ऽउपमुञ्चते । उपानद्भ्या मधि यदस्य यानं भवति रथो वा किञ्चिद्वा सर्वं वा ऽएष इदं सर्वमुपर्युपरि भवत्यर्वागेवास्मादिदᳬ सर्वं भवति यो राजसूयेन यजते तस्मादस्यैषैव व्रतचर्या भवति यावज्जीवं नाख्या प्रतितिष्ठति ॥ ७ ॥ ५ ॥

॥ इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [५. ३.] ॥

तृतीये केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते । सूत्रम्— "अभिषेचनीयाद् संवत्सरात् केशवपनीयोऽतिरात्र सोमापवर्गं"—इति *। पश्चाभ्युदयानन्तर केशवपनीयातिरात्र याग कर्त्तव्य । अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केश वपनाकरणलक्षणं व्रतं आचरणम्, ततस्तद्व्रतविसर्जनार्थं मेक-

* का॰ श्रौ॰ सू॰ १५. ८. २६।

सोमयागः, पौर्णमासीसुत्यः कार्यः, स एव केशवपनीयातिरात्र उच्यते। रात्रिं अतीत्य वर्त्तत इत्यतिरात्रः; अतिरात्रसंस्थया कार्य इत्यर्थः * ॥

तमिमं विधत्ते— "अभिषेचनीयेनेष्ट्वेति। अभिषेचनीययागादनन्तरं केशवपनीयकरणे कारणमाह— "वीर्यं वा एतदपा इति। पूर्वं अभिषेककाले वीर्यरूपोऽपां रसः प्रथमं केशानेव प्राप्तवान्, अतः केशानां वपने अभिषेकेणागच्छन्तीं 'श्रियम्' एव 'जिह्मां' कुटिलां विनाशितवान् भवति। किञ्च 'व्युद्ध्यात्' गतसारोऽपि भवेत्। तस्मात् केशवापो न कर्त्तव्य इत्यर्थः † ॥ १ ॥

तस्यावधिकालं दर्शयति— "संवत्सरं न वपत इति। केशवपनीयशब्दं निर्वक्ति— "स एष भवतीति। संवत्सरसम्मित-व्रतविसर्जनद्वारा केशवपनार्थम् उपयुज्यमानः त्रिवृदादयः 'स्तोमः' एकविंशादिस्तोमवान् यागः केशवपनीय इत्यर्थः ॥ २ ॥

तत्र सामगैर्गीयमानेषु स्तोत्रेषु चोदनेन प्रातस्सवनादिषु त्रिवृदादिस्तोमगतौ मानपवदितुं विशेषं दर्शयति— "तस्यैकविंश इति। प्रातस्सवनमेकविंशस्तोमयुक्तं कर्त्तव्यम्, माध्य-

---

* 'तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीसुत्यः'—इति सूत्र मत्र विचार्यम् (१५. ६. १०)। 'तदन्तमनुबन्ध्यावभृथान्तरपौर्णमास्यां भवति'—इतीह कर्कः। तयोः पशुबन्धयोरन्ते केशवपनीयनामकः अतिरात्रसंस्थः सोमयागो भवति, स च पौर्णमासीसुत्यः ज्यैष्ठ्यां पौर्णमास्यां तस्य सुत्या भवतीत्यर्थ'—इति तत्र वृत्तिः।

† "संवत्सरादूर्ध्वं केशवपनीयाय दीक्षेत यस्मिन् कालेऽभिषेचनीयेन यजेत, तस्य पौर्णमास्या अतिरात्र"—इति चात्र लाट्या० श्रौ० सू० ९, ३ १, २।

न्दिनं सप्तदशस्तोमकम्; अस्य सोमयागस्य अतिरात्रसंस्थात्वात् *। तृतीयसवने अग्निष्टोमवत् द्वादश स्तोत्राणि, तत उत्तरं त्रीण्युक्थस्तोत्राणि, एकं षोडशिस्तोत्रम्, रात्रिपर्यायस्तोत्राणि द्वादश; तानि सर्वाण्यपि पञ्चदशस्तोमकानि कर्त्तव्यानीत्यर्थः। स्तोमक्लृप्तिप्रकारस्तु "प्राची मारोह"—इत्यत्र दिवमारोहणमन्त्रव्याख्यावसरे दर्शितः † ॥ ३ ॥

"त्रिवृद्रथन्तर इति। पूर्वदिवसप्रातिलोम्येन उत्तरदिवसस्तोमः-काले यज्ञस्यापक्रमे अन्त्यं चरमं स्तोत्रं तृतीयपर्यायस्यान्ते रथन्तर-साम्ना गातव्यम्, तत् अग्निष्टोम मित्युच्यते। तत् स्तोत्रं त्रिवृत्स्तोमयुक्तं कार्यम्। एकविंशादवरोहणक्रमेण ‡ त्रिवृत्पर्यन्तं यत् स्तोमकरणमुक्तम्, तत् सूर्यलोकादिक्रमात् भूम्यवस्थानात्मना प्रशंसति— "एष एवैकविंश इति। 'य एष तपति', 'स.' 'एकविंशः' सूर्य इत्यर्थः; तस्मात् 'अपवृक्ते' अवरोहतीत्यर्थः। सो ऽयमवस्थायाः त्रिवृद्रूपाया अस्या भूमिलक्षणाया 'प्रतिष्ठायां' प्रतिष्ठितवान् भवति ॥ ४ ॥

माध्यन्दिने सवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितम्, अत्र तस्य नियमयति— "तस्य रथन्तर मिति। 'अस्य सोमयागस्यातिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति— "अतिरात्र इति। अतिरात्रसंस्थात्मना सर्व एव क्रतुः प्रतिष्ठारूप. ॥ ५ ॥

अस्य क्रतोः केशवापनतविसर्जनार्थं क्रियमाणत्वात् तदन्ते

---

* '०संस्थात्'—इति च छ, '०संस्था[ना]त्'—इति च।
† इहैव पुरस्तात् (३ । १ । ३ ) २४१ पृष्ठतो द्रष्टव्यम्।
‡ '०दवरोहणेन—इति च '०दवरोहण'—इति च।

केशवापः कार्यः ; तत्र कञ्चिद् विशेषं विधत्ते— "स वै न्येव वर्त्तयत इति। 'स' यजमानो 'निवर्त्तयते' केशान् निकृन्त्येव, न वपेत ; वपनं नाम मुण्डनं तन्न कुर्यात्, निवर्त्तनं कर्त्तनम्, तत् कुर्यादित्यर्थः। "वीर्यं वा इत्यादेरर्थः पूर्वं व्याख्यातः *। निवर्त्तनपक्षे केशाङ्कुराणां विद्यमानत्वात् 'धाम-न्येव' 'एतां श्रियं' नियोजितवान् भवतीत्यर्थः ॥

सुप्तवतः काश्चिन्नियमान् दर्शयति— "तस्यैवैवेति। 'एषा' केशकर्त्तनलक्षणा 'व्रतचर्या' यावज्जीवनं कर्त्तव्या ; ‡ केश-मुण्डनं कार्यम्। कदाचिदपि † 'पद्भ्यां' भूमौ 'न प्रतितिष्ठति' पदन्यासं न कुर्यात् ॥ ६ ॥

कुत्रावतिष्ठतेति तद्दर्शयति— "यासग्धा मिति। भावन्या पदरोहणसमयेऽपि 'उपानहौ' पादुके उपमुञ्चेत। इतप्रभृति: सञ्च-रणसमये रथं वा यानं वारोहेत्। एतादृशं व्रतं राजसूय-याजिनो 'यावज्जीवं' कर्त्तव्य मित्यर्थः ‡ ॥ ७ ॥ ५ [ ५. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

———

* अनुपद मेव मतं ३५६ पृष्ठाया द्रष्टव्यम्।

† इतोऽनन्तरं ख-पुस्तके 'अनुपानत्कोऽपादुकः'—इत्यधिकः पाठः।

‡ तै० ब्रा० १. ८. ८ द्रष्टव्यम्। किञ्च "संवत्सर मग्निहोत्रं हुत्वा केशवपनीयेनातिरात्रेण यजते"—इति आप० श्रौ० सू० १८. २२. ६। एवं सत्यषाढ़स्य च,— लाट्या० श्रौ० सू० ६ ३ १–१२ ॥

( अथ चतुर्थं ब्राह्मणम् )

श्येत आश्विनो भवति। श्येताविव ह्यश्विनावविर्मेष्य सारस्वती भवत्यृषभ मिन्द्राय सुत्राम्ण* ऽआलभते दुर्व्वेदा एतत् सर्व्वाः पशवो यदेतत् सर्व्वशस्त्र विन्देदप्यजानेवालभेरंस्ते हि सुप्रपतरा भवन्ति स यद्यजानालभेरंल्लोहित आश्विनो भवति तद्यदेतया यजते ॥ १ ॥

त्वष्टुर्ह वै पुत्र †। त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवंरूप आस तस्माद् विश्वरूपो नाम ॥ २ ॥

तस्य सोमपान मेवैकं मुख मास। सुरापाण मेक मन्यस्मा ऽअशनायैकं त मिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ ३ ॥

स यत् सोमपान मास। ततः कपिञ्जलः समभवत्तस्मात् स बभ्रुक इव बभ्रुरिव हि सोमो राजा ‡ ॥ ४ ॥

---

* सुत्राम्ण—इति ग घ। † पुत्र—इति ग

‡ राजा—इति ग राजा—इति घ

अथ यत् सुरापाश्वमास। ततः कलविङ्कः समभवत्तस्मात् सो ऽभिमाद्यत्क इव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति * ॥ ५ ॥

अथ यदन्यस्मा ऽअशनायास। ततस्तित्तिरिः समभवत्तस्मात् स विश्वरूपतम इव सन्त्येव घृतस्तोका इव त्वत् मधुस्तोका इव त्वत् पर्णेष्वाश्चुतिता एवंरूप मिव हि स तेनाशन मावयत् ॥ ६ ॥

स त्वष्टा चुक्रोध। कुविन्मे पुत्र मवधीदिति सो ऽपेन्द्र मेव सोम माजह्रे स यथायं सोमः प्रसुत एव मपेन्द्र एवास † ॥ ७ ॥

इन्द्रो ह वा ऽईक्षाञ्चक्रे। इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस एव मनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयाञ्चकार स हैन जिहिंस सोऽस्य विष्वङ्ङेव ‡ प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव

---

* वदति' इति ख।

† एवास—इति क।

‡ विष्वङ्ङेव—इति क। विष्वगेव—इति ख।

तस्मात् प्रायश्चित्तिरास स यद्धापि मुखादद्रोष्यन्न
हैव प्रायश्चित्तिरभविष्यत् ॥ ८ ॥

चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो
वैश्यः शूद्रो न हैतेषा मेकश्चन भवति यः सोमं
वमति स यद्धैतेषा मेकश्चित् स्यात् स्याद्धैव
प्रायश्चित्तिः ॥ ९ ॥

स यन्नस्तोऽद्रवत् । ततः सिंहः समभवदथ
यत् कर्णाभ्या मद्रवत्ततो वृकः समभवदथ यद-
वाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः
समभवन्नथ यदुत्तरात् प्राणादद्रवत्सा परिस्रु-
दथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदर
मिति समभवत्स सर्व्वेणैव व्यार्ध्यत सर्व्वं हि
सोमः ॥ १० ॥

स सोमातिपूतो मन्युरिव चचार । त एत-
याश्विनावभिषज्यतां तं सर्व्वेणैव समर्द्धयतां
सर्व्वं हि सोमः स वसीयानेवेष्ट्वाभवत् ॥ ११ ॥

ते देवा अब्रुवन् । सुत्रातं वतैन मत्रासता*
मिति तस्मात् सौत्रामणी नाम ॥ १२ ॥

* 'मत्रासत' — इति क, ख

स हैतयापि सोमातिपूतं भिषज्येत् । सर्व्वेण वा ऽएष व्यृध्यते यꣳ सोमो ऽतिपवते सर्व्वꣳ हि सोमस्तꣳ सर्व्वेणैव समर्द्धयति सर्व्वꣳ हि सोमः स सर्व्वेणैवेष्ट्वा भवति तस्माद् हैतयापि सोमातिपूतं भिषज्येत् ॥ १३ ॥

तद्वदेतया राजसूययाजी यजते । सर्व्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्व्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत्सौत्रामण्यनया मे ऽपीष्टमसदनयापि सूया ऽइति तस्माद्वा ऽएतया राजसूययाजी यजते* ॥१४॥

अथ यदाश्विनो भवति । अश्विनौ वा ऽएतमभिषज्यतां तथो ऽएवैनमेष एतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति † ॥ १५ ॥

अथ यत् सारस्वतो भवति । वाग्वै सरस्वती वाचा वा ऽएनमश्विनावभिषज्यतां तथो ऽएवैनमेष एतद्वाचैव भिषज्यति तस्मात् सारस्वतो भवति ‡ ॥ १६ ॥

---

* यक्षत —इति ग घ ।

† ‡ भवति —इति क ।

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता *
तयैवैन मेतत्समर्द्धयति तस्मादैन्द्रो भवति ॥ १७ ॥

एतेषु पशुषु । सिᳬहलोमानि वृकलोमानि
शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनᳬ
सोमोऽत्यपवत तेनैवैन मेतत् समर्द्धयति कृत्स्नं
करोति तस्मादेतान्यावपति ॥ १८ ॥

तदु तथा न कुर्यात् । उल्कया ह स न-
खिन्या पशूननुषुवति य एतानि पशुष्वावपति
तस्मादु परिस्रुत्येवावपेत्तथा होल्कया नखिन्या
पशून्नानुषुवति तथो ऽएवैनᳬ समर्द्धयति कृत्स्नं
करोति तस्मादु परिस्रुत्येवावपेत् + ॥ १९ ॥

अथ पूर्वेद्युः परिस्रुतᳬ सन्दधात्यश्विभ्यां पच्यस्व
सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति सा
यदा परिस्रुद्भवत्यथैनया प्रचरति ॥ २० ॥

द्वावग्नी ऽउद्धरन्ति । उत्तरवेदावेवोत्तर मुद्धते
दक्षिणं मेत् सोमाहुतीय सुराहुतीय सह मुख्या-

मेति तस्माद् द्वावग्नी ऽउद्धरन्त्युत्तरवेदावेवान्तर मुदते दक्षिण मथ यदा व्वपाभिः प्रचरन्त्यथैतया * परिस्रुता प्रचरति ॥ २१ ॥

ता दर्भैः पावयति । पूतासदिति व्वायुः पूतः पवित्रेण प्रत्यङ् सोमो ऽअतिस्रुतः । इन्द्रस्य युज्यः सखेति तत्कुवलसक्तून् बादरसक्तून् बदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत् चितिरघ्नोवत् तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेतानावपति † ॥ २२ ॥

अथ ग्रहान् गृह्णाति । एको वा त्रीन्वैकस्त्वेव ग्रहीतव्य एका हि पुरोरुग्भवत्येकानुवाक्यैका याज्या तस्मादेक एव ग्रहीतव्यः ॥ २३ ॥

स गृह्णाति । कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा

* प्रचरन्त्यथैतया'—इति क, ख ।

† °वपति'—इति क ।

सुत्राम्ण ऽइति यद्यु त्रीन् गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयाद्यथाहा-श्विभ्याᳬ सरस्वत्या ऽइन्द्राय सुत्राम्णे ऽनुब्रूहीति ॥ २४ ॥

सो ऽन्वाह । युवᳬ सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती ऽइन्द्रं कर्मस्वावत मित्याश्राव्याहाश्विनौ सरस्वती मिन्द्रᳬ सुत्रामाणं यजेति ॥ २५ ॥

स यजति । पुत्र मिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दᳬसनाभिः । यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति हिर्होता वषट्करोति हिरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन् गृह्णीयादेतयैवानुलोम मितरौ ह्वयेते ॥ २६ ॥

अथ कुम्भः । शतवितृण्णो वा भवति नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वा ऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥ २७ ॥

तऽ शिक्योद्धृतम्। उपर्युपर्याहवनीयं धारयन्ति सा या परिशिष्टा परिक्षुद् भवति ता मासिञ्चति तां विवरन्तो मुपतिष्ठन्ते पितृणाऽ सोमवतां तिसृभिर्ऋग्भिः पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः पितॄणा मग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्वेव मुपतिष्ठन्ते यत्र वै सोम इन्द्र मत्यपवत स यत् पितॄनगच्छत् तथा वै पितरस्तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेव मुपतिष्ठन्ते * ॥ २८ ॥

अथैतानि हवींषि निर्वपति। सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरु मैन्द्र मेकादशकपालं पुरोडाशम् † ॥ २९ ॥

स यत् सावित्रो भवति। सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैतद्धविष्यति तस्मात् सावित्रो भवति ‡ ॥ ३० ॥

अथ यद्वारुणो भवति। व्यङ्गो वा ऽआर्य-

* 'सुपतिष्ठते'—इति ग, घ।

† 'पुरोडाशम्'—इति ख।

‡ 'भवति'—इति क।

यिता तदु एवार्पयिता तेनैवैतद्भिषज्यति तस्मा-
द्वारुणो भवति * ॥ ३१ ॥

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता
सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो
भवति † ॥ ३२ ॥

स यदि चेमयापि सोमातिपूत भिषज्येत् ।
इष्टा अनुयाजा भवन्त्यव्यूढे स्रुचावथैतैर्हविर्भिः
प्रचरति पश्चाद्वै सामो ऽतिपवते पश्चादेवैन मेतेन
मेधेनापिदधात्याश्विन सु तर्हि द्विकपाल पुरोडाश
निर्व्वपेदथ यदा व्पाभि प्रचरत्यथैतेनाश्विनेन ‡
द्विकपालेन पुरोडाशेन प्रचरति ॥ ३३ ॥

तदु तथा न कुर्यात् । ह्वलति वा ऽएष
यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं
करोति तस्माद्यचैवैतेषां पशूना व्पाभिः प्रचरन्ति
तदेवैतैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपाल
पुरोडाशं निर्व्वपेत् ॥ ३४ ॥

तस्य नपुंसको गौर्दक्षिणा। न वा ऽएष स्त्री न पुमान् यन्नपुंसको गौर्यदह पुमांस्तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मान्नपुंसको गौर्दक्षिणाऽश्वा वा रथवाही सा हि न स्त्री न पुमान् यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥ ३५ ॥ ६ ॥

॥ इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् [५. ४.] ॥

सोमप्रधानि * राजसूये सप्त सोमयागाः। तत्र, पवित्राख्यसोमयागे विशेषाभावात् † न मोक्षः; अभिषेचनीय-दशपेय-केशवपनीयातिरात्रेषु केचित् ‡ वैशेषिका धर्मा उक्ताः; व्युष्टिद्विरात्रोऽग्निष्टोमातिरात्रो चत्वक्षतिरिति सोमयागत्रयं केशवपनीयादनन्तरं कर्त्तव्यम्। तेषां सोमयागविकृतित्वादग्निष्टोमवत् सर्वं सङ्गजातं कर्त्तव्यम्, तत्र विशेषाभावादेव नोक्ताः; तदनन्तरकर्त्तव्या सौत्रामण्यभिधीयते §।

---

* 'सप्तप्रधाने'—इति क, ख।

† 'विशेषभावात्'—इति ग, क; 'विशेषाभावे'—इति च।

‡ 'केचिद्'—इति क, ख।

§ "सन्तिष्ठते राजसूयः, तेनेष्ट्वा सौत्रामण्या यजेत"—इति आप० श्रौ० सू० १८. २२. २०, २१।

तत्र पशुत्रयं * देवतासम्बन्धविशिष्टं विधत्ते—"श्येन आश्विन इति। अश्विदेवत्यः 'श्येनः' पशुरालभ्यः। 'मल्हा' गलस्तनयुक्तेत्यर्थः। ताम् 'अविम्' मेषीम् 'सरस्वत्यै' आलभेत। 'सुत्राम्णे' इदं नाम्ने, एतद्गुणकाय 'इन्द्राय' 'ऋषभं' सेचनसमर्थम् आलभेत। एतेषु पशुषु श्येनगलस्तनयुक्तत्वरूपं गुणमसम्भावितं मत्वा श्रुतिः स्वयमेव पक्षान्तरमाह—"दुर्वेदा इति। 'एवम्' उक्तरीत्या 'समस्ताः' गुणवत्त्वेन सम्पूर्णाः पशवो 'दुर्वेदाः' दुर्लभाः, तेषां स्थाने तत्तद्देवत्यान् 'यान् पशून् एव' आलभेत। 'सुवपतराः' सुखेन वपयितुमर्हाः। अजमेषपक्षे आश्विनपशोः क्वचिद् गुणं विधत्ते—"लोहित आश्विन इति। अत एव कात्यायनः— "आश्विनोऽजः श्येतः, मल्हाविः सारस्वती, ऋषभ मिन्द्राय सुत्राम्णे, तदभावेऽजाः प्रथमो लोहितः" –इति †। एतेषां पशूनां सौत्रामणीसम्बन्धं दर्शयति— "तद्यदेतयेति। पशुत्रयवत्या 'एतया' सौत्रामण्या यष्टव्य मित्यर्थः॥ १॥

अथ सौत्रामण्याः सुत्रामेन्द्रसम्बन्धं मश्विसरस्वतीसम्बन्धम्, मन्त्रोपयुक्तद्रव्यादिकमाख्यायिकामुखेन दर्शयति— "त्वष्टुर्ह वै पुत्र इति। पूर्वं त्वष्टुः पुत्रस्य विश्वरूपस्य 'त्रिशीर्षः' त्रीणि मुखान्यासुः। तत्र 'एकं मुखं सोमपानम्', द्वितीयं 'सुरापानम्', तृतीयम् 'अन्यस्मै अशनाय' बभूव। एवम्भूतस्य विश्वरूपस्य त्रीणि शिरांसि 'इन्द्रः' 'दिद्वेष' चिच्छेद। ततस्त्रिभ्यो मुखेभ्यः कपिञ्जलकलविङ्कतित्तिरयख्यः पक्षिणः

* "श्येतः पशुरश्व. अ:"–इति का० श्रौ० सू० १९. १० २।
† का० श्रौ० सू० १९ १० ३–७।

समभवन्। कपिञ्जलस्य सोमपानमध्यजातत्वात् तद्वर्णो बभ्रुवर्णो जातः, कलविङ्कस्य सुरापानमुखजातत्वात् सुरापायिवदभिमादकत्वम्, तित्तिरस्याशनभाजकमुखजातत्वात् नानारूपत्वम्। अशने हि घृतमधुबिन्दुसद्भावात्तित्तिरेरपि पक्षिणि तदाकारपक्षसद्भावः। 'अभवत्'-इति त्रेति आदन्तार्थात् छान्दसम् ॥ २—६ ॥

“स त्वष्टेति। ततस्तस्य छिन्नशीर्ष्णो विश्वरूपस्य पिता 'त्वष्टा' 'कुवित्' व्यर्थम् 'मे' मम 'पुत्रम्' 'अवधीत्' 'इति' क्रुद्धः सन् 'अपेन्द्रम्' इन्द्रवर्जितम् 'एव' 'सोमं' सोमयागम् 'आजह्रे' आहृतवान्,— यथा सोमः इन्द्रवर्जितः 'प्रसुत' अभिषुतः स्यात् तदेवार्थं ( ॥ ७ ॥ )

अथ 'इन्द्र' त्वष्टादयः मां सोमव्यवहितं कुर्वन्तीति निश्चित्य 'अनुपहूत' सन् द्रोणकलशस्थितं सोमं मध्ये भक्षयाञ्चकार। यथा बलवान् पुरुषो बलादहितस्य धनादिकं * समपहरति, तद्वत्। स पीतः सोमः 'एनं' 'जिहिंस' बाधितवान्। अस्य 'प्राणेभ्यः' नासिकादिस्थानेभ्य 'एव' 'विष्वङ्' सर्वतः 'दुद्राव' स्रुतः, 'न मुखात् दुद्राव'। 'तस्मात्' 'स' इन्द्रः 'प्रायश्चित्ति' प्रायश्चित्तयोग्यः 'आस'। प्रायो विनाशः, तस्य चित्तिः सन्धानं यस्येति तथाविधो बभूव। यदि मुखात् स्रुतः स्यात्, तर्हि प्रायश्चित्तियोग्य एव न स्यात्, अस्मरत्र सोमरसव्यूहस्येन्द्रस्याधिक्यम्ब्या सम्मर्दनं वक्ष्यते † ॥ ८ ॥

मुखवमनपक्षे प्रायश्चित्तिर्नास्तीति दर्शयति—“चत्वारो वा इति। लोके हि वर्णचतुष्टयस्यैव प्रायश्चित्तविधानम्, नान्यस्य,

* धनादिक—इति क।  † १२ का० ३०२ पृ०।

यतः सोमवामी एषां चतुर्णां मध्ये एकोऽपि न भवति। यथा ब्रह्महादेः केवलपापशरीराणि * स्युः, प्रायश्चित्तविधिर्नास्ति, एवं सोमवामिनोऽपीति। यद्यपि तस्य "यः सोमवामी स्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्"—इत्यादिना तैत्तिरीये † प्रायश्चित्तमुक्तं, तथापि पञ्चस्वविकल्पे पशुं पर्यचतुष्टयानर्थक्य सूक्तम्; तस्मात् इन्द्रस्य मुखवमनाभावात् प्रायश्चित्तियोग्यत्वं जात मित्यर्थः ॥ ९ ॥

इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्या-त्मनोत्पत्तिं दर्शयति— "स यवस्य इति। 'नस्तः' नासि-कायाः स्रुतः सोमः 'सिंहः' अभवत्। 'अवाच.' अधोमुखा-दपानद्वारात् निर्गतः सोमः 'शार्दूलमुख्याः श्वापदाः' क्रूर-कर्माणः, पशव. 'समभवन्'। उत्तरात् प्राणात् मुखच्छिद्रात् स्रुतः 'परिस्रुत्' सुरा अभूत्। "यावाचो सा सुरा"—इति हि तैत्तिरीयकम् ‡। स चेन्द्रो भक्षेव क्षिवारं निष्ठीवनं कृतवान्। तेन द्रव्यत्रय मभूत्,—'कुवलकर्कन्धुबदराणि' सूक्ष्म-तरस्थूलमध्यपरिमाणानि बदरजातिफलानि §। एवं सर्वेन्द्रियेभ्यः सोमस्रवणात् इन्द्रो 'व्यार्ध्यत' व्युद्धिविहीनो बभूव ॥ १० ॥

---

* 'केवलपापशरीराः'—इति च, छ।

† तै० सं० २ ३ २. १।

‡ तै० ब्रा० १ ८ ५. २।

§ 'कुवलं सूक्ष्मतरम्, कर्कन्धु स्थूलम् अतिमधुरं मद्दुकरायचे प्रायेण भाष्यते, बदरं तु निर्दिष्टमध्यम्'—इति याज्ञिकाः। 'कुव-लानि लघुकमधूकानि बदराणि, कर्कन्धूनि उपजीवकाबदरसमबदराणि, बदराणि निकृष्टबदराणि मध्यबदराणि'—इति याज्ञिकाः। 'कर्क

"स सोमातिपूत इति। 'सोमातिपूतः' अपानद्वारादिभ्यः स्रुत सोमः *, 'सः' इन्द्रः 'पङ्गुः' "पचि प्रतिष्टम्भे" † विकलगतिः ‡ पङ्गुः 'इव' 'चचार'। तथाविध मिन्द्रम् 'एतया' सौत्रामण्या 'अश्विनौ' 'अभिषज्यताम्' समाश्वित मकुरुताम्। "भिषज् चिकित्सायाम्"-इति § धातुः। तदेवाह— "सर्वेणेति। 'सर्वेण' सोमेन एनं समृद्धं कृतवन्तौ। तत्र इन्द्रः एतया 'इष्ट्वा' 'वसीयान्' वसुमत्तरः 'अभवत्' ॥ ११ ॥

सौत्रामणीशब्दं निर्वक्ति— "ते देवा इति। एव मश्विभ्यां सोमरसेन समर्द्धितं मिन्द्रं प्रति 'देवा अब्रुवन्',— 'एनम्' सोमातिपूतं 'सुत्रातं' सुष्ठु रक्षितवन्तौ अश्विनाविति। 'बत' -इति हर्षे ; अतः सुत्राणसम्बन्धात् 'सौत्रामणी'-नामेष्टिः ॥ १२ ॥

प्रसङ्गादन्यस्य सोमातिपूतस्यापीमा मेवेष्टिं दर्शयति— "स एतयापीति। इयं राजसूयाद् बहिरपि प्रयोक्तव्येत्यर्थः ॥ १३ ॥

"तद्यदेतया राजसूयेनेत्यादेरय मर्थः— राजसूययाजिना सर्वेऽपि इष्टि पशु सोम दर्विहोमा इष्टाः, अत एतयापि इष्टिरवाप्तेन कार्येति पूर्वं सूक्तम् ॥ १४ ॥

आश्विनसारस्वतैन्द्रपशुविधिं पृथक्-पृथगनूद्य प्रशंसति— "अथ यदाश्विनो भवतीति ॥ ( १५ ) ॥ "वाग्वेति। 'वाचा'

---

(फुवर्ण ) बालसूर्य्यरम्भलम्, बदरं कसाकपरिमितं मृदसं बदरीफलम्, कर्कन्धु वदरीसक्षोपरिमितं स्थूलं बदरीफलम्'–इति तै॰ ब्रा॰ १. ८. ५ भाष्ये सायणः।

* 'पुनःसोमः'–इति क, ख।

† "मचि प्रबन्धे"– इति अ॰ धा॰ १५ धा॰।

‡ 'मन्थरगतिः–इति ख 'मन्दगतिः'–इति घ।

§ कण्ड्वादिः। 'भिषज्यति'।

अथ परिस्रुत्सन्धानं समन्त्रकं विधत्ते— "अथ पूर्वेद्यु-रिति। 'सन्दधाति' सम्पादयेदित्यर्थः। तत्प्रकारः कात्यायनेन स्पष्ट मीरित— "व्रीहीन् विरूढाविरूढान् क्षौम उपनह्य क्रीणाति क्लीबात् सीसेन, पक्वौदनं विरूढांशूणीकृत्याश्विभ्यां पच्यस्वेति * संसृजति"–इति †। हे परिस्रुत्! 'अश्विभ्यां' 'पच्यस्व' पक्वा भव। एवं सुत्रत्रापि ॥ २० ॥

परिस्रुत्प्रचरणे कश्चिद् विशेष माह— "दावन्ती इति। उत्तरवेद्याः शेष मग्निम्, तद्दक्षिणभागे 'उभते' प्रदेशे एक मग्निं मुद्धरेत्। अग्निद्वयोद्धारे कारण माह— "नेदिति। एक-स्मिन्नेवाग्नौ सोमसुराहुतयः सह होतु मयोग्याः, अतस्तत्सं-सर्गदोषनिवृत्त्यर्थं मग्निद्वयं कार्यं मित्यर्थः। तस्याः प्रचरणकाल माह— "यदा वपाभिरिति। पशुवपाभिर्यदा प्रचरेयुः, तदैतयेत्यर्थः ॥ २१ ॥

विधत्ते— "ता दर्भैरिति। तां परिस्रुत् 'पूता' 'पवत्' 'इति' 'तां दर्भैः' पावयेत्। मन्त्रस्याय मर्थः— 'पवित्रेण' पूतः 'सोमः' सोमात्मना निष्पादितः ‡। तथा च तैत्तिरीयकम्— "स्वाद्वीं त्वा स्वादुनेत्याह सोम मेवैनां करोति"–इति §। वायुः पात्राणि गच्छन्, वायुवच्छीघ्रगामी वा भूत्वा 'प्रत्यङ्' अधोवर्त्तिपात्राभिमुखः सन् 'अतिस्रुतः' अतिक्रम्योद्गतः 'इन्द्रस्य' 'युज्यः' योग्य 'सखा' समानख्यानः 'इति'।

* वा॰ सं॰ १॰ ३१ १।
† का॰ श्रौ॰ सू॰ १५ ६ २८, २९।
‡ का॰ श्रौ॰ सू॰ १५ १॰ ११।
§ तै॰ ब्रा॰ १ ८ ५ ५।

विधत्ते—"तत्पुनतीति। तस्यां परिस्रुति कुवल-कर्कन्धु-बदर-सक्तुत्रयं निवपेदित्यर्थः। अत्र सूत्रम्— "वपामार्जनान्ते क्षुधैः परिस्रुतं पुनाति वायुः पूत इति, कुवल-कर्कन्धु-बदर-चूर्णानि चावपति" * ॥ २२ ॥

ग्रहग्रहणं विधत्ते—"अथ ग्रहानिति। एको वा ग्रहः, त्रयो वा ग्रहीतव्याः। तत्रैकं सिद्धान्तयति—"एकस्त्वेवेति। एकस्यैव ग्रहस्य मुपपादयति—"एका हीति। पुरोरुक्-पुरोनु-वाक्यायाज्याना मेकत्वादेक एव ग्रहीतव्यः † ॥ २३ ॥

ग्रहस्य मन्त्रं विधत्ते—"स गृह्णाति कुविदङ्गेति ‡। 'अङ्ग'-शब्दः सम्बोधनवाची। हे सोम! कुविच्छब्दो बह्वर्थ-वाची। चिच्छब्दः समुच्चये। यथा लोके 'यवमन्तः' यवादि-धान्योपेताः कृषिकाः 'कुविद्' यवबहुलं, यव मन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि 'अनुपूर्वं' तत्परिपाकानुक्रमेण इदं पक्क मिद मपक्क मिति 'वियूय' विश्लेष्य पृथक्कृत्य 'दान्ति' "दाप् लवने" § लुनन्ति, तथा 'एषां' यज्वनां 'भोजनानि' अन्नानि 'इह' च 'कृणुहि' कुरुत 'ये' यजमानाः 'बर्हिषः' यागस्य 'नम उक्तिं' नम इत्यन्ननाम ‖, नमस्कारो वा, तस्योक्तिं 'यजन्ति' कुर्वन्तीत्यर्थः। "उपयामगृहीत."—इत्यादि-मन्त्रशेषः स्पष्टः ॥

अथ त्रयग्रहणपक्षेऽपीम मेव मन्त्र मुपयामेत्यत्र विशेषञ्च

* का॰ श्रौ॰ सू॰ १५ १॰ ११, १२।
† का॰ श्रौ॰ सू॰ १५ १॰ १३।
‡ वा॰ सं॰ १॰ ३२ १।
§ धात॰ प॰ ४६ धा॰। ‖ निघ॰ २ ७ २२।

दर्शयति— "यद् वीनिति । 'नाना' पृथक् पृथक् उपयामेन तिसृभ्यो देवताभ्यो गृह्णीयात् ॥

अनुवचनमपि विशेषं दर्शयति— "अथाहेति ॥ २४ ॥

होता मनुष्य अश्विसरस्वतीन्द्रप्रतिपादकं मन्त्रं ब्रूह— "होऽन्वाह युव मिति * । हे अश्विनौ ! 'युवं' युवां 'सुरामं' सुरमणीयम्, 'आसुरे नमुचौ' स्थितं सोमं 'सचा' सहभूतौ एकीभूय 'विपिपाना' विविधं पिबन्तौ हे 'शुभस्पती' शुभस्य पालकौ स्वामिनौ । 'कर्मसु' निमित्तभूतेषु अर्थकारणार्थम् 'इन्द्रम्' 'आवतं' रक्षतम् 'इति' ॥

'यज्ञ'-इत्यत्रापि देवतात्रयस्य† विधत्ते— "याज्याभ्याहेति ‡। देवतात्रयप्रतिपादिकां याज्यां पठतीति ॥ २५ ॥

"स यजति पुत्र मिवेति § । 'पितरौ पुत्र मिव' यथा पालयतः, तथा उभौ अश्विनौ हे इन्द्र ! 'त्वां' त्वाम् 'आवथुः' ("अव रक्षणे") , पुरुषव्यत्ययः, रक्षितवन्तौ । 'काव्यैः' कवि कर्मभिः स्तोत्रैः, 'दंसनाभिः', 'दंस'-इति कर्मनाम ¶ , कर्मभिश्च इन्द्रं पालितवन्तौ कथं मन्यसे ? 'यद्' यस्मात् 'सुरामं' सुरमणीयं सोमं 'व्यपिबः' विशेषेण पीतवानसि । 'शचीभिः' कर्मभिः हे 'मघवन्' इन्द्र ! त्वा सोमातिपूतं सरस्वती 'अभिषक्' भैषज्यसन्धानं कृतवती । 'भिषक्'-इति क्वचिदपि पठ्यते ॥

* वा० सं० १० ३३ १ ।
† देवतात्रयस्य —इति क च, छ ।
‡ का० श्रौ० सू० १५ १० १४, १५ ।
§ वा० सं० १० ३४ १ । ‖ आ० प० ४०० पा० ।
¶ निघ० २ १ ३ ।

विधेयं विधत्ते— "द्विर्होतेति। होत्रा द्विवारं वषट्कारः कर्त्तव्यः। 'द्विरध्वर्युः' अध्वर्युणापि द्विवारं हवनं कार्यम् *। 'आहरति भक्षम्' हवनानन्तरं भक्षार्थं आहरेयुः †। यजमानपक्षे हवने कश्चिद् विशेष माह— "यद्यु ब्रीनिति। एतस्य सोम मनु इतरौ द्वौ परिस्रुद्धोमौ होतव्यौ। एषः परिस्रुद्धोमो दक्षिणेऽग्नावितिति प्राहुः ‡ ॥ २६ ॥

कात्यायन.— "परिस्रुच्छेष मासिच्य शतवच्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन् स्रवन्त मुपतिष्ठते सर्वैः सोमवतां बर्हिषदा मग्निष्वात्तानाम्"–इति §। हुतायाः सुरायाः शेषं वक्ष्यति शतच्छिद्रे नवच्छिद्रे वा कुम्भे आसिच्य, तं कुम्भं दक्षिणस्याहवनीयस्योपरि शिक्ये कृत्वा स्रवन्तं सोम-वदादिपितृणां त्रिभिस्तृचैरुपतिष्ठेतेति तदर्थः। तदेव विधत्ते— "अथ कुम्भ इति। कर्मप्रदीपे व्याख्यातम् ‖ ॥ २७ ॥

"तं शिक्योद्युत मिति। आहवनीयस्योपरि उच्चे प्रदेशे परिस्रुत्प्रक्षरणार्थं दक्षिणतः स्थापितस्याग्नेरुपरीत्यर्थः। तथा सूत्र मुदाहृतम् ¶। 'विक्षरन्तीं' कुम्भात् स्रवन्तीम् परिस्रुतम् 'उपतिष्ठते' ॥

उपस्थाने मन्त्रान् दर्शयति— "पितृणा मिति। 'सोम-

---

* का॰ श्रौ॰ सू॰ १५ १० २६।

† का॰ श्रौ॰ सू॰ १५ १० २८ क।

‡ २१ कण्डी द्रष्टव्या। का॰ श्रौ॰ सू॰ १५ १० १७।

§ का॰ श्रौ॰ सू॰ १५ १० १८।

‖ इष॰ ३ना॰ १३कण्डी-भाष्यं ३६७ पृ॰ १७ पं॰ द्रष्टव्यम्।

¶ का॰ श्रौ॰ सू॰ १५ १० १९ द्रष्टव्यम्।

यतां' सोमदेवतायुतानां 'पितॄणां' याज्यापुरोनुवाक्यारूपाः "उदीरतामवर उत्परासः"–इत्याद्यास्तिस्र ऋचः *, 'बर्हिषदां' बर्हिषि सीदताम् एतद्गुणकानां 'पितॄणां' "बर्हिषदः पितर ऊत्यर्वाग्"–इत्याद्यास्तिस्र ऋचः †, 'अग्निष्वात्तानां पितॄणां' "आयन्तु नः पितरः सोम्यासः"–इत्याद्यास्तिस्र ऋचः ‡ इति नवर्चः संहितायां क्रमेणाम्नाताः §; ताभिरुपस्थानं कर्त्तव्य मित्यर्थः ॥

पितृमन्त्रैरुपस्थानं प्रशंसति— "यत्र वै सोम इति । पूर्वमिन्द्रेण पीतः सोमः, अतिपूतः सन् पितॄनेव प्राप्नोत्, अतस्तन्मन्त्रोपस्थानेनेन्द्र मेव सम्पूर्णं कृतवान् भवतीति ॥ २८ ॥

अथ पशुपुरोडाशार्थं सावित्रवारुणैन्द्राख्यं हविस्त्रयं विधत्ते —"अथैतानि हवींषीति ॥ २९ ॥

पुरोडाशदेवताः प्रशंसति— "अथ यत् सावित्र इति । कात्यायनः— "सोमातिपूतस्याप्येषा, अनुयाजान्ते पशुपुरोडाशार्थेऽस्याश्विनेन प्रागवदानेभ्यः, हविर्भिर्वाश्विनाभावात्"– इति ‖ । अयमर्थः— एषा सौत्रामणी सोमातिपूतस्यापि भैषज्यार्थं कर्त्तव्येति राजसूयाद् बहिःप्रयोगः । तत्र पशुपुरोडाशार्थं विहितान्येतानि सावित्रादिहवींषि अनुयाजान्ते यक्ष्यन्ति, तदा छिद्रपिधानार्थं पश्ववदानाचरणानन्तर मवदानात् पुर आश्विनेन पुरोडाशेन यागः कर्त्तव्य इत्येकः शाखान्तरीयः पक्षः । पश्ववदानाचरणानन्तर मेवैतैः सावित्रादिभिर्हविर्भिः यागः क-

---

*, †, ‡ वा० सं० १९. ४९—५१, ५५—५७, ५८—६० ।

§ क्रममाश्रित्य मिदं सायणाचार्येण, अत्र तु नवर्चं संहितक- प्रथम-तृतीय-चतुर्थ्यां सूक्तं दर्शयन् ।

‖ का० श्रौ० सू० १९. १०. २१, २२, २३ ।

यीयः, तदा यज्ञपतिच्छिद्रपिधानार्थं मैत्रेया मित्रत्वादाश्विन-
हविर्निर्वापो न कर्त्तव्य इत्यपरः पक्षः ॥ ३० ॥ ३१ ॥ ३२ ॥

तत्र पूर्वपक्ष माह — "स यदि चैतयापि सोमातिपूत मिति।
'यदि' 'एतया' सौत्रामण्या 'सोमातिपूत' 'मिषज्येत्' समा-
दध्यात्, तर्हि पशुयाज्यायाग्न्ते सुमृद्व्यूहनात् पुरस्तात् 'एतैः'
सावित्रादिभिः 'हविर्भिः' प्रचरणं कर्त्तव्यम्। "यद्वा इति।
'सोम.' यद्यङ्गाणि यतिपुतः, यत एतस्मिन् यागे यज्ञस्य
यथाङ्गानि एतद्धवि.प्रचरणेन तं सोमातिपूत पुरुष मयिच्छिन-
वान् भवतीति ॥

तत्पक्षे हविरन्तरं विधत्ते — "आश्विन मु तर्हीति ॥

तस्य प्रचारकाल माह— "पय यदेति ॥ ३३ ॥

तं पक्षं निराकृत्य स्वमतं दर्शयति— "तदु तयेति।
स्पष्टोऽर्थः ॥ ३४ ॥

तस्य दक्षिणां विधत्ते — "तस्य नपुंसक इति * । नपुंसकस्य
स्त्रीपुंभेदत्वप्रतिपादकं वाक्यं स्यात्। विकल्पेन दक्षिणान्तरं
विधत्ते — "वडवा वेति †। रथं वहतीति 'रथवाही'। "कर्म-
ण्यण्" ‡। 'सा' वडवा वा दक्षिणेत्यर्थः। तस्या अपि नपुंसकत्व
मुपपादयति— "वडव रथं वहतीति। रथवहनात् स्त्रीत्वा-
भावः; स्त्रीत्वचनसद्भावात् पुंस्त्वाभावः; सौत्रामण्यपि न इति. §,

वतां' सोमदेवतायुतानां 'पितृणां' याज्यापुरोनुवाक्यारूपाः "उदीरतामवर उत्परासः"-इत्याद्यास्तिस्र ऋचः *, 'बर्हिषदां' बर्हिषि सीदताम् एतद्गुणकानां 'पितृणां' "बर्हिषदः पितर ऊत्यर्वाग्"-इत्याद्यास्तिस्र ऋचः †, 'अग्निष्वात्तानां पितृणां' "आयन्तु नः पितरः सोम्यासः"-इत्याद्यास्तिस्र ऋचः ‡ इति नवर्चः संहितायां क्रमेणाम्नाताः §; ताभिरुपस्थानं कर्त्तव्य मित्यर्थः ॥

पितृमन्त्रैरुपस्थानं प्रशंसति— "यत्र वै सोम इति। पूर्वमिन्द्रेण पीतः सोमः, अतिपूतः सन् पितॄनेव प्राप्नोत्, अतस्तन्मन्त्रोपस्थानेनेन्द्र मेव अनपूर्वं कृतवान् भवतीति ॥ २८ ॥

अथ पशुपुरोडाशार्थं सावित्रवारुणैन्द्राख्यं हविस्त्रयं विधत्ते —"अथैतानि हवींषीति ॥ २९ ॥

पुरोडाशदेवताः प्रशंसति— "अथ यत् सावित्र इति। कात्यायनः— "सोमातिपूतस्याप्येषा, अनुयाजान्ते पशुपुरोडाशार्थेऽधरत्याग्निनैन्द्र प्रागवदानेभ्य', हविर्भिर्वाश्विनाभावश्च"-इति ‖। अथ मर्थः— एषा सौत्रामणी सोमातिपूतस्यापि भैषज्यार्थं कर्त्तव्येति राजसूयाद् बहिःप्रयोगः। तत्र पशुपुरोडाशार्थं विहितान्येतानि सावित्रादिहवींषि अनुयाजान्ते यष्टव्यानि, तदा छिद्रपिधानार्थं पशुवपाचरणानन्तरं मवदानात् पुरा आग्निनैन पुरोडाशेन यागः कर्त्तव्य इत्येकः शाखान्तरीयः पक्षः। पशुवपाप्रचरणानन्तर मेवैतैः सावित्रादिभिर्हविर्भिः याग. कर-

---

*, †, ‡ वा० सं० १९ ४९—५१, ५५—५७, ५८—६०।

§ अयमभावस्य मिदं सायणाचार्यस्य, अत्र नवर्चु संहितिकप्रथम-तृतीय-चतुर्थ्यां ऋचां दर्शनात्।

‖ का० श्रौ० सू० १५ १०. २१, २२, २३।

चेत्, तदा यज्ञपतिच्छिद्रपिधानार्थं नैतया मिष्टत्वादाश्विन हविर्निर्वापो न कर्त्तव्य इत्यपरः पक्ष ॥ ३० ॥ ३१ ॥ ३२ ॥

तत्र पूर्वपक्ष माह— "स यदि हैतयापि सोमातिपूत मिति। 'यदि' 'एतया' सौत्रामण्या 'सोमातिपूतं' 'भिषज्येत्' समादध्यात्, तर्हि अनुयाजयागात् सूक्तवाकात् पुरस्तात् 'एतैः' सावित्रादिभिः 'हविर्भिः' प्रचरणं कर्त्तव्यम्। "पयांसि इति। 'सोमं' पयांसि अतिपूतं, अत एतस्मिन् काले यजमानं पयांसि एतद्धवि प्रचरणेन स सोमातिपूतं पुरुषं समर्पितवान् भवतीति॥

तत्पूर्वे हविरन्तरं विधत्ते— "आश्विनं तु तर्हीति॥

तस्य प्रचारकाल माह— "अथ यदेति॥ ३३॥

तं पक्षं निराकृत्य स्वमतं दर्शयति— "तदु तथेति। स्पष्टोऽर्थः॥ ३४॥

तत्र दक्षिणां विधत्ते— "तस्य नपुंसक इति *। नपुंसकस्य स्त्रीपुंसेतरत्वप्रतिपादकं वाक्यं स्यात्। विकल्पेन दक्षिणान्तरं विधत्ते— "अश्वा वेति †। रथं वहतीति 'रथवाही'। "कर्म स्यात्" ‡। 'सा' वडवा वा दक्षिणीयम्। तस्या अपि नपुंसकत्व मुपपादयति— 'वडवा रथं वहतीति। रथवहनात् स्त्रीत्वाभाव, स्त्रीव्यञ्जनसद्भावात् पुंस्त्वाभाव, सौत्रामण्यपि न हविः §,

---

*, † "नपुंसको दक्षिणा, रथवाही वा वडवा"—इति का० श्रौ० सू० १५. १०. २०. २१। ‡ पा० सू० ३ ३ १।

§ सौत्रामणीहविष्करणन्तु तै० सं० १. ८. २१., तै० ब्रा० १. ८. ५—६. आप० श्रौ० सू० १९. १. १—२०., "सोऽस्मि पितृलोकेऽपि पिता सौत्रामण्या यजेत"—इत्यादि च तै० सं० ५. ६. ३. १०., "न सोमो

न पशुबन्ध इत्यभिप्रायः । "तस्मात् पञ्चा रथवाही दक्षिणेति, निगमनवाक्यम् ॥ २५ ॥ ६ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् . )

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तद्यदेतया यजते वृत्रे ह वा इदं सर्वं मास यदृचो यद्यजूंषि यत् सामानि तस्मा इन्द्रो वज्रं प्राजिहीर्षत् ॥ १ ॥

स ह विष्णुमुवाच । वृत्राय वै वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्मा इन्द्रो वज्रमुद्ययाम स उद्यताद् वज्राद् वृत्रो बिभयाञ्चकार ॥ २ ॥

---

न सुरा यत् सौत्रामणी"—इति च तत्रैव १२. ८. ५. ४ । "एतावद्रूपं यज्ञस्य यद् देवैर्ब्रह्मणा कृतम् । तदेतत् सर्वं आप्नोति यज्ञे सौत्रामणी सुते"—इति सौत्रामणी प्रशंसा ॥ मा० सं० १९अ० ३१क० सुतेति पाठ ।

स होवाच । अस्ति वा ऽइदं वीर्यं तन्नु ते प्रयच्छानि मा नु * मे प्रहासीरिति तस्मै यजूंषि प्रायच्छत्तस्मै द्वितीय मुदयाम ॥ ३ ॥

स होवाच । अस्ति वा ऽइदं वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहासीरिति तस्मा ऽऋचः प्रायच्छत्तस्मै तृतीय मुदयाम ॥ ४ ॥

स होवाच † । अस्ति वा ऽइदं वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहासीरिति तस्मै सामानि प्रायच्छत्तस्मादप्येतर्ह्येव मेवैतैर्वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रे ऽथऽर्ग्भिरथ सामभिरेवम् ह्यस्मा ऽएतत् प्रायच्छत् ॥ ५ ॥

तस्य यो योनिराशय ‡ आस । त मनुपरामृश्य संलुप्याच्छिनत् § सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये विधातुरिवैषा व्यिद्याशेत तस्मात् वैधातवी नाम ‖ ॥ ६ ॥

* 'मा नु'—इति ग, घ । मा नु—इति च इद का० वैबरेय ।

† नास्त्येतत्पदद्वयं ग घ-पुस्तकयो ।

‡ योनिराश्रय—इति च इद का०—वेबरेय ।

§ मनुष्यााच्छिनत—इति का०—वेबर ।

‖ नाम—इति क नाम—इति ग ।

अथ यदैन्द्रावैष्णवꣳ हविर्भवति। इन्द्रो हि वज्र मुद्यच्छद्विष्णुरन्वतिष्ठत् ॥ ७ ॥

अथ यद् द्वादशकपालो भवति। द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्तस्माद् द्वादशकपालो भवति ॥ ८ ॥

स उभयेषां व्रीहियवाणां गृह्णाति। व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपमथ यवमयं तदृचाꣳ रूपमथ व्रीहिमयं तत् साम्नाꣳ रूपं तदेतत् त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥ ९ ॥

सर्व्वान् वा ऽएष यज्ञक्रतूनवरुन्धे। सर्व्वा इष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सो ऽस्मात् पराङिव भवत्येतावान् वै सर्व्वो यज्ञो यावानेष त्रयो वेदस्तस्यै* तद्रूपं क्रियत ऽएष योनिराश्रयस्तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथो ऽस्मान्न पराङ् भवति ॥ १० ॥

---

* 'स्तस्यै—इति च क्व' डा० वेबेरस्य ।

सर्व्वान्वा ऽएष यज्ञक्रतूनवरुन्धे। सर्व्वा-इष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत् त्रैधातव्यनया मे ऽपीष्टमसदनयापि सूया* ऽइति तस्माद्वा ऽएषा राजसूययाजिन उदवसानीयेष्टिर्भवति † ॥ ११ ॥

अथो यः सहस्रं वा भुयो वा दद्यात् ‡। तस्य हाप्युदवसानीया स्याद्रिरिचान इव वा ऽएष भवति यः सहस्रं वा भूयो वा ददात्येतद्वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदस्तत् सहस्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्याप्युदवसानीया स्यात् ॥ १२ ॥

अथो ये दीर्घसत्त्रमासीरन्। संवत्सरं वा भूयो वा तेषाᳪ हाप्युदवसानीया स्यात् सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्व्वं तेषां तस्मादु ह तेषामप्युदवसानीया स्यात् ॥ १३ ॥

---

* 'सूया'—इति च इदं वा० वेबरेण।

† '०र्भवति'—इति क। ‡ 'दद्यान'—इति ग।

अथो हैनयाप्यभिचरेत् । एतया वै भद्रसेन माजातशत्रव मारुणिरभिचचार चिप्रं किलास्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वा ऽएनयेन्द्रो वृत्रस्यास्थान मच्छिनदपि ह वा ऽएनयास्थानं छिनत्ति य एनयाभिचरति तस्मादु हैनयाप्यभिचरेत् ॥ १४ ॥

अथो हैनयापि भिषज्येत् । यं न्वेवैकयऽर्चा भिषज्येद्वैवेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात् किमु य आभिर्वेदेन तस्मादु हैनयापि भिषज्येत् ॥ १५ ॥

तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुते न शंसत्यथ स यशो न वै हिरण्येन किञ्चन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥ १६ ॥

तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥ १७ ॥

त्रीणि वासांस्यध्वर्यवे । तनुते वा ऽअध्वर्यु-

यँज्ञं तन्वते व्यासाᳩसि तथाचोपि व्यासाᳩ-
स्वध्वर्यवे गा भक्तीथे ॥ १८ ॥

ता वा एताः ॥ द्वादश वा त्रयोदश वा
दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा
संवत्सरस्य मासाः संवत्सरसम्मितैषेष्टिस्तस्माद् द्वादश
वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥ ७ ॥

॥ इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् [पू. ५.] ॥

* राजसूयान्ते कर्तव्यायाश्चैवात्युदवसानीयायाः † देवतासम्बद्धं
हविर्विधत्ते— ''ऐन्द्रावैष्णव मिति ‡। द्वादशसु कपालेषु
संस्कृत मिन्द्राविष्णुदेवताकं पुरोडाशं निर्वपेत् § ॥
‡ एतदिष्टिविधायकप्रकरणानुवादपूर्वकं देवतासम्बन्धस्तावक

मितिहास मवतारयति— "तद्यदेतयेत्यादिना *। यत्कारणा-देतयेष्ट्या यजते, तत्कारण मुच्यत इति वाक्यशेषः। "वृत्रे ह वा इति। पुरा किल वृत्रासुरे इदं सर्वं मभूत्। तदेव विशदयति— "यदृच इति। ऋग्यजुस्सामवेदाभिज्ञास्त्रयो देवताः वृत्रे विपर्यस्ता एव बभूवुरित्यर्थः। 'तस्मै' वृत्राय 'इन्द्रः' वज्रं प्रहर्तुं मैच्छत्। (१)। प्रजिहीर्षुः 'स' इन्द्रः 'विष्णु' प्रत्यवोचत्। किं मुवाचेत्याह— "वृत्राय वा इति। 'वृत्राय' हननार्थं मित्यर्थः। वज्रप्रहारं करिष्याम्यहम्, तत्र 'मा' मां त्वम् 'अनुतिष्ठस्व' मत्समीपे धाम्ना प्रदर्शयेत्यर्थः। "अनुर्लक्षणे" कर्मप्रवचनीयः †, तद्युक्ते द्वितीया ‡; तिष्ठते. "प्रकाशनस्थेयाख्ययोश्च"–इत्यात्मनेपदम् §। 'तथा इति', भक्ती-स्तथाब्रवीद् 'विष्णुः'। किं मित्यत आह— "अनु त्वेति। 'त्वा' त्वाम् अहम् 'अनु स्थास्ये' त्वत्समीपे धाम्ना प्रदर्शयि-ष्यामीत्यर्थः। त्वं 'प्रहर' निर्भयः प्रहारं कुर्वित्यभिप्रायः। तथा सति इन्द्रस्य वीर्यं वर्धते, तदवस्थापयीयते 'इति'। 'तस्मै' वृत्राय 'वज्रम्' 'उद्यच्छन्' उद्यतवान् 'इन्द्रः'। तस्माद् 'उद्यताद् वज्राद्' 'वृत्रः' असुरः 'बिभयाञ्चकार'। "भीत्रा-र्थानां भयहेतुः"–इत्यपादाने पञ्चमी ‖। बिभयाञ्चकारेति "भीह्रीत्यादिना आम् ¶॥ १, २॥

---

* इतिहासोऽयं तै० सं० २ ४ १२अनुवाकेऽपि श्रुतः।
† पा० सू० १ ४ ८४।
‡ पा० सू० २ ३ ८।
§ पा० सू० १ ३ २३।
‖ पा० सू० १ ४ २५।
¶ "भीह्रीभृहुवां श्लुवच्च"–इति पा० सू० ३, १ ३९।

"স হোবাচেতি। 'স.' তথাসবচনাদ্ ভীতো প্রত্যুবাচ। কিমিত্যত আহ— "অস্তি বা ইতি। 'ইদং বীর্য্যম্' ঋগাদিলক্ষণম্ 'অস্তি' খলু। বীরয়তি নানাপ্রকারকার্য্যারম্ভায় ঈরয়তি সদ্ বীর্য্যম্; বিনিয়তেঽনেনেতি বা বীর্য্যম্। 'তৎ নু' তদেব বীর্য্যম্ 'তে' ইন্দ্রায় 'প্রযচ্ছামি' অহ হন্তো দদানীত্যর্থঃ। তেন ত্ব 'মে' হন্যাঃ ত্বং 'মা প্রহার্ষী' প্রহারং মা কার্ষীঃ 'ইতি' সংবদন্ তস্ম 'তস্মৈ' ইন্দ্রায় 'যজুংষি' যজুর্বেদং প্রাদাৎ।

স্বয় মেবৈন বচোগ্রমমীন যজুর্বিদ্যা মাদায়, প্রত্যাসন্নিধৌ অপি আদিত্যেরিন্দ্রস্থাপর দ্বিতীয়োদ্যমন মাহ— "তস্মৈ দ্বিতীয় মিতি। ত মেব বজ্র' পুনরভ্যুদ্যতবানিত্যর্থ' ॥ ३ ॥

"স হোবাচেত্যাদি, ব্যাখ্যাতপ্রম্। 'সাম' সামবেদ মিত্যর্থঃ। "তস্মৈ তৃতীয় মিত্যাদি, স্পষ্টম্ ॥ ४ ॥

"স হোবাচেতি। এব বেদপদানামুনরণেন যামবিধান মিহ মিতি দর্শয়তি— "তস্মাদিতি। এবং কচ মিত্যত আহ— "যজুর্ভিরেবাপে ইতি ॥ ५ ॥

হষ্টেনাম্নির্বচন প্রতিপাদয়তি— "তস্য য ইতি। তস্য যজুর্বেদাদের্বীর্য্যস্য 'য' 'যোনি.' স্থানম্, 'আয়ত.' হৃদয়প্রদেশরূপং বভূব। আয়ীতেঽস্মিন্নিত্যায়ত'। 'তং' যোনিমায়তম্ 'অনুপরামৃশ্য' হৃদয়প্রদেশে কি ধারকমত্র মিতি বিচার্য্য, 'অনুদৃশ্য' হস্তেনাবেক্ষ্য 'অচ্ছিদ্রনত্' ছিন্নবান্; ইন্দ্র ইতি শেষঃ। 'সা এষা ইষ্টিঃ' ত্রৈধাতবী জাতা *। তস্মাদিদৈবিকস্য ভাবস্য ইদ মাধিযজ্ঞিকং রূপ মহৎ মিত্যর্থঃ। "তদ্যদেতস্মিন্নিতি।

---

* "বিধা ইষ্টিরস্যা ভবতি ত্রৈধাতবী"—ইতি বহুঃ।

यस्मात् 'एतस्मिन्नाशये' हृदयप्रदेशे 'त्रिधातु,' आवयवः 'इव' 'एषा' त्रयी विद्या 'आशेत' अवस्थिता, 'तस्मात्' स आग्रयस्त्रिधातुः ; त्रिधातोरियमिति विद्यात्रयात्मिका इष्टिः 'त्रैधातवी नाम' * ॥ ६ ॥

"अथ यदिति । उभयोरिन्द्राविष्ण्वोर्व्याप्तत्वात् उभयदेवत्या सा भवेदित्यभिप्रायः ॥ ७ ॥

"अथ यद् द्वादशकपाल इति । एषा त्रैधातवीष्टिः संवत्सरव्यापिनी ॥ ८ ॥

त्रयीविद्यारूपतां सम्पादयितुं हविषो व्रीहियवमयत्वं विधत्ते — "स उभयेषा मिति । 'स' व्रीह्यादिपिष्टकम् 'उभयेषाम्' 'इति' सुगमम् । अन्यत्र विकल्पं दर्शयति — अत एव कात्यायनः — "व्रीहीन् यवान् वा हविषाम्"—इति † । व्रीहिमय मिश्राये इति व्यवस्थापनात् पञ्चपदेवतास्वीर्णानां मवहननं पिष्टपेषेति द्रष्टव्यम् । अत एव सूत्रम्— "तृतीयं यवानां मध्ये"—इति ‡ । मध्ये तृतीयं भागं यवानां प्रक्षीयात्, भागद्वयं तु

---

* "यत् त्रिः प्रायच्छत्, त्रिः प्रत्यगृह्णात्, तत् त्रिधातोस्त्रिधातुत्वम्"—इति तै० ब्रा० २ ४ ११ १२ ।

† का० श्रौ० सू० २५ ७. ३० । अस्यैव मुद्रितपुस्तकेऽपपाठः ।

‡ 'अस्मिन् पुरोडाशे तृतीयं भागं यवानां मध्ये प्रक्षीयात । तत्रैव क्रमः,—प्रथमे सृष्टौ व्रीहय एव ग्राह्याः, द्वितीये सृष्टौ प्रथम एको भागो व्रीहीणाम् ततो भागद्वयं यवानाम्, एवं द्वितीयो सृष्टि, तृतीये सृष्टौ प्रथमं भागद्वयं यवानाम्, तत एको भागो व्रीहीणाम्, एव तृतीयो सृष्टिः, चतुर्थे व्रीहय एव—इति वृद्धर्षिः ।

व्रीहीणा मेव। न केवलं यज्ञानां तृतीयभागस्य मध्ये अयमेव किन्तु अधिश्रयण मपि तथैवेत्याह — "व्रीहिमय मेवाद्य इति * ॥

इत्थं त्रैधातव्याख्यस्येष्टेरूपत्वं प्रतिपाद्य राजसूययज्वनो विधेयता माह— "सैषा राजसूययाजिन इति। उत्तरेषु विनियोगेषु × राजसूयेनोदयनीयाया अभावेन माध्यन्दिनः राजसूयान्तर्भाव मापादयति चाययत्यादिवत्। अतश्च सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीत्येतावदेवात्र विधीयते— "उदवसानीयेति †। एतत्तु क्रमादेव प्राप्त मनूद्यते। उत्तमं कर्मावस्यति विसृजत्यनयेति 'उदवसानीया' यौगिकोऽयं शब्दः ॥ ९ ॥

यज्ञस्यायातयामत्वसम्पादनाय त्रैधातवीष्टिः कर्त्तव्येत्याह — "सर्वान् वा यज्ञादिना। अग्निष्टोमादिविशेषानुष्ठानाद्राजसूयस्य तदनुष्ठानेन यज्ञक्रत्वादयः सर्वेऽनुष्ठिता भवन्तीति। 'तस्य' यजमानस्य अपेक्षितकर्मणः कृतत्वादवशिष्टः 'यज्ञो' 'यातयामा' गतसारः 'इव' 'भवति'। 'सः' 'यज्ञः' 'पश्चाद्' यजमानात् कृतावशिष्टत्वेन 'पराङ्' पराचीनः 'इव' 'भवति'। यातयामत्वपरिहार मुपपादयति— "एतावानिति। 'एष त्रयः' ऋग्यजुःसामात्मक-त्रयीरूपो 'वेदः' एतत्परिमाणः सर्वो यज्ञः एतत्परिमाणः खलु। 'तस्य' त्रयीरूपस्य वेदस्य 'एतत्' स्वरूपं 'क्रियते', 'य एष त्रयो होमः'; 'तत्' तेन 'एतेन' त्रयीरूपेण 'वेदेन' 'पुनः' 'यज्ञम्' आरब्धवान् भवति, तदा पुनः 'एष' 'यज्ञः' अगतसारः स्यात्, यजमानाच्च न पराचीनः स्यात् ॥ १० ॥

---

* का० श्रौ० सू० १५. ८. २९।

† 'त्रैधातवुदवसानीया'—इति का० श्रौ० सू० १५. ८. २८।

"सर्वान् वा इत्यादि। व्याख्यातचरम्। वैधातवी 'इष्टि-रपि' देवसृष्टत्वेन प्रशस्तत्वादनुष्ठातव्या, अतः 'अनया' वैधातव्यापि मम 'इष्ट मसत्' यागः कृतो भवतु। 'अनयापि' इष्ट्या 'सर्वे' अभिजितो भूयासम् 'इति' अभिप्रायेण वैधातवी कार्येत्यर्थः। "तस्मादा एषेति, निगमनम् ॥ ११ ॥

तस्या विनियोगान्तर मप्याह— "अथो ह इति। 'सहस्रं' बहुतरं 'वा' दक्षिणा 'दद्यात्'। तथापि तस्मिन्नपि कर्मणि एषाङ्गभूता भवेत्। सा च भवन्ती आगन्तुकत्वादन्ते एव भवतीत्युदवसानीयेति व्यपदिश्यते। 'रिरिचान इव' अतिरिक्तः। 'एतत्' खलु 'सहस्रं' बहु 'वाचः' वागायतनत्वात् सुखादुत्पन्नं योऽयं वाङ्मयो वेदः 'तत्' तेन होत्रादिविषयत्वाधिकेनाधि-याज्ञिकेन त्रयेण वेदेन 'पुनराप्याययति' आपूरयति। "तस्मा-दिति, निगमनम् ॥ १२ ॥

"अथो ये दीर्घसत्त्र मित्यादि। प्रकटम्। "संवत्सरं वा भूयो वेति, दीर्घमत्रेण सम्बध्यते। "सर्वं मेवेति। वेदत्रयस्य पौरोडाशिकधातृत्वयीत्वेनेह कल्पनादित्यभिप्रायः ॥ १३ ॥

"अथो हैनयेति। अजातशत्रोरपत्यम् 'आजातशत्रवः' तम्, भद्रसेननामानं राजन्यम्, अरुणस्यापत्यम् 'आरुणिः' ऋषि-रुद्दालकः 'अभिचचार' अभिचरितवान्। "क्षिप्रं किलेति। 'क्षिप्रं किल' शीघ्रं तेन 'अस्तृणुत' अभिचारेण तं हिंसित-वानेवेत्यर्थः। एतस्मिन्नर्थे श्रुतिर्याज्ञवल्क्यं प्रमाणयति— "इति ह स्माहेति। 'इन्द्रः अपि' 'एतया' इष्ट्या 'वृत्रस्य' स्थानं वयोविधायकम् 'अच्छिनत्'। 'तस्मात्' परस्य स्थानशातनार्थम् 'एतया' अभिचार. कर्तव्य इत्यर्थः ॥ १४ ॥

"अथो एनयापि भिषज्येदिति *। अनया इष्ट्या कथं परकृताभिचारपरिहार इत्याशङ्क्य तं कैमुतिकन्यायेन समर्थयते — "एतयैवैकयेष्ट्वेति। एकयैव यद्गुणादिमन्त्रेण नाम भयस्य क्रियते, तेन परकृतबाधा परिह्रियते, 'किमु' किमुत वेदत्रयरूपयानया वेधातव्या अभिचारपरिहार इति † ॥ १५ ॥

कात्यायनेन राजसूयान्तपातिनीं मिष्टिं प्रस्तुत्य यद् दक्षिणादानं सूत्रम्— 'त्रिसन्धिस्तस्यो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे मा सन्नीधे"-इति ‡। तदिद मिदानीं विधत्ते— "तस्ये त्रीणीति। शतमानलक्षण मुक्तं पुरस्तात् §। "न वै ब्रह्मेति। अस्याय मर्थः— 'ब्रह्मा हि न प्रचरति' हवनादिक मध्वर्युवर्गवत् न करोति, 'न स्तुते' उद्गाता इव न स्तोत्रं प्रयुङ्क्ते, 'न शंसति' होतृवच्छस्त्रं न पठति। अथापि 'स' ब्रह्मा यशोरूप। 'हिरण्येन' अपि 'किञ्चन' किञ्चित् 'न कुर्वन्ति', हिरण्यं साधनं कृत्वा यद्यागादिक मुपयुञ्जते, न तु हिरण्य मेव भुञ्जन्ति। अतो

स्यापि यथोक्ता * चैत्रादिमासा † द्वादश, यदा मलिम्लुचो भवति तदा त्रयोदश। पतोऽत्रापि द्वादशत्रयोदशकपालसङ्ख्यकहविर्युक्तत्वात् संवत्सरसम्मितत्वम्, अत संवत्सररूपाया इष्टे द्वादश त्रयोदश वा दक्षिणा युक्ता इत्यर्थः ‡ ॥ १८ ॥ ७ [ ५ ५ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
रत्नाढ्यौ पञ्चसीरीश्चिदशतरुलताधेनुसौवर्णभूमी।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ कामधेनुं विधाय,
व्याख्यायी हि स्म सप्त प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमय मतुलं स्वर्णजं वर्णमुख्यं,
कार्पासीयं द्युतिमान् गुडकृत मजडो राजतं राजपूज्यः।
चाज्योत्थं प्राज्यजन्मा लवणजमखिलं मार्करं चाकरीजः,
रत्नाढ्यो रत्नरूपं गिरिं अकृत मुदा माधवाचार्यवर्यः § ॥

---

* यथोक्त—इति च।
† 'चैत्रादिमासा'—इति च क।
‡ एष वैपुल्यनीयः तै० सं० २ ३ ११—१४ अनुवाकेषु द्रष्टव्य।
§ अजवाटीपणी द्वितीयाध्यायान्ते (१४२ पृ०) द्रष्टव्या।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्यायः समाप्तः ॥ ५ ॥

---

॥ इति पञ्चमकाण्डे चतुर्थः प्रपाठकश्च समाप्तः * ॥

॥ इति सवं नाम पञ्चमं काण्डं † समाप्तम् ॥




---

* अत उपरं लिङ्ग 'कण्डिका'—इत्येव क, 'कण्डिकासंख्या १११' —इति ख ग घ। तत्र १ ब्रा० २५ क०, २ ब्रा० २१ क०, ३ ब्रा० १२ क० ४ ब्रा० १० क०, ५ ब्रा० ७ क०, ६ ब्रा० १५ क०, ७ ब्रा० १८ क०। तदाम्रां चतुर्थस्यास्मिन् प्रपाठके १११ कण्डिकाः सम्पद्यन्ते।

† अथ पञ्चमे काण्डे ब्राह्मणानां सङ्ख्या,— प्रथमे प्रपाठके ६, द्वितीये ७, तृतीये ५, चतुर्थे ७ ; सङ्कलनया २५। तत्र कण्डिकाः ४०१। प्रथमे प्रपाठके ११०, द्वितीये १०३, तृतीये ११८, चतुर्थे १११, तदतस्सर्वेषामकलनया ४०१ कण्डिकाः भूता इति सिद्धम्॥

# ॥ अथ मूलशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | प्र० | अ० | क० | पृष्ठे |
|---|---|---|---|---|---|
| प्रसुच | प्रसुव | १. | १. | ४. | २ |
| सुरा | सुरापदं | १. | २. | १६. | १८ |
| प्रजा | प्रजापति | १. | ३. | ७. | ३१ |
| वे | वै | १. | ३. | ११. | ३४ |
| दधिक्राव्ण | दधिक्राव्णः | १. | ५. | २०. | ६६ |
| सुप | सूप | १. | ६. | १६. | ८१ |
| पुत्रा | पुत्रो | १. | ६. | १८. | ८२ |
| मर्त्ये | मर्त्ये | २. | २. | १. | १२१ |
| ०र्ह्ये० | ०र्ह्यै० | २. | २. | २. | १२२ |
| वैरियं | वेरियं | २. | २. | २. | १२२ |
| इतिमुच्यते | इतिमुच्यते | २. | २. | ५. | १२१ |
| सायकमिधे | सायकमिधे | २. | ३. | ६. | १३७ |
| नाह्रा | नाह्रा | २. | ३. | १४. | १४० |
| तद्वर्षे | तद्वर्षे | २. | ४. | १२. | १५५ |
| चोयभो | पंयभो | २. | ४. | १०. | १५७ |
| यच्चामाया | यच्चामाया | २. | ७. | ४. | १८१ |
| सोम राजा | सोमराजा | २. | ७. | १२. | १८४ |
| दुत | द्रुत | ३. | ४. | १०. | २०४ |
| तत् | तद् | ४. | १. | १२. | ३०० |
| सुर्तत | सुर्तं त | ४. | ७. | १६. | ३८४ |